अर्हम्

# प्रस्तावना.

इह खलु जैनसाहित्यवेत्ता कविचक्रचक्रचूडामणिः श्रीमहामहोपाध्याय श्रीमेघाविजयगणिः कदाअवनीम्पावयाञ्चकारेत्यादि जिज्ञासायामुच्यते अयं श्रीमानष्टादशाब्द्यां श्रीतपागच्छगगनाङ्गणमणि, एकबर बादशाह प्रबोधयिता, श्रीजगद्गुरु हीरविजयसूरिपट्टपरं परानुयातः जैन शासन रसिक श्री कृपाविजयशिष्य आसीत्, स च विजयसूरिपार्श्वे 'उपाध्याय' पदवीञ्जग्राह, इति निश्चियते ।

तन्निर्मितनैषधीयपादपूर्तिरूपश्रीशान्तिनाथचरित्र प्रान्तभागेऽयमुल्लेखो दृश्यते ।

यथा—

तदनुगणधरावली पूर्वदिग्भानुमाली
विजयपदमपूर्वं हीरपूर्वं दधानः ॥ ६६ ॥
कनक विजयशर्माऽस्यान्तिषत् प्रौढधर्मा
शुचितरवरशीलः शीलनामा तदीयः
कमलविजय धीरः सिद्धि संसिद्धितीर-
स्तदनुज इह रेजे वाचक श्रीशरीरः ॥ ६७ ॥
चारित्रशब्दाद्विजयाभिधान
स्त्रयी सगर्भा धृतशीलधर्मा
एषां विनेयःकवयःकृपाद्याः
पद्मास्वरूपा समयाम्बुराशौ ॥ ६ ॥
तत् पादाम्बुजभृङ्गमेघविजयः प्राप्तस्फुरद्वाचकः ।
ख्यातिः श्रीविजयप्रभाख्य भगवत्सूरेस्तपागच्छपात् ।
नुन्नोऽयं निजमेरुपूर्वविजय प्राज्ञादि शिष्यैरिमां
चक्रे निर्मल नैषधीय वचनैः श्रीशान्ति चक्रिस्तुतिम ॥ ६९ ॥

अस्यग्रन्थकार स्यवशवृक्षएवम्

यथा--

हीरविजयः
|
कनकविजयः
|
शीलविजयः
|
कमलविजयः सिद्धिविजयः चारित्रविजय.
|
कृपाविजयः
|
मेघविजयः

अस्य हस्तविद्यादर्शकाद्धस्तसञ्जीवनग्रन्थादन्यान्यपि भिन्नभिन्न विषयाणि जैनग्रन्थान्युपलभ्यन्ते तानि यथा—

१ देवानंदाभ्युदयमहाकाव्यम् २ शान्तिनाथ चरित्रमहाकाव्यम्

---

१ सप्तसर्गात्मभूतोऽयं ग्रन्थः श्रीमाघकविविरचितस्य शिशुपालवधस्य पादपूर्तिरूपः श्रीविजयदेवसूरिचरित्रवर्णनं, रचनासमयस्तु वीक्रमीय १७२७ तमोवर्षो दर्शितः ।अयं श्री यशोविजयजी जैन ग्रन्थमालायां मुद्रापितः ।

२ नैषधीय काव्यस्य पादमेकं स्वकीयं पादत्रयं ग्रन्थितं श्री शान्तिनाथचरित्रमहाकाव्यं सुललितपद्येन रचितं, तस्यकिञ्चिद् पद्यानि पाठकानां मनोह्लादनाय दर्शितानि ।

यथा—

श्रियामभिव्यक्तमनोनुरक्तता विशालसालतितयाश्रियास्फुटा ।
तयावभासेस जगत्त्रयी विभुर्ज्वलत् प्रतापावलि कीर्तिमण्डलः ॥ १ ॥
निपीय यस्य क्षितिरक्षीणः कथा सुरासुराज्यादिसुखं बहिर्मुखम् ।
प्रपेदिरेऽन्तः स्थिरतन्मयाशयाः सदासदानन्दभृतः प्रशंसया ॥ २ ॥
यथा श्रुतस्येह निपीय तत्कथास्तथाद्रियन्ते न बुधासुधामपि ।
सुधा भूजां जन्मन तन्मनः प्रियं भवेद् भवेयत्र न तत् कथाप्रथा ॥ ३ ॥
यदीय पादाम्बुजभक्तिनिर्भरात् प्रभावतस्तुल्यतया प्रभावतः ।

३ दिग्विजयमहाकाव्यम् | ४ मेघदूत समस्यालेखः
५ चन्द्रप्रभाव्याकरणः | ६ युक्तिप्रबोध

नलःसितच्छत्रितकीर्तिमण्डलः क्षमापति प्रापयशः प्रशस्यताम् ॥ ४ ॥
द्विधापि धर्मानुगतिर्महीपतिर्दृढावधे शैशव एव शेवधिः ।
क्रमेण चक्रीविजये दिशांजिनः सराशि रासीन्महसां महोज्वलः ॥ ५ ॥
कविनासतासमयस्तु न दर्शितः किन्तु प्रतिसर्गान्तेऽयं दृश्यते—

" गच्छाधीश्वरहीरहीरविजयनाम्नानिकायेधियां ।
प्रेष्यः श्रीविजयप्रभाख्यसुगुरोः श्रीमत्तपाख्येगणे ॥
शिष्यप्राज्ञमणेः कृपादिविजयस्या शास्य मानाग्रणी ।
श्चक्रे वाचकनाम मेघविजयः शस्यां समस्यामिमाम् ॥ ६ ॥

एतेन सुलालितपद्येन विनिश्चियते, यदस्य समयः श्रीविजयप्रभसूरि समय समकालः, अत्र विषमस्थले टिपनीकाऽपि दीयते—

श्रीविविध जैनसाहित्यशास्त्रमालायां सप्तमाङ्केन प्रकाशितः ।

३ त्रयोदशसर्गात्मकोऽयं ग्रन्थः । सर्वेषु महाकाव्येषु प्रथमंगण्यते, कवीश्वरेण सुललितमनोमुग्धपद्येन रचितः । किन्तु रचना समयस्तु न प्रकाशितः ग्रन्थे श्री विजयप्रभसूरि जीवनरेखा वर्णितास्ति ।

४ यदा ग्रन्थकर्ता विहारं कुर्वन् दक्षिणदेशान्तर्गतऔरङ्गाबादनगरे चातुर्मासस्थितिञ्चकार । तदा द्विपबन्दराख्ये ( दीव ) नगरे चातुर्मासिकस्थित श्रीगच्छाधीश्वरविजयप्रभसूरेर्निकटं विज्ञप्तिपत्ररूपेण प्रेषितोऽयमुल्लेखः श्रीकविकालिदासविरचितमेघदूतकाव्यस्यान्तपादसमस्यापूर्तिस्वरूपोन्वर्थनाम्ना सुललितभाषायां वर्णितः । अयं श्री भावनगर आत्मानन्द जैनसभायां मुद्रितः ।

५ अस्मिन् ग्रन्थे कलिकालसर्वज्ञ श्रीहेमचन्द्राचार्य निर्मितानि सिद्धहेम व्याकरणस्य सूत्राण्यष्टाध्यायि परिपाटिन्त्यक्त्वा प्रयोगसिध्यनुसारेण व्यवस्थापितानि । अष्ट सहस्त्रश्लोक प्रमाणोऽयं ग्रन्थः । तत्समयस्तु वीक्रमीय १७५७ तमो वर्षः आगरा नगरे, रचितोयं ग्रन्थः; महेसाणा श्रीयशोविजय जैनपाठशालाद्वारामुद्रितः ।

६ अध्यात्मविषयकोऽयं ग्रन्थः । अस्मिन् ग्रन्थे ॐ नमः सिद्धमित्यस्य पदस्य व्याख्या, तथा जपध्यानादिविधिरपि समुल्लेखितास्ति ॥ ग्रन्थ निर्माण समयः वीक्रमीय १७१४ तमो वर्षः धर्मनगरे रचितः ।

७ मातृकाप्रसादः ८ विजयदेवमहात्म्यविवरणम्
९ सप्तसंधानमहाकाव्यम् १० ब्रह्मबोधः

७ अयमपि अध्यात्म विषयको ग्रन्थः ।

८ श्रीपन्यास वल्लभविजय गणिना निर्मिते ग्रन्थे कतिपय प्रयोगाणां स्पष्टीकरणं कृतवान् ।

९ नवसर्गात्मकोऽयं ग्रन्थः । अस्मिन् ग्रन्थे त्रिषष्ठीशलाका पङ्क्तौ समुत्पन्नानां सप्तानां महापुरुषाणां चरित्रं व्यावर्णितम् । एकस्मिन्नेव वृत्ते ऋषभदेवः शान्तिनाथः, नेमिनाथः, पार्श्वनाथः महावीरस्वामी, ये पञ्चतीर्थंकराअस्मिन्नवसर्पिणिकाले जातानि सन्ति, तथाषष्ठः कृष्णनाम वासुदेवः सप्तमो रामचन्द्राख्यो बलदेवश्चैषां सप्तानां महापुरुषाणां चरित्राणि वर्णितानि । " सप्तसंधान महाकाव्यं " इत्यन्वर्थनामाभिधानं चकार । अस्मिन्महाकाव्ये यमकश्लेषानुप्रास गाम्भीर्य भावदर्शकं कविचातुर्यवर्णनं सुन्दरालङ्कारादिकञ्च, तथा वनविहारादि नगनगरादिक वर्णनञ्च स्वशक्ति प्रागलभ्येन कृतम् ।

अस्य ग्रन्थस्य रचनाद् प्राक् परमप्रभु श्रीहेमचन्द्रसूरिणापि रचितएतन्नामको ग्रन्थो श्रूयते; तस्यानुपलब्धौ ग्रन्थोऽयं रचितः ! इत्यधःपद्येन स्पष्टयति ।

श्री हेमचन्द्रसूरीशैः सप्तसंधानमादिमम् ।
रचितं तदलाभेतु तदियं तुष्टये सताम् ॥ १ ॥

इत्यनेन पद्येन प्रागप्येतन्नामकं काव्यमासीत् ।

तत्रत्यानि कानि चिद् पद्यानि पाठक विनोदाय लिख्यन्ते यथा——

श्रीनाभिजन्मान्वयपद्मभास्करः स्तुतोऽञ्चितः श्रीमुनिसुव्रतान्वये ।
जिनः शिवायास्तु दधन्महोदयं सभासतां यद्व्रजने जयाश्रयः ॥ १ ॥
श्री अर्हदाद्यकृतशान्तिसर्ग समुद्रजन्मानवराजवर्गः ।
श्री पार्श्वनाथः शुभवर्धमानः श्रियाभिरामस्तमिह स्मरामः ॥ २ ॥
योवितरागः कृत तीर्थयागः प्रोद्यत्सभामण्डलसंविभागः ।
यो नीतिकारी भुवनोपकारी सेव्यः सभव्यैर्नवकाव्यनव्यः ॥ ३ ॥
ब्राह्मीह साऽव्यान्निपुणागमादौ यस्या रसाङ्गात्कमलोदयश्रीः ।
अद्यापि नद्याद्रवसुप्रसादात् सिताम्बराणां जनतानुवृत्तिः ॥ ४ ॥
सुखेन दोषाकरवत्समानः यदा सदम्भः सवने सशौचः ।
काव्येषु सद्भावनया—न मूढः किं वन्द्यते सज्जनवन्न नीचः ॥ ५ ॥

११ वर्षप्रबोधः                    १२ लघुत्रिषष्टीशलकापुरुषचरित्रम्

उच्छृङ्खलात्किं खलतो न विभ्येत्सभ्यस्तथेभ्यः परमार्थनाशात् ।
नाशाह्य नाशा किमुवर्धनीया श्रुत्याविहीनस्य सवर्णतायाम् ॥ ६ ॥
काठिन्यभाजो हृदयेखलस्य कावक्रता शृङ्खलमस्य नाङ्गे ।
भारक्षमस्यापि न सोऽप्रवेधः सुमेधसाऽकारि सवेधसापि ॥ ७ ॥

इत्यनेन पद्येन कविवऽर्येण प्रौढ पाण्डित्यं दर्शितम् ।

११ अध्यात्म शास्त्रविषयकोऽयग्रन्थः ।

११ ज्योतिःशास्त्रविषयकोऽयं ग्रन्थः । अस्मिन् ग्रन्थे ज्योतिर्विषयाधिकारा त्रयोदश संख्याकाः दर्शिता, यथा—देशाधिकारः वाताधिकारः देवाधिकारः संवत्सराधिकारः वत्सर निरूपणाधिकारः, अयनमासपक्षनिरूपणाधिकारः, वर्ष राजकथनाधिकारः, मेघगर्भकथनाधिकारः, तीर्थीफल कथनाधिकारः, सूर्याचार कथ, नाधिकारः ग्रहणविमर्शनाधिकारः, द्वारचतुष्टयकथनाधिकारः, शकुननिरुपणाधिकारः- तथा ग्रन्थकारेणा न्यान्यपि मतान्तर विषयाणि दर्शितानि । तथा ग्रन्थान्तेवर्षस्य शुभाशुभ ज्ञानाय गौतमीयविद्या जपादिविधिना सह दर्शिता ।

अस्य ग्रन्थस्य निर्माण कालो न दर्शितः, किन्तुविजयरत्नसूरि समयो दर्शितः ।
श्रीमत्तपागणविभुः प्रसरत्प्रभावः प्रद्योतते विजयतः प्रभनामसूरिः
तत् पट्टपद्मतरणिर्विजयादिरत्नः स्वामिगणस्थमहसाविजितद्युरत्न ॥ ९९ ॥
तच्छासने जयति विश्वविभासनेऽभूद् विद्वान् कृपादिविजयोः दिवि सेव्यमानः ।
शिष्योऽस्य मेघविजयाह्वयवाचकोऽसौ ग्रन्थःकृतःसुकृतलाभकृतेऽत्र तेनः ॥१००॥

इत्यनेन पद्येन रचना समयः स्पष्टः । ग्रन्थश्लोक प्रमाणानि एकपद्येन दर्शितानि, यथा---

अनुष्टुभां सहस्राणि त्रिणिसार्धानिमानतः ।
ग्रन्थोऽयं वर्षप्रबोधाख्यो यावन्मेरुप्रवर्तताम् ॥

अयं ग्रन्थः हीन्दिभाषायां पण्डितभगवानदासेन विकानेरस्थले मुद्रापितः । प्रथममपि संस्करणद्वयं भिन्नभिन्नस्थले मुद्रापितमासीत् । तन्मध्ये तस्याभिप्रायो न प्रकटितः । अधुना यद् प्रकाशितं तत्संशोध्य मुद्रापितः ॥

१२ अस्मिन् ग्रन्थे चतुर्विंशति तीर्थकराः, द्वादश चक्रवर्ती, नववासुदेवः, नवबलदेवः, एते सम्भूय सर्वे त्रिषष्टीमहापुरुषाभवन्ति । चात्र महापुरुषाणां सम्पूर्ण जीवन चरित्रं व्यधायि । अस्य ग्रन्थस्य हेमचन्द्र सूरिणा ३६००० श्लोकप्रमाणं,

१३ मेघदूतसमस्योल्लेखः

प्रकृत ग्रन्थे ज्योतिष् सामुद्रिक विषय दर्शकान्यन्येक विषयाणि संदृब्धानिसन्ति। पूर्वोक्तग्रन्थेषु न्यायव्याकरणसाहित्यालंकार विषये प्रौढपाण्डित्यं दर्शितम्। सखलु महाभगो न केवलं संस्कृतभाषाया एव रचयिता किन्तु गुर्जर गिरायां रासादिनिर्माणेन तज्ज्ञत्वमपि सूचयति।

अस्य ग्रन्थस्य त्रयाधिकाराः विद्यन्ते। तद्यथा दर्शनाधिकारः स्पर्शनाधिकारः रेखाविमर्शनाधिकार इति। तथा चतुर्थाधिकारोऽपिविशेषाधिकार नामको विद्यते। स्वयमेव ग्रन्थस्यादौ प्रतिज्ञातम्।

तद्यथा—

दर्शनात्स्पर्शनाच्चापि तथा रेखाविमर्शनात्।
हस्तज्ञानं त्रिधाप्रोक्तं पुरातनमहर्षिभिः॥ १॥

एतत्पद्येन निगदितमाधिकारत्रयमेव रेखा विमर्शनाधिकारे विशेषाधिकारः समावेशितः॥

तत्र प्रथमदर्शनाधिकारे हस्तप्रकारो दर्शितः हस्तनामानि, पञ्चाङ्गुलिरधिकारः हस्ते पञ्चतीर्थादिस्थापना, हस्त दर्शने को लाभो हस्तावलोकनाविधिः, हस्तःकदाविलोकनीय; कस्यपार्श्वे हस्तदिदर्शयितुः किं किं कर्तव्यम्, हस्तदर्शकस्य गुरोः किंस्वरूपं, कञ्चाचारः तस्य गुणादिवर्णनं, हस्तदर्शनपूर्वं तिथिवारनक्षत्रयोगादिकमवलोक्य हस्तोविलोकनीयः तथा विना जन्मपत्रिकामपि हस्तावलोकनेन शुभाशुभनिर्णयः।

द्वितीये स्पर्शनाधिकारे हस्तदर्शनस्वरूपं लाभालाभसुखदुःख जीवित मरण गमागमजयभङ्ग कार्याकार्यसुभाशुभंव्यावर्णितं वर्षस्य स्वरूपं, गर्भपृच्छा स्वरूपं आलिङ्गित धूमितदग्धादिकं सविस्तृतमनेकविषयं दर्शितम्।

तृतीये रेखाविमर्शनाधिकारे, रेखाया सम्पूर्णवृत्तं, मातृरेखा पितृरेखा आयुरेखा, ऊर्ध्वरेखा, दीक्षारेखा, सन्तति रेखा, सरस्वती रेखा, गतिनिर्णय रेखा, कस्याः गत्या समायातः कस्यां गत्यां गमिष्यति विद्यारेखा मणिवन्धेरेख यवमाला रेखा, इत्यादि परस्पर विरुद्धाविरुद्धदर्शकं व्यावर्णितम् रेखायाः रचितमासीत्, परं संक्षिप्तबोधाय ५००० श्लोकप्रमाणं उपाध्य प्रवरेण रचितम्।

---

१३ श्रीमान् मानतुङ्गसूरिणा संदृब्धं महामन्त्र गर्भितं कवि चातुर्य दर्शकं यस्य स्मरणेनाधिव्याधी विलयं यातः। तस्य विस्तृत टीका नेन ग्रन्थकर्त्रा रचिता।

संपूर्ण ज्ञानेन भूतभविष्यद्वर्तमान त्रिकाल ज्ञानं भाति, कस्मिन् समये किं भविष्यति शुक्लपक्षे जन्म वा कृष्णपक्षे, वामदक्षिणहस्तयोः सम्पूर्णतत्वं दर्शितम् ।

तथा चास्मिन् ग्रन्थे हस्तविषयदर्शकानि चित्राणि समावेशितानि यथा पञ्चाङ्गुली देवी चित्रं, पुरुषस्य दक्षिणवामहस्तयोः स्त्रियावाम दक्षिणहस्तयोः भिन्न भिन्न लक्षण दर्शनाय वाम दक्षिणहस्ततलयो श्चित्रद्वयं मस्तकरेखाया श्चित्रमेकं, द्वत्रिंशल्लक्षणस्य चित्रमेकं समावेशितम् ।

चात्र ग्रन्थेऽनेकविषयाणि सन्ति पठनपाठन जिज्ञासुनामतीवोपयुक्तं ग्रन्थरत्नं वर्तते ।

ग्रन्थसंशोधनसमये उपलब्धानि ग्रन्थानि

१ पुस्तकमेकं प्रातःस्मरणीय विश्ववन्द्य " मुनिमहाराजश्री मोहनलालजी जैन ज्ञानभंडार सुरत नगरतः प्राप्तमतीव शुद्धम् ।

२ पुस्तकमेकंप्राच्यविद्यासं शोधनविद्यामंन्दिर पुना ( भांडारकर इन्स्टिटय़ूट ) इत्यस्मात् प्राप्तमतीवाशुद्धम् ।

३ पुस्तकमेकं श्रीमद् योगनिष्ट जैनाचार्य बुद्धिसागरसूरि जैन ज्ञान भंडार विजापुर ( गुजरात ) इत्यस्मात् प्राप्तमतीव शुद्धम् ।

एतत् पुस्तक त्रयाधारेण भूरिपरिश्रमेणसंशोधितम् ।

जैन शिष्य ज्योतिषविद्यामहोदधि श्रीमज्जैनाचार्य श्रीजयसूरि श्वरपरमगुरुवर्य्यस्य कृपया, एतत् सम्पादितम् ।

तत् संशोधनकर्माणि विश्ववन्द्य शान्तमूर्ति परमप्रभाविक मुनिमहाराज श्री मोहनलालीय जैन संस्कृत प्राकृत जंगविद्यालयप्रधाना ध्यापस्य वेदान्तवागीश न्यायव्याकरण तर्क साहित्य निष्णातस्य बलिया मण्डलान्तरगत छाता ग्रामवास्तव्यस्य पण्डितक्षीतिश्वरशर्मणोत्यन्त सहाय्येन संशोधितम् । तद् बाढं धन्यवादं समर्पयामि ।

अथ चात्र मानुषशेमुषीसुलभंस्खलितं । शैवलं किलविहायकेवलं निर्मलं किमु नपीयतेजलम् । इतिनान्येन परमकारुणिका विद्वान्सःशोधयित्वानुगृह्णन्त्विव्याशास्ते.

श्रीदशाश्रीमाली जैनधर्मशालाभुवन
स्थल वेताल पेठ
पुण्यपत्तनम् वीर सं. २४५६
कार्तिक कृष्ण १० महावीर दीक्षापर्व.

लेखकः
प्रतापमुनिः



विश्ववंद्य परमपूज्य प्रातःस्मरणीय
**मुनिमहाराज-श्री मोहनलालजी महाराज.**

चालोद्यान प्रेस, पुणें.



परमपूज्य प्रातःस्मरणीय
मुनिमहाराज श्रीमोहनलालजीके पट्टधर शिष्य
**पन्यासजी श्रीहर्षमुनिजी महाराज.**

बालोद्यान प्रेस, पुणें.

॥ अर्हम् ॥

श्रीमज्जैनाचार्यश्रीजयसूरिभ्योनमः

श्रीमन्महामहोपाध्याय श्रीमेघविजयगणिविरचितं

# हस्तसञ्जीवनम्



ॐ ऐं ह्रीं श्रीं क्लीं अर्हं नमोनमः

ॐनमः सिद्धमर्हन्तन्ध्यायन्नितिकृताञ्जलिः ।
हस्तसञ्जीवनव्याख्याङ्कुर्वे स्मृत्वा गुरोर्गिरम् ॥ १ ॥

—तत्रादौ शिष्टाचाराय निमित्तशास्त्रे देवसान्निध्यादेव वाक् सिद्धये च मङ्गलमाह—

श्रीसङ्खेश्वरपार्श्वम्प्रणमन् ध्यायंस्तमेव जिनवृषभम् ।
हस्तप्रश्नस्य लक्षणपरीक्षणे दक्षतां वक्ष्ये ॥ १ ॥

श्रीसङ्खेश्वरपार्श्वमिति ।—

अर्हन् सिद्धो हि भगवान् एकोध्येयः सतात्त्विकैः ।
नाना नामाकृतिस्थानध्यानज्ञानासनादिभिः ॥ १ ॥
यथा सद्गुरुवाक्येन स्याद्वादपरिशीलनात् ।
लभ्यः सभ्यजनैः शुद्धज्ञानभक्तिव्रतैर्विभुः ॥ २ ॥
तत्तद्देवादि सान्निध्यात् तत्तत् कामित पूर्णात् ।
इष्टःशास्त्रकृतः पार्श्वः श्रीमान् सङ्खेश्वराश्रयः ॥ ३ ॥

तेन तं, प्रणमन्, यथावसरं कदाचिदन्यकार्ये गमनभोजन शयनादौ तमेव ध्यायन्, अहर्निशं जिनवृषभं तिर्थकरेषु मुख्यं आदेयनामानं यद्वा जिनवृषभं श्रीआदिनाथं नाभिराजसुतं किं विशिष्टं श्रियायुक्तः

शङ्खेश्वरो दक्षिणावर्तशङ्खस्तद्वत् पार्श्वं—समीपं यस्य जिनसन्निधानात्स कलकामनासिद्धेः यद्वा श्रिया चतुस्त्रिंशदतिशयरूपया ईशः समर्थस्तं पुनः किं० खं स्वर्गस्तदीश्वरा इन्द्राः पार्श्वे यस्य तम् । अत्र पार्श्ववृषभयोरेवं नमस्कारे द्वयोर्हस्तयोग्रे वक्ष्यमाण तद्ध्यानात् इन्द्रसेवा कथनेन हस्तेऽधिष्टात्री पञ्चाङ्गुलिर्देवी सा ऐन्द्री शक्तिरिति देवेन्द्राधिकारः सूचितः । " हस्तयोरिन्द्रोऽधिदैवतामिति " सौश्रुत शारीरे ॥

अथ निमित्तशास्त्राणां सर्वलोकसंमतत्त्वेन श्लिष्टनमस्कारः । श्रिया ईशं स्वामिनं विष्णुं खेश्वरः सुरेन्द्रः पार्श्वे यस्य इन्द्रानुजत्वात्. यद्वा श्रीश्च संखेश्वरः पाञ्चजन्यः पार्श्वे यस्य शंखचक्रादि धारित्वात्, अनेन हस्ते वक्ष्यमाण लक्षणज्ञापनं जिनवृषभं दैत्यजेषु मुख्यं अनेन शास्त्रविपक्षं नास्तिकादिध्वंसः ख्यापितः । हरभक्तमते—श्रियायुक्तः ईशो भवानीपतिस्तम् । किं—जिनोऽन्यसिंहादिस्वापदजेता वृषभोयस्य, अनेन इश्वरस्य प्रभुत्वशक्तिर्निवेदिता यत्प्रसादान्निर्बलोऽपि सबलस्तस्य प्रभावे किमुच्यत इति शेषं स्पष्टम् ॥ १ ॥

अथ लक्षणविद्या प्रकाशकत्वात् श्रीऋषभदेवस्य स्वतोऽप्याशीर्वादलक्षणं ब्रह्मणः श्लेषेण मङ्गलमाह—

**श्रीनाभेयः प्रभुर्जीयात् सर्वज्ञो जगदीश्वरः ।**
**येन लाक्षणिकी विद्या निर्दिष्टा भुवनश्रियै ॥ २ ॥**

श्रीनाभेय इति । लक्षणमिह स्त्रीपुरुषाङ्गाकाररूपं यद्वातदुपलक्षणात् सर्वाः द्वासप्ततिकलाः पुरुषस्य; चतुषष्टिकलाः स्त्रीणां; श्रीऋषभेण भगवता प्रकाशिता, इत्ययं स्मरणीयोऽधिकारात् । विधिपक्षे येन विद्या ब्राह्मी शक्तिरूपा निर्दिष्टा—प्रकाशिता प्रादुः कृताजनिता इति यावत् किं० लाक्षणिकी लक्षणप्रधाना तत्र धर्ममोक्षयोर्याविद्यातल्लक्षणं विद्याचाङ्गुष्टमूलजैरिति वक्ष्यते । पठनपाठनरूपाविद्यातल्लक्षणं दक्षिणहस्तकरभे काम विद्या संगीत चातुर्यादिविज्ञानं तल्लक्षणं वामहस्ते विद्यारेखा । इति यद्वा

लक्षणं व्याकरणसूत्रं—उदात्तानुदात्तादि स्वरपूर्वं शब्दानुशासनं तत् प्रधाना वैदिकी यद्वा लक्षणा संभवा लक्षणा शब्दस्य द्वितीयावृत्तिरनया साहित्यशास्त्रं सर्वमावेदितम् । लक्षणमसाधरणधर्मस्तत्प्रधाना तर्कविद्या लक्षणं हस्ते दीक्षारेखादि लक्षणं तत् प्रधाना अगमविद्या व्रतं विना आगमानधिकारात् व्रतमपि करलक्षणादेवज्ञात्वादेयं यदुक्तं कररेखाप्रकरणे—

[1]इयकरलखणमेयं समासओदेसियं जणस्सहियं ।
पुव्वायरिएहिं नरं परिखिऊणय वयं दिज्झा ॥ १ ॥

यद्वा—

[2]धम्मो मंगलमुक्किट्ठं" इति धर्म लक्षणं, अंहिसा संजमो तवो इतिविभागः

तथा—

यथा चतुर्भिः कनकं परीक्ष्यते निर्घर्षणछेदनतापताडनैः ।
तथैव धर्मो विदुषा परीक्ष्यते श्रुतेन शीलेन तपो दया गुणैः ॥ १ ॥

ततः परीक्षाया लक्षणं विना अयोग्यात्लक्षणस्यैव प्राधान्यं ततो लाक्षणिकीति वचसा सकलविद्यात्मकस्य भारत्या अङस्य संग्रहः ॥ २ ॥

"आद्यन्त ग्रहणे मध्यग्रहणमिति" न्यायात् श्रीऋषभाशीर्वादमुक्त्वा श्रीवर्द्धमानप्रभोश्चरमतीर्थकरस्य शासननेतुराशीमङ्गलं पुष्टं मङ्गलं पुष्टविघ्नविनाशायेत्याशंसायामाह—

श्रीवर्धमानो जयतु सर्वज्ञानि शिरोमणिः ।
पञ्चहस्तोत्तरोवीरः सिद्धार्थनृपनन्दनः ॥ ३ ॥

---

[1]इतिकरलक्षणमिदं समासतः देशितं जनस्यहितम्
पूर्वाचार्यैः नरं परीक्ष्य व्रतं दीयते ॥ १ ॥

[2]धम्मोमङ्गलमुक्किट्ठं अहिंसा संयमो तवो
देवावितं नमंसंति जस्स धम्मे सयामणो ॥ १ ॥
धर्मो मङ्गलमुत्कृष्टमहिंसा संजमः तपः
देवाअपि तं नमस्यान्ति यस्य धर्मे सदामनः ॥ १ ॥

दशवैकालिकसूत्र अ० १. गा० १

श्रीवर्द्धमान इति । हस्त—उत्तरो यासां ता हस्तोत्तरा, उत्तराफाल्गुन्यः पञ्चसु अवतारो जन्मादिस्थानेषु यस्य, । अत्र हस्तनक्षत्रस्य सवितृदैवतत्त्वेन प्राधान्यार्थमेवं सूत्रन्यासो न; चेदुत्तराफाल्गुनीरेवसाक्षादवक्ष्यत् । तेनास्मिन् ग्रन्थेऽपि हस्तनक्षत्रस्यैव हस्तनिरीक्षणे मुख्यता इत्यग्रे वक्ष्यते । तदप्राप्तौ हस्तोत्तरत्वादुत्तरा फाल्गुन्येऽपि तासामपि अर्यमदेवत्वात्, मतान्तरे हस्तस्य नक्षत्रं इत्यर्थस्तदा हस्तोहकारादिनामा तन्नक्षत्रं पुनर्वसू तयोरप्यादित्यत्वात् पुष्यस्य सर्वकार्येषु दीक्षा विवाहवर्जितेषु इष्टत्वात्, गुरुदैवतत्वात् हस्तोहस्तस्य नामनक्षत्रं पुनर्वसू तदुत्तरत्वाच्च; तथा चित्राया अपि त्वष्टृदेवत्वात् हस्तादुत्तरत्वाच्च मुख्यत्वं ज्ञेयं, एवं पञ्चशाखत्वात्करवीक्षणे पञ्चनक्षत्राणि ग्राह्याणि । अग्रे वामहस्तावलोकनमपि वक्ष्यते, तेन चन्द्र दैवतत्वात् मृगशिरः अनुराधा मित्रदेवत्वात् २ रेवतीपुषदेवत्वात् सूर्यपत्नी भावाच्च इति नक्षत्र त्रयमपि स्त्रीहस्तवीक्षणे गृह्यत एवेति सूचितम् ।

अन्यतीर्थीयमते—पञ्चसंख्याका हस्ता देवत्वेन चत्वारोभुजाः पञ्चमोहस्तिमुखत्वात् शुण्डादण्ड इति पञ्चहस्तास्तैरुत्तरः प्रधानो गणेशो जयतु । किं० श्रिया वर्धमानः पुनः किं० सिद्धाः प्रतिष्ठां प्राप्ता ये अर्थाः कार्याणि तैर्नृपाणामप्यानन्दहेतुः समृद्धिकर्ता ॥ ३ ॥

अथाभिधेयस्याकारमाह—

**अङ्गविद्यानिमित्तानामष्टानामपि गीयते ।**
**मुख्याशुभाशुभज्ञाने नारदर्षिनिवेदिता ॥ ४ ॥**

अङ्गेति । अष्टानां निमित्तानां भूतभवद्भविष्यद्वस्तु ज्ञानस्य कारणानां नतु पदार्थोत्पादहेतूनां मुख्यासर्वनिमित्तानां तदन्तर्भावात् तिर्यङ्मनुष्याणां सत्त्वादि—स्वभाववातादि—प्रकृतिरसादि—धातु शरीरवर्णादि निम्नोन्नताङ्गप्रत्यङ्गदर्शनस्पर्शनादिना सुखदुःखादिज्ञानमाङ्गमितिप्राचामुक्तेः । तत एवोक्तं—श्रीसमवायाङ्ग सूत्रवृत्तौ, अङ्गविद्यासूत्रे लक्षश्लोकप्रमाणं द्वात्रिंशत् । कोटिप्रमाणवार्त्तिकमपरिमितं, शेषनिमित्तानां सूत्रं सहस्रं श्लोकावृत्तयो लक्ष-

मिताः वार्तिकं कोटिश्लोकप्रमाणमिति । साम्प्रतं तु कालदोषान्मेधाद्यपचयेन अङ्गविद्यां प्रवक्ष्यामि । नारदेन स्वयं कृतामित्यादिरङ्गविद्यास्वल्पालभ्यते । तथापि ग्रन्थानुमानादुच्यते । तत्र पूर्वं तिथिचक्रं कामशास्त्रात् यत उक्तं. "गौरिका पुत्रेण ऊद्र्वोरिः स्थलवामदक्षिणकरे वक्षोरुहोरुद्वये नाभिर्गुह्यललाटजाठरकटीपृष्ठेषु तिष्ठत्यसौ कक्ष श्रोणिभूजेषु च प्रनिगदं, प्रारभ्य कृष्णामधःश्वेतायाः प्रवृति क्रमेण मदनो मूर्द्धानमारोहति"! अनङ्गरङ्गे तु सीमन्ता १ क्ष्य २ धरे ३ कपोल ४ तदधः ५ कक्षा ६ कुचो ७ रःस्थले ८ नाभि ९ श्रोणि १० वराङ्ग ११ जानुविषये १२ गुल्फे १३ पदे १४ गुंष्टके १५ ॥

कृष्णाकृष्णप्रवृत्तितो मनसिजस्तिष्टेत् क्रमाद्योषितां ।
वामाङ्गेष्वध ऊर्ध्वतोभिगमनान्मासस्य पक्षद्वये ॥१॥

नंदिकेश्वरमते सर्वजातिसाधारणत्वे पुनरेवमङ्गुष्टे १. पद २ गुल्फ ३ जानु ४ जघने ५ नाभौच ६ वक्षःस्थले ७ कक्षे ८ कण्ठ ९ कपोल १० दन्त वसने ११ नेला १२ लिके १३ मूर्द्धनि १४ शुक्लाऽशुक्ल विभागतो मृगदृशामङ्गेष्वनङ्गस्थितिरूर्ध्वाऽधो गमनेन वामपदगा पक्षद्वये लक्षयेत् ॥ १ ॥ दक्षिणपादाङ्गूष्टमारभ्य आशिरसं पञ्चदशस्थानेषु पूर्णिमा पर्य्यन्तं कन्दर्प—उर्ध्वं दक्षिणभागेनारोहति । कृष्णप्रतिपदमारभ्य वामभागे मस्तकादङ्गूष्टपर्य्यन्तं क्रमेणावरोहति इत्यर्थः । विवेकविलासे तुपादाङ्गुष्टे नेत्याद्यग्रे वक्ष्यते ।

———

# इति तिथिचक्रम्.

"वारचक्रं स्वरोदयशास्त्रात्"। रविर्गुरुः शनिर्भौमश्चत्वारो दक्षिणोदयाः। सोमः शुक्रबुधौ वामे कार्यसिद्धिविधायकाः ॥ १ ॥

नरस्य दक्षिणाङ्गेऽङ्गुष्ठतः प्रारभ्य चतुर्धा भागे जानुपर्यन्तं स्पर्शे रविः, कटिपर्य्यन्तं गुरुः, हृदयपर्यन्तं शनिः, शिरपर्य्यन्तं मङ्गलः, एवं वामे त्रेधाभागः शीर्षादुदरं यावत् चन्द्रः जङ्घार्द्धंयावत् शुक्रः, पादपर्य्यन्तं बुधः।

इति स्पर्शद्वारेण **शुभाशुभज्ञानमिति वारचक्रम्**।

दक्षिणः कृष्णः पक्षो वामः शुक्लः। इति **पक्षचक्रम्**।

दक्षिणे भागे नरस्य दक्षिणायनं वामे उत्तरायणम्, इति **अयनचक्रम्** ॥

तत्र नरदेहस्य षोढाभागेऽङ्गुष्टतः कर्कादिषट्कं, दक्षिणे तेन पौषो मूर्द्धनि। दक्षिणभागे वामे माघादिषट्कं, शीर्षादारभ्याङ्गुष्ठे त्वाषाढः। इति **मासचक्रम्** ॥

नरदेहं त्रयोदशभागे अश्विन्यादीनित्रयोदशनक्षत्राणि अङ्गुष्ठादारभ्य शीर्षं यावत्, शिखायां चित्रा, ततः पुनर्वामे त्रयोदशाङ्गुष्ठे रेवत्यन्तानि ॥ इति **नक्षत्रचक्रम्** ॥

नरस्य नामराश्यादिषट्कं दक्षिणभागे ऊर्ध्वं चटत् वामे षट्कमुत्तरत् स्त्रिया वामे चटत् दक्षिणे उत्तरत्। इति **राशिचक्रम** ॥

मूर्द्धनि नरस्य अमावसीपादयोः पूर्णिमा स्पष्टा, तिथि स्थाने द्वे द्वे वर्षे इति त्रिंशद्वर्षाणि प्रभवादीनि दक्षिणे वर्द्धमानान्यारोहात्। ततस्त्रिंशद्वर्षाणि वामेऽवरोहात्। षष्टिवर्षात्परत आयुरादिज्ञानाय स्वजन्मतो दक्षिणे त्रिंशद्वर्षाणि तथैव वामेऽपि त्रिंशद्वर्षाणि पुनः कृष्णपक्षे अङ्गविद्यायां तत्तदवयवस्पर्शे तावंति वर्षाणि शुक्लपक्षेऽङ्गविद्यायां द्वितीयवारं त्रिंशद्वर्षाणि विचिन्त्यानि दक्षिणभागे तेन शुक्ले पृष्टं, मम कियदायुः तदा कस्यापि पुंसा-

श्रेष्ठा दर्शने दक्षिणपार्श्वस्य तीर्थ्यापेक्षया तुर्येवर्षापेक्षया सप्तमेऽशे स्पृष्टे सप्तषष्टिवर्षायुरिति वाच्यं । कृष्णपक्षे सप्तमांशदक्षिणे स्पृष्टे सप्तवर्षायुर्वामे सप्तत्रिंशत् तेन शुक्ले तथा स्पर्शात् सप्तषष्टिरिति कृष्णपक्षे वामसप्तमांश स्पर्शे सप्त नवतिरिति । यतो–हि शुक्लपक्षे वामसप्तमांशस्पर्शे सप्त त्रिंशत् दक्षिणे सप्तषष्टि इति वर्षचक्रम् । तथा बृहस्पतेरपेक्षया द्वादशवर्षभ्रान्तौ बृहज्जातकवृत्तौ—अङ्गस्पर्शाद्वर्षज्ञानं पादौसगुल्फौ प्रथमं प्रदिष्टं जङ्घे द्वितीयं तु स जानुचक्रे मेढ्रोरुथमुष्कांश्चततस्तृतीयं नाभिः कटिश्चेति चतुर्थमाहुः ॥ १ ॥ " उदरं कथयन्ति पञ्चमं हृदयं षष्ट-मित्यादि तथा तिथिवारश्च नक्षत्रं पृच्छकाक्षरमिश्रितं तन्नेत्रेण हरेद्भागं शेषं पृच्छा समुच्यते ॥ २ ॥ एकेन धातुर्द्वाभ्यां च जीवः शून्येन मूलकम् एवं स्यान्निश्चयः प्रश्नात्तथा दर्शनतोऽपि सः ॥ २ ॥ दक्षिणे धातुचिन्ता स्याद्वामाङ्गे जीवचिन्तनं समं विलोकते यस्तु तच्चिन्ता मूलमुच्यते ॥ ३ ॥ इयं दर्शनादङ्गविद्या दूरमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् । स्पृशन्तं ना-भिना शास्य केशरोमनखद्विजान् गुह्यपृष्टस्तनग्रीवा जठरानामिकाङ्गुली इति वाग्भटीये शारीरे षष्ठाध्याये स्पर्शादेव सूक्ष्मधिया पर्यालोचने नष्टजन्मादि सर्व पृच्छा विमर्शो भवतीत्यतो मुख्या प्रस्तुतग्रन्थस्य तत एव निर्ग-मात् ॥ ४ ॥

अष्टापि निमित्तानि नामतः प्राह—

अङ्गं स्वप्नः स्वरश्चैव भौमव्यञ्जनलक्षणे ।
उत्पात मन्तरिक्षं च निमित्तं स्मृतमष्टधा ॥ ५ ॥

अङ्गऽमिति । जीवस्योत्पत्तावाहारेण प्रथममङ्गलाभः ततः स्वप्नोऽ-विद्यारूपस्ततः स्वरादय इति । क्रमहेतुः तत्राङ्गविद्या प्रागुक्ता—पुंसां दक्षि-णाङ्गे, वामाङ्गे स्त्रीणां; स्फुरणं शुभं, तथा नृणां दिगवलोकचेष्टा भाषितपल्लीप्रपाताद्यवयवस्पर्शतोऽपि शुभाशुभमित्यादेस्तत्रान्तर्भावात् । स्वप्नस्तुसुप्तजाग्रदवस्थितसंस्कारपरिणतात्ममनसो सम्बन्धजन्यो विकल्पः, बाह्येन्द्रियाणां संकोचे मनसः किञ्चिदुद्बोधे भूतभवद्भविष्यद्वस्तुविज्ञानहेतुः ।

तद्विस्तरस्तु भगवतीसूत्रात्तथा विवेकविलासादि प्रकरणेषु स्वप्नाध्यायादेव वेद्यः। स्वरशद्वेन शकुनरुतं, बालकुमारयुववृद्धमृत्युरूपस्वरपञ्चकं स्वरोदयशास्त्रे नासिकास्वरः, चूडामणिशास्त्रे प्रश्नस्वरादिसर्वस्वरग्रहणं सचायमपि महानिमित्तं वसन्ततराजनरपतिजयचर्या स्वरोदयग्रन्थेषु प्रपञ्चितः। भौमं—भूमिभागलक्षणादि इत्युक्तं समवायाङ्ग वृत्तौ देशग्रामोदरपि भूमिविशेषत्त्वात्तद्विचारोऽपिभौममुच्यते, अतएवस्थानाङ्ग; वृत्तावप्युक्तं, भूमिविकारो भौमं भूकम्पादि। अन्यदपि भूवोघनशुषिरस्निग्धादिज्ञानं पूर्वादिगृहसूलन्यासेन वा वृद्धिहान्यादिज्ञानं निधिज्ञानं देशलभ्यालभ्ययज्ञानं, सर्वंभूमिसम्बधाद्भौममेवं, व्यञ्जनमषीतिलकलाञ्छनव्रणघातादिनाशुभाशुभवोधो लक्षणं पाणिपादे हृदयाद्यवयवे वा रेखा विशेषः इह भवति।

सप्तरक्तः षडुन्नतः पञ्चसूक्ष्मदीर्घश्च।
त्रिविपुललघुगंम्भीरो द्वात्रिंशल्लक्षणः सपुमान्॥ १॥

इति वा लक्षणं, रुढयरुढिकथनं तु इहभवतीत्यादि सूत्रं सामुद्रिकन्य तदङ्गविद्यायां दर्शनान्तरभूतं साम्प्रतं लोको लक्षणमाहेत्याशयेन।

उल्कापाते प्रजापीडा निर्घाते भूपतिक्षयः।
अनावृष्टिश्च दिग्दाहे दुर्भिक्षं पांशुवर्षणे॥ १॥

इत्युत्पातफलम्

भूमिकम्परजोवृष्टिर्दिग् दाहोऽकालवर्षणम्॥
इत्याद्याकस्मिकं सर्वमुत्पात इतिकीर्त्यते॥ १॥

**स्थानाङ्ग** वृत्तौ तु उत्पातः सहजरुधिरवृष्ट्यादिरिति अन्यदपि वस्त्रादिषु छिद्रे उंदरादिदृष्टे दग्धे शय्यादिभङ्गे च देवांशादिना सुखदुःखादिज्ञानमप्युत्पात एवान्तर्भवति। अन्तरिक्षं तु आकाशं तत्र भवमान्त रिक्षं गन्धर्वनगरकपिहसिततारापातकेतूदयसूर्यचन्द्रग्रहणपरिविपुरन्दरधनुर्मत्स्यामोघग्रहोदयास्तवक्रमार्गविद्युद्गर्जारवोद्दण्डवातादि। एतदष्टनिमित्तज्ञाने सर्ववस्तु श्रुतवलेन ज्ञायते। अत्र काल परिहान्या सप्तनिमित्तानां संक्षेपे अन्यमन्तरिक्षं तत् किञ्चिद्विस्तृतमुपलभ्यते। ततो लक्ष

णशास्त्रेऽपि तिथिचक्रादिविमर्शो वक्ष्यते । ननु अट्ठानिमित्तं गाइदिव्वुपायं तालिक्ख भोमं च अंगसरवजणंलखणच तिविहं मुणिक्किं ॥ १ ॥ सुत्तं वित्ती तहवति अंच पावसुय मउणतीसविहंगंधव्वनढवत्थुं आउंधणुवेय संजुत्तं ॥ २ ॥ इति वचनात् कथमत्र जैनर्षीणामाधिकार इति चेन्न, पापाशयवतां मिथ्यादृशां परिग्रहे पापश्रुतत्वं सम्यक्त्ववतां तद्गृहे सम्यक् श्रुतत्त्वादिति व्यक्तं नंदिसूत्रे ॥ ३ ॥

अथ प्रकृतस्यावसरमाह—

**अङ्गे हस्तः प्रशस्तोऽयं शीर्षादपि विशिष्यते ।**
**साध्यन्ते पादशौचाद्या धार्मिक्ये येन सत्क्रियाः ॥ ६ ॥**

अङ्ग इति । सर्वस्मिन्नपि शरीरे मुख्यो हस्तः, शीर्षं वराङ्गं, ततोऽपि विशिष्यते, विशेषं गुणैरधिकतां प्राप्नोति । स्वतः एव कर्मकर्त्तरि उक्तिः क्रियेन्द्रियाणां वाक्पाणिपादपायूपस्थरूपाणां मध्ये मुख्यत्वात् ज्ञानेन्द्रियस्य स्पर्शनादेरपि मार्जनादिना तदुपकाराच्च, ननु ज्ञानं हि सर्वत्र प्रवर्तकं निवर्तकं च, तस्मादेवलोकेऽर्थसंसिद्धेः ज्ञानेन्द्रियाणि स्पर्शनादीनि कण्ठादुपर्येव शेषकायस्य जडत्वात्, अतएव सामुद्रिकेप्युक्तं—मुखमर्द्धं शरीरस्य सर्वं वा मुखमुच्यते । ततोऽपि नासिका श्रेष्ठा नासिकाया.स्तुलोचने ॥ १ ॥ यद्यपि-हस्ते सर्वलक्षणस्थानादतिशयो वक्ष्यते तथापि नक्षोदक्षमो नेत्रादेरपि लक्षकत्वात्तदुक्तं--

" यथा नेत्रे तथाशीलं यथा नाशा तथार्जवमिति " । अन्यथा हस्तं विहाय शेषसामुद्रिकशास्त्रं व्यर्थं स्यात् इति चेन्न, सर्वावयव सयत्वेन हस्तान्नेत्रादेरपिशुभाशुभादिज्ञप्तेः नचैवं नेत्रादेर्हस्तादिसर्वावयवज्ञानं ॥ १ ॥ नच ज्ञानाङ्गत्त्वात्तन्मुख्यत्वं क्रियां विनाज्ञानस्य । प्रयोजकत्वात्, यदुक्तं--क्रियैव फलदापुंसां न ज्ञानं फलदं मतं । यतः स्त्रीभक्ष्यभोगज्ञो न ज्ञानात् सुखितो भवेत् ॥ १ ॥ बालस्य ज्ञानेऽपि स्तन्यपानक्रिया प्रवृत्तेस्तृप्तिसिद्धेः केवलयापिक्रिययाभ्यासाद् ज्ञानोपलम्भाच्च । अतएव मिथ्या स्वरूपापिक्रियैव

यथाप्रवृतकरणादिरूपासम्यक्त्वभूमिं नयति। यस्यां ज्ञानमुदेति प्राप्तेऽपि केवल-ज्ञाने क्रियैवानन्तर्येण शिवसाधिकेतिपर्यन्ते ध्यानादिक्रियारम्भ इत्यादिग्रन्थान्त-रात् क्रियायां मुख्योद्दस्तस्तदेवाह—प्रातःउदात्तादिस्वरन्यासपूर्वं वन्दनादिसूत्रभ-णनं वेदोच्चारोवा शौचं स्नानादियत्पूर्वकः पूजाजपशास्त्राध्ययनादिरभ्यासः सकलपरमार्थरूपशीवसाधनं प्रवर्तते; नच जैनानां स्वरप्राधान्यं नास्तीतिवाच्यम् । "नाणाघोसानाणावंजणा " इति भगवत्यां तदुक्तेः प्रकरणादावपि "**नमोस्तुवर्द्धमानाय**" इत्यादि स्तुतित्रयं वर्द्धमानस्वरेण पठनीयमित्यादौ स्वरापयोगात्, अतएव पाक्षिकप्रतिक्रमणे **संसारदावादिस्तुतिपाठे** उच्चैर्घोषः पारंपर्यसिद्धः । श्रीमदर्हद्भगवद्वचनेऽप्यौदात्यं मेघगम्भीरघोषत्वामिति स्फुटं, तद्दर्शनात् एवं ज्ञाताङ्गे शुकेनोक्तं " सोय मूले धम्मे पणते " श्रीथावच्चापुत्र भगवता भणितं--" विणयमूलेधम्मे पणत्ते " इति दर्शनान्न श्रमणीयं वादाधिकारात्, अन्यथा द्रव्यभावाभ्यां मनोवाक्कायैः शौचंदशविधंयतिधर्मे श्रूयत एव " श्री स्थानाङ्गसूत्र-पाठे " दसविहे ओरालिए असज्झाए पणत्ते " इत्यादिना प्रकटमेव शौचो-पलम्भात् नचात्र भावशौचमितिध्येयं श्रीजैनमते द्रव्यभावयोर्द्वयोरपि यथावसरमुपदेशात् विधिना पूजाकरणे प्रसक्तस्य स्नानस्याप्यवश्यकत्व प्रतीतेः ॥ मूढाचीर्णानर्गलजलनदीमध्यनिमज्जनादिना स्नानस्यैव प्रतिषे-धात्, गङ्गायां स्नानमित्यत्र, गङ्गायां घोष इत्यादिवल्लक्षणया तट एव स्नान-मुचितं, तदन्यथा ब्रुडनमकराशनादेर्दोषस्याध्यक्षादिति नात्रबहूच्यतेऽ-नधिकारात् पाठशौचं पाठनिर्दोषत्वं वा तत् प्रभृतय विरुद्धो धर्मो ऐहिकामु-ष्मिकफल दायिन्यो धार्मिकय इति धर्म शब्दे नात्र—लोकद्वया ग्राह्यः ॥ ६ ॥

एतदेव सामुदिकशास्त्रमूलभूतस्य कलौ तद्व्यवहारकारणशास्त्रनिर्मातुः परमर्षेः संमत्याद्दढऽयति ॥

सर्वाङ्गे लक्षणप्रेक्षा व्याकुलानां नृणां मुदे ।
श्रीसमुद्रेण मुनिना तेन हस्तः प्रकाशितः ॥ ७ ॥

सर्वाङ्ग इति । शिरः प्रभृति पादाङ्गुष्ठपर्यन्तलक्षणंपरीक्षाहि कालस्य वैषम्यात् सर्वावयवनिष्ठान कर्तुं शक्यते मेधापरिहानेस्तां विना शुभाशुभनिर्णयोऽपि नैवेत्युपकारपरेण तत्तद्विद्या मूलर्षीणां गौतमादीनां विद्याग्रन्थेषु अवश्यं स्मरणं कार्यमेवेत्यत्रापि स्मरणीयेन श्रीसमुद्रसूरिणा परमतेऽपि गौतमादिवदाराध्येन मुनिना मन्यते, इति मुनिर्ज्ञानपात्रं तेन कर्त्रा तेन कारणेन सर्वाङ्गप्रधानत्त्वात् सर्वाङ्गावयवस्वरूपमयत्वात् सर्ववस्तुप्रकाशकत्त्वात्, सर्वे कार्य साधकत्वाच्च भोजनक्रियादिनामुखादेरप्युकारकोहस्तः प्रकटीकृतः तपोविधाने प्रसन्न चन्द्रादेरिव ऊर्ध्वीकरणात् अत एव वैद्याः सर्वाङ्गारोग्यतां हस्ते नैवावधारयन्ति । सिद्धाअपि औषध मन्त्रादौ हस्तसिद्धिमेवादिशन्ति । भूदेवा अपि हस्तं प्रसार्याशीर्वादं निगदन्ति दानिनोऽपि हस्ते जलादिना धनसंकल्पं कारयन्ति ॥ ७ ॥

अथ हस्तस्य सकलज्ञानमूलतत्वदर्शनाय यथावसरं प्रयोगाय ज्ञानं त्रिधा प्ररूपयति ।

**दर्शनात् स्पर्शनाच्चापि तथा रेखाविमर्शनात् ।**
**हस्तज्ञानं त्रिधा प्रोक्तं पुरातनं महर्षिभिः ॥ ८ ॥**

दर्शनादिति । तथा हि वैद्यो दर्शनात् १ स्पर्शनात् २ नाडी विमर्शनात् ३ निरोगत्वं निश्चिनोति तद्वदत्रापि ॥ ८ ॥

प्रथमस्य सम्मतिमाह—

**प्रातः प्रथममेवाथ स्वपाणिं दक्षिणं पुमान् ।**
**पश्येद्वामं तु वामाक्षी निजपुण्यप्रकाशकम् ॥ ९ ॥**

प्रातरिति । पुमान् प्रथममेव—अन्यकार्येभ्यः आदौ दक्षिणं तु पुनर्वामं स्वं पाणिं पश्येत् इत्यन्वयः ।

तत्र विशेषणद्वारा हेतुः वामाक्षी च निजः स्वात्मा च वामाक्षी निजौ तयोः पुण्यं शुभं तत् साहचर्यादशुभं पाप यद्वा पुण्यशब्देन धर्मः, स्वभावस्तस्य प्रकाशकं व्यञ्जकमादर्शवत् । तथा च पुरुषस्य प्राधान्यादेव निर्देशात्

स्त्रीस्वभावादिनिर्णयोऽप्यन्तर्भूतः हस्तद्वयायुरेखान्तयोजन इत्यादिना अञ्जलिवीक्षणस्यैव वक्ष्यमाणत्वात् योगार्थे पर्यङ्कासन्ने भोगार्थे विवाहाद्यर्थे हस्तद्वययोगात्, अत एवागमे—" जुवइ जुवाणे हत्थेण गिहिणिज्जा " इति करयल परिग्गहियं दसनंहसिरसावत्तं मन्थए अंजलि इति " ॥ हेतू भयात्मकस्य ॐनम इत्यस्य ध्यानेन उभयत्र दर्शनादि त्रयस्य योगादितिभावः । यद्वा अथेत्यव्ययमानन्तर्यार्थे पुरुषः प्रथमं दक्षिणं तदन्तरं वाममित्युभयसंग्रहेऽपि दृष्टिन्यासे पुरुषत्वात्, पदोक्षेपरितिवत्क्रमोऽयं तेनास्त्रियाः पूर्वं वामस्य ततो दक्षिणस्येत्यर्थात् सिद्धम् । यद्वा वामाक्षीती पदंभिन्नमेव व्याख्येयम् । परमेकस्यैव हस्तवीक्षणं पुंसः स्त्रिया वेति न चिन्त्यं उभयेनैव सर्वज्ञानसिद्धेः । अत एवबालस्यापि तृतीये दिने चन्द्रसूर्ययोरुभयोर्दर्शनमागमे भगवत्यां महाबलाधिकारे पर्यूषणाकल्पसूत्रे च भणितम् ननुदर्शनक्रमस्य किं भाविव्यञ्जक मात्रेण लक्षणे नार्थोपलम्भात् पौर्वापर्यानुपयोगादिति चेन्न; श्रद्धाविशेषे "यादृशीभावना यस्य सिद्धिर्भवति तादृशिति " इतिवचनात् । वाग्भटे शारीरेप्युक्तं—पादशोफो विदाहोत्र श्रद्धाचाविविधात्मिका मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् । संबद्धं तेन गर्भिण्या नेष्टं श्रद्धावधीरणं । देयमप्यहिते तस्यै हितोपहितमल्पकं । श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा इति फल विशेषात् दक्षिणकरयोगस्य भोगसाधनत्वात् योगप्रधानस्य श्री आदिदेवस्य ध्यानं अत " त्वामामनन्ति मुनयः परमं पुमांसमादित्य वर्णममलं तमसः परस्तात् इति; सूर्यस्वरूपतया श्रीभक्तामरस्तोत्रे श्री ऋषभप्रभोः कथनं सूर्यसहस्रनामपाठे आदिदेव इति नाम्नोऽभिधानात् जगत्कर्म साक्षिणस्सर्वप्रकाशकस्य सूर्यस्य दक्षिणांश एवौचित्यमतः पूर्शवंशविस्ताराय महोदयसाधन सूर्यस्वरूप श्रीआदिदेवस्य ध्यानाद्दक्षिणहस्तवीक्षा तदन्तरं भोगिनां स्वामिना सेवितत्वेन श्रीपार्श्वस्य दशावतारस्वरुपकमनीयाञ्जनज्योतिर्मयविलासप्रधानाविष्णुरूपस्य ध्यानाद्वामहस्तवीक्षासहेतुका तेनैव राज्यश्री भवतेत्यादिना भोगोक्तिर्वामहस्ते त्यागैः कृतार्थीकृत इत्यनेन योगोक्तिरिति यत्तु वालस्य " चंदसूरदंसणियं " इत्यागमोक्तं तद्वालस्य

मातुरंशप्राधान्यात्, तेनैव ज्योतिर्देवीरूपपादनखानां गर्भे ऊर्ध्वस्थानमिति वक्ष्यमणोत् प्रेक्षयानिर्वाहः स्त्रियाः पूर्वं भोगस्तेनैव तद्वालभ्यात् स्त्र्यङ्गस्य सौभाग्यातिशयजन्मना तथैवोपयोगाच्च वार्धके योगसाधनस्यापि नरभ-वदौर्लभ्येनावश्यकत्वाद्व्यत्ययेन हस्तदर्शनमिति ॥ ८ ॥

भाष्ये सूत्रोक्तार्थ प्रपञ्चनरूपे शुभस्थानरेखाभिस्तास्वपितत्तिथि-वारादिप्राप्त्या पूर्णफलाभिः शुभं तदभावेऽभावः अशुभस्थाने अशुभरेखा-भिरपि पूर्णापूर्ण फलतया अशुभं ज्ञेयम् । शुभस्थानेऽपि अशुभरेखया अशुभेपि शुभरेखया मिश्रं फल मित्यर्थाद्बोध्यम् ॥

तथा फलदः सर्व दैवान्त्यकाले पुनरसंमुख इतिविवेक विलासे—स्व-स्तिके वार्धके सुखीति हस्त बिम्ब सूत्रे मध्य वेधं भवेदूर्ध्वं पञ्चाशतवर्षतः परमिति हस्तचिन्हसूत्रे काल विशेषे वामेऽत्र वेधन जले मृत्युं समा-दिशेत् इति हस्तचिन्हे देशविशेषेऽपि वाम भ्रुवां पुनर्वामे स्त्र्यंशकस्य नरस्य चेति द्रव्यभाव विशेषे—'विप्पाणं बेयकारि' इत्यादिना जाति विशेषे फलभेदात् तत्तत्कारणपुण्यापुण्यप्रकाशः । "अथ यथोद्देशं निर्देशः" इति न्यायात् दर्शनाधिकारं विवृत्य प्राह—हस्तेक्षण इति ॥

ननु दर्शन कथनात्तिथिवारचक्र दर्शनं किमनवसरं प्राप्तं प्रस्तूयते । प्रात-गुरुर्देवदर्शनवत्, शाकुनशास्त्रे तत्तत्कार्ये चापादि दर्शनवत्; राज्ञां सूर्यस्य गोदर्पणादेर्वाघृतादिमध्ये स्वमुखस्य इष्टजनस्य दर्शनवत् शुभ निबन्धनत्वेन हस्तदर्शनं प्राच्यैरुक्तं; तेन प्राचीन पुण्योदयात् सुखमिति पुण्य प्रकाशार्थो ननु देशकालवयोजातिप्रमुखलभ्यालभ्य बोधाय—

दर्शनं देवदेवस्य दर्शनं पापनाशनम् ।
दर्शनं स्वर्गसोपानं दर्शनं मोक्षसाधनम् ॥ ॥ १ ॥
दर्शनाद्दुरितध्वंसो वन्दनात् वाञ्छितपदः ।
पूजनात् पौलपश्रीणां जिनसाक्षात् सुरद्रुमः ॥ २ ॥

धर्मशास्त्रे इत्याद्युक्तेः ।

अत एव श्रीमदर्हद्भगवतः प्रतिबिम्बदर्शनादार्द्रकुमारस्य यवनेशस्य बोधिलाभः श्रीसूत्रकृताङ्गनिर्युक्तौ श्रीउपदेशरत्नाकरेऽपि श्रीजिनप्रतिमाकारमत्स्यदर्शनेन जीवानां स्वर्गमादिप्रतीतमेव साधुदर्शनेन श्री श्रेयांसमृगापुत्रादयोऽनेके महोदयभाजः सिद्धांतसिद्धाः। शकुनशास्त्रेऽपि—

" जंबूचासमयूरे भारद्वाएतहेवन उलेय।
दंसणमेव पसत्थं पयाहिणो सव्व संपत्तीति " ॥ १ ॥

इष्टदर्शनं शुभायेति नैषधीये श्री हर्षोप्याह—

**जयजय महाराज प्राभाति किं सुपभामिमां**
**सफलयतमां दानादक्ष्णोदरालस पक्ष्मणोः।**
**प्रथम शकुनं शयोत्थायं तवास्तुविदर्भजा।**
**प्रियजनमुखाम्भोजा तुङ्गं यदङ्गनमङ्गलम् ॥ १ ॥**

इति तेन वारादिदर्शनं न किञ्चित्फलम्। किञ्चहस्तदर्शनं निमित्तमेव तेन शुभोदय ज्ञानात् किं वारादिदर्शननिमित्तान्तरानुसरणेन अनवस्थापत्तेः; पुनरन्यस्य निमित्तस्य वीक्षणप्रसङ्गत् तथा तिथ्यादिस्थानप्राप्तावपि यदिरेखाभिरेव शुभाशुभज्ञानं तर्हि किमजागलस्तनकल्पेन तिथ्यादिविचारिण; अथ यदिकस्यापि रेखाणामव्यक्तिस्तदा तिथ्यादिस्थाननिर्णयेऽपि कथं शुभाशुभ बोधास्तिथिस्वभावादिवेतिचेत् अत्रापि—तिथिस्तु युग्माः खलु पक्षरन्ध्रभेवद्वितीया दशमीं च हित्वादर्शश्च तासां विषमा वरिष्ठा स्मृता ॥ मुनीन्द्रैर्नवमीं विहाय इतिज्योतिःशास्त्रानुसारमात्रेण सन्तोष्टव्यम्। न च हस्ते तिथ्यादि न्यासं विना कथं तल्लाभ इति वाच्यम्। यद्दिने हस्तवीक्षातत्तिथ्यादिनैवकार्यसिद्धेः किं हस्ते तिथ्यादेर्दर्शने नेति। अत्रोच्यते—दर्शन शब्देन न केवलं दर्शनमेव किन्तु अवलोकनं तच्चिन्तनं च उभयमपि तथा च अर्हत्प्रतिमा दर्शनेऽपि तद्ध्यानं विना न किञ्चित् फलमिति स्पष्टं—

नैषधीयमहाकाव्ये सर्ग—१९—२—श्लोकः

" आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि "

इत्यादि कल्याणमन्दिरस्तवने एवं शकुनेषु तत्तद्दर्शने तद्भावनयैव फलं द्रष्टव्यम् । यथासौवर्णिकसंग्रामनाम मात्रा मण्डप दुर्गारोहे सर्पमस्तके दुर्गादेव्याजल्पने भीतया अपशकुनोऽयमिमि विमृश्य विलम्बाय तत्रैवस्थितम् । तावता तत्रागतेन विप्रेण तच्छकुन चेष्टां दृष्ट्वा प्रबोधिता सा हे पुत्रि ? मा विलम्बं कार्षीः शुभशकुनमेतत्, तव सुनोर्महोदयोऽस्मिन्नगरे भावीति । तदा कर्ण्य तयातद्वचः प्रमाणी कृत्याग्रे चलितं तत् पुत्रः कतिचिद्वर्षैस्तत्रैव तिष्ठन् महामन्त्री पातिशाहिर्जज्ञे इति दर्शनेऽपि भावनोपरि निदर्शनम् । एवं केनचिद्ग्रामाधिपेन नगरप्रवेशे शवसम्मुखमिलने वयमेतस्मान्नगरात् वहुपभोगे भुक्ते मृता एव निर्गमिष्यामो नतु जीवन्तोऽपीति भावनया प्रविष्टेन चिरं राज्यं भुक्तामित्यपि दृष्टान्तः । चूडामणी शास्त्रे—" पिणे मित्तिएण जेवा उत्तरबुद्धीर ए अत्तणोग्गहि या ते तस्स उत्तराणीय सेसा अहरी कया अहरा " ॥ १ ॥ इत्यत्र यस्यादृशी श्रद्धा तादृशमेव फलमिति ॥ तेन हस्तदर्शने केवलेन किञ्चित् तद्भावनायां प्रातंदर्शनजन्यायामेव पुण्यफलादेय इति आवश्यकं तिथ्यादिदर्शनं युक्तमेव-रेखाभावनायां तिथ्याद्युपयोगात्, नचानवस्थ ॥ शकुनरुतेजायमानेऽपि भवेदिडायां परिपूरितायां सर्वोपि वामः शकुनः प्रशस्तः स्याद् पिङ्गलायां परिपूरितायां सर्वोपिसव्यः शकुनः प्रशस्तः इति स्वरोदयानुसरणात् " पक्षीकृकलासादिपतनङ्गेविचारुपेऽपि तिथिवारादिसापेक्षत्वेन फले विशेषं " इति यथा योगं यथावसरं निमित्तान्तरान्वीक्षणेऽप्यदोषात् । तत् एव ज्योतिःशास्त्रे सुमुहूर्तेऽपि शकुने क्षणोपदेशः । यदुक्तं—

उषा प्रशंसते गर्गः शकुनं च बृहस्पतिः ।
अङ्गिरामनउत्साहं द्विजवाक्यं जनार्दनः ॥ १ ॥

---

१ शाहयोयवन राज विशेषा स्तेषांपतिः पति शाहिः स्वार्थे.

१ ईडस्तुति धातो दीर्घे कारदर्शणाम् ह्रस्वत्वं संज्ञाविशेषात् यदृच्छाशब्दे व्युत्पत्तेरभावेऽपि-बोधात् ॥

इति चतुर्द्धानिमित्ते क्षणम् ।

बलाबलमपि निमित्तानां निमित्तान्तरावलोकेनैव प्राप्यते अत एव शकुनदर्शनेऽपि सुमुहूर्तसुदिनविमर्शः प्रोक्तः सुदिनाभावे शकुनस्यापि वर्जनात् । यतः–

क्षीणचन्द्रतिथिदुस्सहानिलदूषितं धरणिकम्पनादिना ।
पर्ववज्जलदसंकुलाम्बरं वर्जयेत् शकुनदर्शने दिने ॥ १ ॥

रेखाणामपि पूर्णापूर्णफलत्वं तत्तत्तिथिवारनक्षत्रराशिचक्रभावनयैव तद्विरोधे स्वल्पफलात्, यदि च न रेखाभिव्यक्तिस्तदा तिथ्यादेरपि स्वल्पफलतेस्तुभयी दर्शनमुचितं स्याद्वादस्यैव प्राधान्यात्, तत एवाग्रे स्वराशि परिमेलकात् यथा स्थानयोगाग्रहन्यासादिति च सूत्रं स्पष्टम् ।

हस्तेक्षणे वारभचक्रलग्नप्रेक्षादिकं दर्शनमामनन्ति ।
शुभाशुभे स्पर्शनतोऽङ्गुलीनां तथाङ्गुमानादि निवेदनीयम् ॥१॥

हस्ते क्षणे हस्तदर्शने दर्शनानुजायमानत्वाच्चिन्तनञ्च वारादि चक्रविमर्शो दर्शनमेवेत्याम्नायविदः सामुद्रिकावदन्ति । लक्षण परीक्षायां तिथ्यादेः कालस्यापि तत्तत् शुभाशुभनिश्चय गमकत्त्वात, तत एव करवीक्षणमपि शुभादिन एव सर्वकार्ये काल १ स्वभाव २ नियति ३ पूर्वकृत ४ पुरुषकार ५ पञ्चकस्य साधनतायां कालस्य मुख्यहेतुत्त्वात । यदाहुः पाञ्चः

शोभने हस्तनक्षत्रे ग्रहे सौम्ये शुभे दिने ।
पूर्वाह्णेमङ्गलैर्युक्ते परीक्षेत विचक्षणः ॥ १ ॥

नन्वेतं द्वचनात् हस्तवीक्षणे सुमुहूर्तोप्ययोगः सिद्ध्यतु परं हस्ते तिथ्यादि न्यासः किमर्थ इति चेत् न जातिदिग् द्रव्यराश्यादेरिति वक्ष्यमाणत्वात्, पुण्यप्रकाशोऽपि तत्तत्तिथ्यादि न्यासभाव नयैव गम्यः ।

रंङ्काख्यव्यवहारिकथानके दक्षिणदिशोलभ्यश्रवणात् ।

अत एव सिद्धान्तेऽपि ।

उदय खय खउव समोव समाइजच कम्मुणो ।
भणियादव्वं खित्तंकालं भवं च भावं च संपप्प ॥ १ ॥

तेन प्राप्तव्यवस्तुनि लभ्यालभ्यज्ञानाय वारादि चक्रं युक्तमेव स्पष्टबोधात्, वारभणनेऽवसरस्तेन तिथिः प्रतिपदादि र्वा रव्यादिरुभयमपि ग्राह्यम् ।

अथ स्पर्शनमाह—शुभाशुभ इति स्पष्टं चैतत् पुरस्तादिति ॥ १० ॥

अथ सामुद्रिके रेखाणामेव मुख्यत्वात् प्रायो बालैरपि ज्ञातुंशक्यत्वाच्च तृतीय रेखाविमर्शनेन ज्ञानमाह—

रेखा विमर्शनं साक्षाद्वक्ष्यते प्राक्तनोक्तिभिः ।
इति त्रेधाकर ज्ञानात् सर्वं वस्तु प्रकाश्यते ॥ ११ ॥

रेखेति । विमर्शनमिति सर्वत्र योज्यम् । दर्शनविमर्शनम् । स्पर्शन विमर्शनम् । रेखाविमर्शनञ्च भावनया अभ्यासदार्ढ्येन अविसंवादवाक्यत्व सिद्धेः । क्वचित् सामान्योक्तौ विशेषपरत्वं सूत्रस्य क्वचिद्वैपरीत्यन्तत्तद्द्रव्य क्षेत्रकालभावैरिति ।

ननु वृक्षाणां पत्रादिषु मधुकराद्युपलेषु आकस्मिक्यः वस्त्रादिषु पौरुषेया रेखाकृतयो नाना दृश्यन्ते नहि तास्तेषां शुभाशुभसूचका एकाकारत्वेऽपि वृक्षाणां पत्राणां पुष्पाणां चीरजीवित्वात् केषाञ्चिच्छीघ्रपातित्वाच्च । एवं सौभाग्ये दौर्भाग्ये आरोग्यानारोग्यसारुप्यासारुप्ये साविस्ताराऽविस्तारत्वे सकलाकलत्वे वाचे सर्वत्र स्वभाव एव गमको वायोस्तिर्यग्गमनवत्, वह्नेरूर्ध्व ज्वलनवत्, जीवानां भव्याभव्यत्ववद्वा क्वचनसाम्राज्यभुजोऽपि न तादृक् रेखाकारः क्वचिद्दरिद्रस्यापि तादृक् शुभरेखा संभव इति व्यर्थं लक्षणशास्त्रं किञ्चानेन बाह्याकारो लक्ष्योऽभ्यन्तरः स्वभावो वा नाद्यः गौरत्व श्यामत्व उच्चत्व ह्रस्वत्वादीनां बाह्याकाराणां प्रत्यक्षत्वेन लक्षण-शास्त्रस्य वैयर्थ्यात्; न द्वितीयः अभ्यन्तराणां गाम्भीर्यौदार्य्य धैर्याणां नानात्वेन सर्वात्मना लक्षयितुमशक्यत्वात्, तथा राज्ञोपेक्षया श्रेष्टिनो नभाग्यं, प्राकृतलोकापेक्षया तु भाग्यं तथा च किं हस्ते भाग्यरेखयाभाव्यं भाग्यरेखा भावेन वा यदि च सर्वं कररेखाभिरेववेद्यं तदा ललाट—नासिका हृदयोष्ठपादरेखावैफल्यं तथात्वेकर रेखाणामपि वन्ध्यत्वे को निषेद्धा । अथ तासामपि ज्ञापकत्वं तदावार्द्धके जरायोगात् सर्वत्र शरीरे रेखोदयात् किं न

तासामपि लक्षणत्वं ततः शास्त्राणां विप्रतारणामात्रमेतत् स्वभावेन हस्त-पादाद्यवयववत् रेखाकारसंभवात्तदुपरिविकल्पशिल्परूपं, अपि च यस्य जन्म तो न हस्तावयवः छेदोवाकरस्य तस्य कथं शुभाशुभज्ञप्तिर्मूलत एव तद-भावात् । नराणां हस्तलक्षणे रेखासाफल्येऽश्वमहिषवृषभादीनां तद भावात्कथं शुभमन्यद्वाज्ञेयम् । अन्यच्च रेखाया श्छेदे भेदे वेधे वा तत् फल-मस्ति नवा, आद्ये छेद रेखावैयर्थ्यात्, द्वितीये मूल रेखाया एव वैयर्थ्यात् यदि तदुद्भव एव आपातात् राभस्यात्तदा सर्वरेखाणामापातजन्यत्वेन न लक्षणशास्त्रोपयोग इति । अत्रोच्यते एवं सति ग्रहोदयास्तु वक्रादिषु स्वभावत एव संचारात् तन्निमितजन्यशुभाशुभानवबोधात् ज्योतिःशास्त्रस्य तथा शकुनानामपि स्वभावे नैव जल्पनात्तन्निमित्तकफलाभावाच्छकुन शास्त्रस्य स्वभावादेव पुण्ये कर्माणि पापेवाप्रवृतेः फलाभावाद्धर्मशास्त्रस्यापिवैफल्य प्रसङ्गात्, सकलप्रामाणिकपर्षद्प्राप्त प्रतिष्टज्योतिर्वैद्यकनीति शकुनधर्मशास्त्र द्वेषेण सर्वव्यवहारलोपः, तेन गौरवाल्लक्षणशास्त्रं प्रमाणमेव " लक्खण वंजण गुणोववेयं " तथा " छत्तचामरपडागजूअजवमंडिया " इत्यादि सिद्धान्तात् । श्रीहर्षोऽपि नैषधीय " क्राव्ये त्वदुदाहरणाकृतौ गुणा इति सामु-द्रिक सार मुद्रणा " इत्यभाणीत्, यस्तु कचित् फलविसंवादःसनैमित्तिकस्या-ज्ञानदोषात् भाग्यानुदयेन विपर्यय कथनजन्यो नतु तावता शास्त्रदोषः तस्य सर्वज्ञमूलकत्वात्, अतएव मन्त्रजापन्यासपूजाविधानोक्तिर्नैमि-त्तिकदूरितध्वंसाय । वाह्याकारेऽपिकाणान्धकरचरणभङ्गादौ भाविनि वर्त-मानेऽपि गुह्यतिलकादौ लक्षणेन परिज्ञानमान्तरस्वभावेऽपि दातृत्वकार्प-ण्यादौ सामान्येन सूचनात्—शास्त्रं हितायैव राज्ञः श्रेष्टिनो वाभाग्यरेखा साम्येऽपि जातिविशेषाद्धेदोर्ध्वरेखादिफले वक्ष्यमाणे तथानिर्णयात्, रेखाणां तत्तदर्थबोधकत्वं तु व्यवहारवहिकालेख्यके व्याकरणेकुण्डलनायां पदच्छेदादौ दृश्यत एव तत् कथं तासां सर्वथा वैय्यर्थ्यं स्यात् । ज्योतिः शास्त्रेऽपि ग्रहाणां रेखाभिः फलज्ञानात् । छन्दःशास्त्रे रेखया प्रस्तारे लघ्वक्षरज्ञानात् यवनशास्त्रे रेखामात्रेण प्रथमवर्णन्यासात् । वेदऋचि ऊर्ध्वं रेखया

उदात्तस्वरस्यायतरेखयास्वरितस्य संज्ञानात् । ' पावइलाहालाहं ' इत्यादि प्राचां वाचां विस्तरेण हस्तरेखाभिर्गूढबुद्ध्या सम्यग् रित्या विमृश्यते चेत् सर्वं प्राप्यते, श्रीभगवत् प्रसादात् नान्यथा देशतस्तु हस्तानुवादरूपं प्रमेयं ललाटादिरेखाभ्योऽपि विशिष्टतरं ज्ञायते ततो युक्तमिदमुक्तं " कुलं जातिं तथा देशमाकारञ्जन्मजान् " ग्रहान् इत्यग्रे सूत्रतएव यदपि वार्द्धके रेखा प्रकटनं तत्र न वयं वच्मः । सर्वारेखा लक्षणमेव किन्तु सामुद्रिक शास्त्रोक्ता एव नहि लेख्यकादौ रेखासार्थकत्वे वाल्यचापल्यात्कृतरेखा अपि तादृशा इति जन्मतः छेदाद्वा हस्ताभावे तच्छुभाशुभज्ञानं निमित्तान्तरादेव जन्मपत्राद्यभावे हस्तादेरिवेति एतेनाश्वमहिषादि शुभेतरज्ञानं निमित्तान्तरादेवेति गदितम् । तेषां जन्मपत्रस्याप्यभावात् रेखा छेदादौ विशिष्ट फलाभावात् फलहीनत्वं न पुनः सर्वथानिष्फलत्वं छिन्नभिन्नादयोऽल्पदा इत्याचार्यवचनात् इतिसिद्धलक्षणप्रामाण्यम् ।

नन्वेवं भवतु तत् सिद्धिः परं लक्षणशास्त्रं विमृश्यतां ज्योतिः शास्त्रं वा किमुभयेनेति चेत् व्यक्ततरबोधार्थं सूर्येसत्यपि उपनेताश्ममण्डलोपादानवत् कषपटे सत्यपि स्वर्णस्य छेदनतापताडनादि परीक्षान्तरवद्वासत्यानां तथा प्रवृत्ते लक्षणे सत्यपि नीतिं विना तद्वैयर्थ्यं तत्र केनचिद्राज्ञा भारवाहकस्य राजलक्षणवतः प्रत्यहं हस्तद्वयेन शीर्षं कण्डवा स्फेटयितुः करछेदे कारिते सभारवाहको राजा बभूवेति निमित्तेऽपि निमित्तान्तरं सहकारीष्टम् । अतएव श्री वीरेण भगवता द्वादशाब्दिकदुर्भिक्षहेतुनिश्चये ज्योतिर्विद्भिःकृते दुर्भिक्षाभावे श्रीगोतमस्वामिना पृष्टेन प्रसादीकृतं ज्योतिर्विदः सत्या एव परं अमुकव्यवहारिपुत्रजन्मना ज्योतिः शास्त्रवाक्यबाधक तत् पुण्यैर्महद्भिर्दुर्भिक्षाभाव इति कथानके द्वयस्यापिप्ररुपणासत्यापिता । अतः प्रागेवोक्तं—स्याद्वादादेवार्थसिद्धिरिति सूक्तं रेखाविमर्शनम् । तच्च साम्प्रतीनजनानां केषाञ्चित् मनसि श्रद्धा भवति नभवति वेति मत्वा पुरातनाचार्यश्लोकैरेव वक्ष्यते ॥ १० ॥

अथ भूततीर्थेशठवद्वर्त्तमानार्हतोऽपि स्मरणमुचितं देशविप्रकर्षेऽपि समयप्रत्यासत्तेः यद्वा तुलादण्डन्यायेन वर्तमानस्य मध्यस्थस्यग्रहेऽतीतानागतयोरपि

संग्रह इत्यामृश्य साम्प्रतं वर्तमानार्हतः श्रीसीमन्धर नाम्नो जिनाद्यस्य स्मृत्यर्थं तच्छासनीधिष्टायिकायाः पञ्चाङ्गूल्या देव्याहस्ते सान्निधानकथनेन हस्तस्योत्कर्षमाह—

पञ्चाङ्गुलिर्महादेवी श्रीसीमन्धरशासने
अधिष्टात्रीकरस्यासौ शक्तिः श्रीत्रिदशेशितुः ॥ १२॥

पञ्चाङ्गुलिरिति । पञ्चाङ्गुलिर्देवी प्रत्यङ्गिरा १ ऐन्द्रीशक्ति २ रित्यपरपर्याया श्रीसीमन्धरभगवतः शासनेतीर्थे महादेवीशासनदेवता साकरस्य अधिष्टायिका श्रीइन्द्रस्य शक्तिः अष्टादशः=भुजान्विता । तेन पञ्चाङ्गु लिरिति हस्तस्याभिधानं, लौकिक, शासने वज्रश्रृङ्खलावज्रांकुशीतिनामभिः सैवप्रस्तूयते । वैरिदलनेऽस्याधिकारात् तिस्रोदशाब्रह्मविष्णुरुद्ररूपा अवस्थायेषां ते त्रिदशा देवास्तेषामीशः स्वामीतेषु समर्थः शक्रस्तस्य हस्ते वज्रधरणात् तच्छक्तिरूपासौ महावलावज्रस्य शैलादिभेदसामर्थ्यात्नास्याः परा काचिद्वीर्येणोत्कृष्ठा शक्तिरतए वास्याध्यानं विद्युत्स्वरूपं ब्रह्मविष्णुरुद्ररूपास्त्रयोमन्त्रास्तत्रापि ॐनमो पञ्चाङ्गुलि पञ्चाङ्गुलीइत्यादिमन्त्रे वज्रनिर्घातपतनोक्तिः वामहस्ते विपक्ष विध्वंस प्राधान्यादेतध्द्यानं दक्षिणेतु तिस्रो दशाबालतरुणवृद्धरूपा यस्यस त्रिदशः सचासौ ईशिता इन्द्रः आत्मा इन्द्रियप्रयोजयिता तस्य शक्तिब्रह्ममयी करस्य अधिष्टात्री श्रीसीमंधर शासने महादेवी दिव्यरूपा पञ्चाङ्गुलिरिति ध्यानमेतद्व्याख्या लभ्यं महाब्रह्मेति कराभिधानात् शान्तिककार्ये मङ्गलकार्ये कौङ्कुमहस्तकादिन्यासेन महोपयोगाच्च ॥ ११ ॥

एतदेव विवृणोति--

हस्तेन पाणिग्रहणं पूजाभोजनशान्तयः ।
साध्याविपक्षविध्वंस प्रमुखाः सकलाः क्रियाः ॥ १३ ॥

हस्तेनेति । पाणिग्रहणं परमोत्सव ऐहिकसुखहेतुः पूजा स्वेष्टदेवस्य सर्वकार्यसिद्धिकरी । श्रीभगवतः पूजामोक्षनिमित्तं भोजनं शरीरेन्द्रियतृप्तिकरं जिनकल्पिकमुनेरशनंवा शान्तिदुरितोपशमनाय तत् ततसूत्रपाठादिकर्महस्तेन दक्षिणहस्तेन साध्याः विपक्षविध्वंसादयो वामहस्तेनेति द्वयोरपि अर्थक्रिया

सामर्थ्यात् प्राधान्यं तेनद्वयोरपि लक्षणं वीक्ष्यमञ्जालिविधानाद्दर्शनमपि अत एवाह-शंकराचार्यः सौन्दर्यलहरी नाम्नि भगवती स्तोत्रे त्वदन्यः पाणिभ्याम। भयवरदो दैवतगण इति। तेन पूजाभोजनदानशान्तिककलापाणिग्रहस्थापना चौक्ष्यप्रेक्षणहस्तकार्पणमुखव्यापारबद्धस्त्वहम्। वामोऽहं रणसम्मुखाङ्कगणनावामाङ्गशय्यादिकृत् द्यूतादिव्यसनीत्वसौ सतुजगौ चोक्षोस्मि-नत्वं शुचिः इत्यत्रद्वयोरप्युपयोगात्। अत्र पूजादानयोर्मध्ये भोजनग्रहणात् यथा पूजादानशान्तिकर्मोत्तरं कृत्वाभ्यासस्तथा भोजनोत्तरमेव करवीक्षणं तस्य सामुद्रिकत्वेन पुरुषकलान्तर्भावादित्यपिज्ञेयम्। पूर्वं दक्षिणकरोक्ति पुरुषप्राधान्यात्॥ १२॥

अत्रार्थे प्राचां वचोरचनामप्याह

**राज्यश्रीर्भवताऽर्जिताऽर्थिनिवहस्त्यागैः कृतार्थिकृतः।**
**सन्तुष्टोऽपि गृहाणदानमधुना तन्वन् दयां दानिषू।**
**इत्यब्दं प्रतिबोध्य पाणियुगलं श्रेयांसतः कारयन्**
**प्रत्यग्रेक्षुरसेन पूर्णमृषभः पायात् स वः श्रीजिनः॥ १४॥**

राज्येति। श्रीऋषभस्वामिना दीक्षाग्रहणे तदानीं दानीयदानीन्द्रादिव्यवहारस्य बाहुल्येनाभावाच्छुद्धाहारदाने लोकस्याज्ञानात् वर्षं यावत् नाहारः प्राप्तस्तदा कवेरुत्प्रेक्षा वाक्यमिदम्। पूर्वं वामस्य स्त्र्यङ्गप्राधान्येन हठबाहुल्यात्[१] तं प्रति श्रीऋषभस्योक्त्या समाधिः राज्यश्रीर्भवता धनुर्द्धरणादिना बाणप्रयोगे पुरस्सरेण सत्यवता भवता अर्जिता स्वभोग्याकृता साम्प्रतं व्रतसाधनेन "मोह पराजयाय सज्जीभव" तदावामस्यातिशय श्रवणाद्दक्षिणहस्तेदुर्मनासि जाते तं प्रत्यपि भगवतो भणिति। रर्थिनिवहो भवता सांवत्सरिक दानकर्मणि यथाभीष्टदानैः कृतार्थीकृतः सन्तोषं प्रापितः वित्तपरित्यागे महासाहसात् ततः अहं सन्तुष्टोऽपि तवोपरिदानं संप्रति-गृहाण, किं विलम्बसे नहि साहसवतां भिक्षायोग्या तथापि दानीनां दयां

१ हठबाहुल्यः। वामंजाणु अंचेइ दाहिणं जाणुं धरणितलमित्यागमात् प्रणिपाताकरणेन वेद्यम्।

संसारादुद्धाररुपां तत्वन्–विस्तारयन् दानं चेद्गृह्यते, तदा दानीनामनुग्रहः स्यादिति अष्टवर्षं यावत् पाणियुगलं प्रतिबोध्य श्रेयांसकुमारात् प्रत्यग्रेक्षुरसेन पूर्णं कारयन् श्री ऋषभो भगवान् परतीर्थ्यैरपि भागवतादिस्वशास्त्रे वर्णनीयः श्रीजिनप्रथमोऽर्हन् सः जगत् प्रतीतः वो युष्मान् पायात् पापादवतात् । अत्रापि पाणियुगलस्यैव साध्यसाधकत्वं ज्ञापितम् ॥ १३ ॥

अथ पुनर्हस्तप्रशंसामाह—

**मन्त्राक्षराणामोंकारे यथा तत्त्वं प्रतिष्ठितम् ।**
**तथा सामुद्रिकस्यापि तत्वं हस्ते निवेशितम् ॥ १५ ॥**

मन्त्रेति । मन्त्राः देवाराधनशब्दास्तेषामक्षराणि अकारादीनि तेषां तत्त्वं स्वरूपं, ॐकारे स्थिरीभूतं तस्य सर्वाक्षरमयत्वात् । प्रणव श्छन्दसामिवेति सर्वादिमत्वात, अग्नि तच्च बीजत्वेन ज्योतिः स्वरूपत्वाच्च यद्वा न क्षरतीत्यक्षरं ब्रह्म तच्चैकमपि ज्ञेयनानात्वेनानेकं तत् स्वरूपं ॐकारे परमशुद्धब्रह्मवाचके लीनं अ इति अर्हन् अः अकायः सिद्धः आ आचार्य उ उपाध्यायः । तद्योगे ओम् इति मुनितस्यानुस्वारे ॐ इति सर्व ब्रह्माधिक्यात् पञ्चपरमेष्टिबीजत्वात् यद्वा अक्षैरिन्द्रियैराजंतेऽ इत्यक्षरा जीवास्तेषां तत्त्वं ॐकारे सदा सिद्धब्रह्मणिनिश्चितं तत्रैव निष्कलङ्क स्वरूपलाभात्, अथवा नक्षरतीत्यक्षरमेकं अ इति संवृतरूपं आकारादीनां तस्यैव प्रकारत्वात् अर्हद्वाचकं विश्वव्यापकं परमात्मज्योतिः स्वरूपः उः इश्वरोन्नताचरणोपलब्धकेवलरुपउपयोगसिद्धितया सर्वतः समर्थः सिद्धस्तयो र्योगे ओ इति अनुस्वारः शिवबीजं निराकारं अर्द्धचन्द्राकार

---

२ अकारस्य साधकरूपत्वेन उकारस्य सिद्धरूपत्वेन सर्वाक्षरवाच्य वस्तूनां रूपद्वयेऽन्तर्भावात्.

१ अर्हन् संवरस्वरूपी उपयोग् सिद्धः स्यादिति तत्त्वं तद्रूपमर्द्धचन्द्राकार सिद्ध शिलोपरिबिन्दुरूपमनाकारमितिभाव । ॐ नमः सिद्धमिति मातृकादौ तस्मैनमः सपुनर्विष्णुः शङ्करोवित्याकाङ्क्षायां विवृत्याह सिद्धमिति सिद्धाश्चतुर्विंशति संख्याका ज्योतिः शास्त्रे जिन संख्यावत् ।

सिद्ध शिलाप्रतिष्ठितं तत । ॐ इति अत्र सर्वाक्षराणां स्वरूपोपलम्भः कैवल्यशालित्वात्, अथवा अक्षरा अमरादेवास्तेषां स्वरूपं अवतीति ॐ-कारः— इन्द्रः अच्युतेन्द्रस्तत्रनिश्चितं तदाज्ञापरत्वात्तेषां यद्वाहस्ते अकाररूपोवाम उकाररूपो दक्षिणो योगभोगात्मना प्रागुक्तः तयोर्योगे ॐ-कारपदवाच्यः अञ्जलिस्तस्मिन् अक्षराणां नाना ब्रह्मणां तत्त्वं तथा समुद्रेण मुनीन्द्रेण प्रणीतं सामुद्रिकं सकलावयवलक्षणशास्त्रं तस्य तत्त्वं यथार्थता हस्ते स्थापितमित्यर्थः ॥ १५ ॥

अथ न केवलं सामुद्रिकस्यैव किन्तु सर्वनिमित्तानां तत्त्वमपीत्याह—

राज्ञामाज्ञारहस्यस्य निश्चयो हस्तकाद्यथा।
तथा निमित्तादेशानां निर्णयो हस्ततः स्मृतः ॥ १६ ॥

राज्ञामिति । आज्ञायां राज्ञा साक्षादुक्तायामपि तथास्फुरन्मानादिपत्र लिखितायामपि न निश्चयः कदापि विसंवादात् परं हस्तके पंजा इति यवनभाषा प्रसिद्धे; यथा निश्चयस्तथालापीति । तेन सर्वव्यहार मुखमङ्क संज्ञा हस्ते तद्यथा—एकद्वित्रिचतुः संख्यातर्जन्याद्यङ्गुलिग्रहे । साङ्गू-ष्ठानां पुनस्तासां संग्रहे पञ्चसंस्थितिः ॥ १ ॥

कनिष्ठादितलस्पर्शे षट् सप्ताष्टौ नव क्रमात् ।
तर्जन्यां दशविज्ञेयास्तदादीनां नखाहतौ ॥ २ ॥
एकद्वित्रिचतुर्युक्ता दशज्ञेया यथाक्रमम् ।
हस्तस्य तलसंस्पर्शे पुनः पञ्चदशस्मृता ॥ ३ ॥
तर्जन्यादौ द्वित्रिचतुः पञ्चग्राहे यथाक्रमम् ।
विंशतत्रिंशच्चत्वारिंशत्पञ्चाशत्परि कल्पना ॥ ४ ॥
कनिष्ठाद्यङ्गुलितले षष्टिसप्तत्यशीतयः ।
नवतिश्चक्रमाद् ज्ञेया तर्जन्यर्द्धग्रहे शतम् ॥ ५ ॥

---

२ अर्हन् प्रतिमानां वज्रासन मुद्रायां अइति अधः स्थाप्यो वामकरः उइति उपरिस्थाप्यो दक्षिणकर इति । अकार उकारयोः क्रमबीजं यद्वा अर्हन् उरिति उपयोमेन शुद्धे न केवलेन युक्तः सिद्ध इति ॐ कारक्रमः ॥

सहस्रमयुतं लक्षं प्रयुतं चात्रविश्रुतम् ।
मणिबन्धे पुनः कोटिं हस्तसंज्ञा विदोविदुरितिः
इति विवेकविलासे ॥ ६ ॥

अथ हस्तस्य साम्प्रतं ज्योतिः शास्त्रस्य निमित्तेषु बाहुल्येन प्राधान्यात् ताद्रूप्यमाह—

अक्षया जन्मपत्रीयं ब्रह्मणा निर्मिता स्वयम् ।
ग्रहारेखाप्रदा यस्यां यावज्जीवं व्यवस्थितम् ॥ १७ ॥

अक्षयति । ब्राह्मणलिखिता प्रायो जन्मपत्री शिष्टानां भूतभवद्भविष्य द्बोधाय भवति तर्हि सर्व ब्राह्मण मूलभूतेन विधिना कृता जन्मपत्री भविष्य त्येवेत्याकाङ्क्षायां कवेरुत्प्रेक्षावचः । इयं हस्तरूपा जन्मपत्री साक्षादेव तत्र हेतुमाह—ग्रहाख्यादयो रेखा प्रदा यस्यां हस्या एव रेखा शब्देन भ्रमर चक्रोर्ध्व रेखादि सामन्यतः सर्वा रेखाग्राह्या रेखाभ्रमरचक्राङ्का इति- पूर्वजवाक्यात् नरस्य दक्षिणहस्ते जन्मपत्री वामेराशिकुण्डलिका चन्द्रा- धिकारात्, उत्तरस्यां चन्द्राननभगवत्प्रतिपत्तेः तत एव दक्षिणेहिंदूकत्व दक्षिणाभिमुखा लेखा वामे तु यवनवद्वा माभिमुखा इतिव्यक्तं, ननु ललाट- पट्टे लिखिता विधाता षष्ठी दिने याक्षर मालिका च तां जन्मपत्री प्रकटां विधत्ते दीपो यथावस्तु घनान्धकारे इति तथा " लिपिर्भलाटंतप निष्ठुराक्षरा तथा अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थि जनस्यजागृतीम् " इति नैषधीये । तथा " यद्धात्रा निजभालपट्ट लिखितं स्तोकं महद्वाधनम् " इत्यादौ भालपट्टे ब्रह्मणो लिखितमिति श्रूयते । अत्र हस्ते लेखनोक्ति स्तत्किमिति चेल्ललाटपट्टे गर्भमध्येकरयोः पिधानात् तत्रैव धातुर्लेखनं सामीप्याल्ललाटोक्तिः एतत्पत्रं रात्रौ दीपे राज्ञोऽग्रे सभायां लिखितमित्याद्युक्ति वत् यद्वासर्वाङ्गीण लेखनं हस्तयोरेव विस्तरेण तदवकाशात् किञ्चिल्ललाटेऽ पिति । तदुक्तं गर्भस्त्वधोमुखोदुःखी । जननीपृष्टिसम्मुखः । बध्वाञ्ज लिर्ललाटे तु पच्यते जठराग्निना ॥ १ ॥

अथ पादयोः रेखाः कथं नहि तान् लक्षणमिति कथितुं शक्यम् । यथा हस्तस्तथा पाद इति सामुद्रिकवचनादिति चेन्नकरलिखितस्यैव फललेखनात् व्यक्ततया । कुण्डलिकाया उपरि वत्संरादिपद्धति लेखनवत् गर्भे मूलस्थानीयं मुण्डमधस्तत्र करप्रत्यासत्तेः पादयोरूर्ध्वस्थानात् पादकरलक्षणात् पादस्तुर्यांशस्तन्मात्रं लक्षणमिति प्रतीयत एव मुख्य रेखा चतुष्टयमध्यात् पादे ऊर्ध्व रेखामात्रकथनात् यतः—

अधोविधानात् कमलप्रवालयोः शिरस्सुदानादखिलक्षमासुजाम् ।
पुरेदमूर्ध्वं भवितेतिवेधसा पदंकिमस्याङ्कितमूर्ध्वरेखया ॥ १ ॥

पितृधनायुरेखाणां पादेनुपयोगादित एव करतले जन्मपत्रं भावपत्रं तदङ्गुल्यां स्पष्टं न तथा पादयोः पाणिपादमिति व्याकरणे तन्मुख्यता कथनात् दर्शनमपिहस्ततस्यैवोक्तं न पुनः पादस्येति विवेकाच्च । किञ्च सोहमाजन्मशुद्धानां तथा जन्ममित्रमिदं जन्मांधोऽयं जन्मदरिद्रोऽयमित्यादिवत् जन्मना उत्पत्त्यां पत्रं यत्तज्जन्मपत्रं तदपि पाणिरूपमेव भूजदलेत्याद्यभिधानात्, यद्वा पत्रं पक्षस्तदपि पाक्षिण पक्ष इव नरस्य पाणिरेवोति । जन्मपत्रं तदेव तत्रैव लेखनौचित्यात् वस्तुतस्तुब्रम्हणा निर्माण कर्मणा औदारिकाङ्गी गोपाङ्गप्रकृतिसहचारिणा निर्मिता तस्यैवविधित्वेन भणनात् । यतः—

विधिर्विधाता नियतिः स्वभावः कालोग्रहाश्चेश्वरकर्मदैवम्
भाग्यानिपुण्यानि यमः कृतान्तः पर्यायनामानि पुराकृतस्य ॥ १ ॥

कर्मप्रकृतिनामपि देवाधिष्टानं महीपालचरित्रे कुष्टविलये तथा भगवत्यां लोकपाले तत्तद् रोगादिज्ञानद्वारा लोकपालाधिकारात् प्रसिद्धं तद्रूपत्र ह्मकृतेतिभावः। अथ कथमेतत् ज्ञेयंजन्मपत्रीयमिति । तनुधनसहजसुहृत् सुतरिपुजाया मृत्युधर्म कर्मायव्ययरूपाणां रेखाणामवस्थानात्, तत्र तनुरेखा,

---

१ पादेऽपीन्द्रानुज विष्णोरधि दैवतंच्च । श्रूयते वुद्धेर्ब्रह्मा अहंकारस्येश्वरः मनसश्चन्द्रःदिश श्रोत्रस्य त्वचोवायुः सूर्यश्चक्षुषो रसनस्यापः पृथिवी घ्राणस्य वचसोऽग्निः हस्तयोरिन्द्रः पादयोर्विष्णुः पायोर्मित्रं प्रजापति रूपस्थस्येति शारिरे ॥

आयुर्लेखा तस्यामेव स्वभाव लक्षणात् कर्मरेखाराज्यैश्वर्य दरिद्रतारूपाआयु-रेखा ऊर्ध्वरेखा परपर्याया। व्ययरेखाकलहमृत्युदीक्षा ग्रथिलता गृहाधिकार लक्षणा घातस्थानतया त्रिशूलरेखयावा संतान रेखायां चतुष्किका संभवे रिपुरेखा। शेषास्तु स्पष्टा एव। हस्ततलमध्ये पूर्वापरायते आयुर्धनरेखे दक्षि-णोत्तरायतेपितृरेखोर्ध्वरेखेतथा अङ्गुष्ठोन्मुखतर्जन्युन्मुख कनिष्ठोन्मुख ऊर्ध्व रेखास्तिर्य गायतास्तथा विद्यारेखा राक्षसकोणात् करभान्निर्गत्य कोशोन्मुखी सर्वाभिरेताभिर्द्वादशभवनसंपत्तिः सूर्यपूर्वस्यां शुक्रोदक्षिणस्यां पश्चिमायां शनिः उदीच्यांगुरूः ऐशान्यां मङ्गलः आग्नेय्यां बुधः सामान्यतयास्थित इतिस्थापना दक्षिणहस्ते। अत्र तूर्यभवने बंधुभावः। भातृरेखाप्रत्यासत्तेः प्रकरणे—

मणिबंधाउपयटापएसिणी जाव अइगयारेहा वहुबंधुसमाइत्तं कुलवंसं निद्दिसे तस्स ॥ १ ॥ इतिवचनात् पष्ठभवने रिपुभागो घातस्थान बाणप्रहारादिरेखासामीप्यात्। आयुरेखा सम्मुखैस्तैर्नलभ्यं मातृपक्षतः इति हस्त चिन्ह सूत्रवचनात् तत् संमुख सप्तमभवनेकलहरेखास्थानात्। चाष्टमभवने आयभावोऽपि कनिष्ठा यदिदीर्घास्यादूर्ध्वरेखा समाश्रिता व्यव-सायात्तदा लाभोयशस्तस्य महोज्वलम् ॥ इति हस्तचिन्ह ग्रन्थात्। जन्मनि योनियन्त्राव्निर्गमदुःखेन मृत्युरेखा पुरोभावेनाल्पमृत्युस्तथाजन्मा-प्यष्टमभवने तत एव जन्मनि मृत्यौ वा सुतकत्वे प्रतीते ग्रहेषु सूर्य सूर्य सुतयोः सामुद्रिके तद्दिशि अवस्थानं ज्योतिः शास्त्रेऽपि तथाभणनात्, प्राच्या दिशा रविसित कुजराहु यमेंदु सौम्यावाक् पतय इति। शुक्रो

---

१ गृहवन्धरेखास्थानत्वात् व्ययः ततः पश्चान्मध्यमायां उर्ध्वरेखया धनवृद्धेः आयःभावः

२ मणिवन्धात् पितृरेखा, मध्यात् द्वे ऊर्ध्वरेखे एकामध्याङ्गता द्वितीया नामिका मिति द्वे रेखे ॥ ३ मुष्टिप्रहाररूपम्।

१ मघायापितृ दैवतायाः स्थानात् अल्पमृत्युः आयुर्लेखायां तनुस्वरूपात्तदुद्भवस्थान तया कायतीर्थस्य सद्भावाज्जन्मापि तद्भवनरेखाभिर्विचार्यम्।

२ सूर्यसुतः पश्चिमायां नक्षत्रचक्रे अश्लेषा सर्प देवता तत् स्थानात् शतिरपि सर्परूपत्वात्, मुष्टौकनिष्ठाग्रस्य शनेस्तत्र न्यासाच्च।

दक्षिणस्यां महाराष्ट्रदेशोद्भवत्वात्, जिठम रहठ भूओ सोलस सकिरणी कऽ ख दिठियमभूओ असुर गुरु सुक्को सुक्को नमई पासमिति स्तवने, । तथा दर्शनमपि गौर्या मध्ये अश्विन्यादि नक्षत्रचक्रे ज्येष्ठावस्थानात् आग्नेय्याः प्रत्यासत्तिरपि--तथा मणिबंधाउ पयटा संपत्ता तथा अवठ हिठायतोसुरीति प्रकरणे पकटाक्षरोरित्याचार्यस्थानात् । नक्षत्रचक्रे उत्तरफाल्गुन्या उत्तराव-स्थानात् तत्रैव जन्मना तथा राशिचक्रे मेषादिक्रमे उत्तरस्यां धनराशेर्न्यासेन धनुर्बलेन तथा तद्रूपाश्वबलेनराज्यश्रीसम्भवेन अङ्गुलीषु सर्वोत्तरगुरुत्तर-मध्याङ्गूली स्थायित्वादुत्तरस्यां गुरुः ज्योतिर्मतेऽपि ईशानदिशः सामीप्यात् अङ्गुष्ठमूले ब्राहम्यतीर्थे स्थानात् नक्षत्रचक्रे रोहिण्या स्थितेः ब्राह्मणो-रोहिणी सम्भव इतिज्योतिःशास्त्रात्, ध्रुवराशित्रये कन्याराशिस्थानात् आग्नेयां बुधः तथातर्जन्यां पृथिवीतत्त्वात् राशिचक्रे मकरावस्थानेनस्वोच्चत्वात् चन्द्रचक्रे उत्तराषाढाप्राप्ते पृथिवीसूनुर्हननक्रियास्थाने लोहिताङ्गोमङ्गलस्त्वैशान्यां संगत एवं वामे पूर्वस्यां चन्द्र इति सामन्यतः सर्वजनजन्मपत्रं तद्भावपत्रं तु वर्षशुभा-शुभ ज्ञानाधिकारे वक्ष्यते । ननु हेतूनां लेखनादेवमवसीयते, यदेतत् सर्वं कल्पितमिति तन्न; शास्त्रे प्राक्सिद्धेऽपि हेतूक्तिः श्रद्धातिशयाय । वृत्तिकृतामयं विषयः सार्वत्रिकः यदाह--न्याय कुसुमाञ्जलिग्रन्थे-- श्रीउदयनाचार्यः " आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिनायस्तर्केणानुसंधत्तेस धर्मं वेदनेतर इति "

सिद्धान्तेऽपि ' अठंवा हेउंवा पसिणं वा ' इति पाक्षिकसूत्रे " स अठं सहेउयं सवागरणमिति " पर्यूषणाकल्पाध्ययने हेतूपदेशः स्पष्टः । अत्र सुत-स्थानेऽपि रिपुभावः चतुर्थे पितृभावस्तनौ आयुर्भाव मृत्युभवनेः जन्मभाव आय-श्चेत्यादिसांकर्येऽपि नदोषः रूपलक्षणवर्णानां क्लेशदोषसुखायुषं वयप्रमाण जातीनां तनुस्थानात् निरीक्षयेत् ॥ १ ॥ इति ज्योतिः शास्त्रेऽपि आयुः सुखादीनां अष्टमचतुर्थ भवनभावानां तन्वादिषु साङ्कर्यात् दक्षिणहस्ते

---

२ अश्विने षोडशशत कराधिपरवेः कन्यासंक्रमस्य राशिचक्रे नामिकारूपदक्षिण-दिशः स्वामित्वात् ॥

सृष्टा भवनानि वामे संहाररीत्या तत् पुंसः सरलस्वभावात् नार्यावामस्वभावत्वात्, तदपि कथमिति चेत् नाभिस्थनाड्या वामावर्त्तत्वादिति केचित् रक्ताधिक्यादित्यन्ये दिवस्तुस्वभावादित्यपरे। स्त्रीवेदोदयादितीत्रे। वयंतुब्रूमहे पुत्रार्थी रमयेद्धीमान् बहद्दक्षिण नाडिक इति विरेकाविलासवचनात्। वामनाडीप्रवृत्तौ गर्भोद्भवः तथा वामकुक्षावेवस्थानात् वामाङ्गत्वं तेन वामहस्तं वैद्याः परीक्षन्ते। यद्यपि ऊर्ध्ववरेखा पञ्चकसद्भावएवावश्यं भवनव्यक्तिर्नसार्वत्रिकी तथापि तत्स्थानभावनया एव तद्भावः गर्भोत्पत्तौ अन्तर्मुहूर्ते व्यतीते सर्वेन्द्रिय पर्याप्तौ श्रोत्रनाशानेत्रजिव्हाद्याकाराभावेऽपि मनुष्यस्य पञ्चेन्द्रियत्ववत् दिवसे तत्तन्नक्षत्रग्रहानभिव्यक्तावपि तद्भावनवत् राहुकेत्वोः सदा अदर्शनेऽपि तत्तद्राशौ तच्चिन्तनमेव न चैवं तत् फलप्रसङ्गः तथा संभावनया व्यवहारात् ब्राह्मणानां पठनं क्षत्रियाणां शौर्यं जाति सम्भावनया व्यवह्रियते। चौरस्थाने चौराभावेऽपि भयोत्पत्तेः। ललाटे कस्यापि रेखाणामभावेऽपि तद्विमर्शवत् सामान्ये नात्राप्यदोषात्, आयुर्लेखापितृलेखयोरपि कस्याप्यनभिव्यक्तौ तत् फलस्यानुभूयमानत्वात्, न चैवं रेखाया अभावेऽपि तत् फलोपपत्तौ रेखाव्यक्तेर्वैयर्थ्यमिति वाच्यं। सर्वरेखासु तथात्वाभावात् व्यक्तावेव फलं दधुर्नचेल्लक्षणा शास्त्रोच्छेद एव आयुः पितृलेखयोरावश्यकत्वादनभिव्यक्तावपि तत् फलानुभवदर्शनात्तथा व्यवहारस्तद्वज्जन्मपत्रेऽपि दारिद्रस्य अधार्मिकस्य वन्ध्यस्य राज्यधर्मसुतभवनव्यवहार इवेति कृतं विफल जल्पैः। अक्षयेति पत्रादिवत् विनाशाभावात् वहुकालस्थायिनीत्यर्थः। अत एव यावज्जीवमिति अन्यस्यां जन्मपत्रिकायां रेखाभावे वर्तयित्रा विन्दुः स्वज्ञानाय दीयते, न चेदभावे नैवसाध्यसिद्धिरत्रापि रेखाभावमात्रमेव

---

१ एकास्मिन्नेव ज्ञातव्येचक्रे गतिद्वयं कथमिति न वाच्यं नरपतिजयचर्यायां भूचरखेचर चक्रे सृष्टा संहारेतावोभयगतिः मेषादिद्वादशोच वाम मार्गेणभूचरं तस्योर्ध्वं नरवेचरचक्रं सव्यमार्गेण विन्यसेत् इतिएक चक्रेगति द्वयम् ॥

सूचकं ब्रह्मणो भ्रमाभावात् यद्वा सूक्ष्माविन्दवोऽपि सम्भाव्या नैषधीये तल्लक्षणोक्तेः ।

यतः—किमस्य लोम्नां कपटेन कोटिभि-।
विधिर्न लेखा भिरजीगणद्गुणान् ।
नरोमकुपौघमिषाज्जगत्कृता ।
कृताश्च किं दूषणशून्यविन्दवः ॥ १ ॥

यदीयं जन्मपत्रिका न, तदा कथमस्याः पार्श्वे स्पष्टनरवरूपग्रहा द्वादश-भाव तत् सम्बन्धि युक्ताश्चाङ्गुलीषु भाव कुण्डलिका ॥१६॥

अन्वयेन हस्तं व्यावर्ण्य व्यतिरेकेण तदाह—

नास्ति हस्तात्परं ज्ञानं त्रैलोक्ये सचराचरे ।
ब्राह्म्याच पुस्तकं हस्ते धृतं बोधाय जन्मिनाम् ॥ १८ ॥

नास्तीति । परं—उत्कृष्टं ततोऽधिकं ब्राह्मया इति सरस्वत्याः प्रतिबिम्बे ध्याने वा तथा दर्शनात् वामे पुतस्कं धारिणीमभयदां साक्षस्रजं दक्षिणे भक्तेभ्यो वरदानपेशलकरां कर्पूर कुन्दोज्ज्वालामिति भणनात् । बोधायेति लोकानां ज्ञापनाय हस्तादन्यत्र ज्ञानस्थलं नेति । नचेदङ्केस्कन्धे शीर्षे वा पुस्तकमधास्यदिति भावः ॥१७॥

श्रुतज्ञानिनामत्राभ्यासः श्रेयान् केवलज्ञानिनामपि तमेवाह—

तीर्थंकराणां प्रतिमा हस्तन्यस्तदृशोऽखिलाः ।
तद्धस्त दर्शनान्नान्यत् केवलज्ञानसाधनम् ॥ १९ ॥

तीर्थमिति । तीर्थंकराः श्रीऋषभादयोर्हन्तः तत् प्रतिविम्बानिध्यानमुद्राव-स्थितानि—यथा हि अर्हतां वीतरागत्वं रागकथनादेशग्रहे सर्वग्रह इति न्यायाद्वीतमोहत्वं तत् प्रतिमासु स्त्रीशस्त्राद्यभावाल्लक्ष्यते तथा वामा वामयोः साम्यता सूचकज्ञानविधाने हस्तदर्शनमपि ज्ञेयं प्रतिमारूपात् यद्यपि कासाञ्चित्प्रतिमानां कायोत्सर्गमुद्रायां न हस्ते दृष्टिन्यासस्तथापि

कवेरूत्प्रेक्षा वाक्यत्वान्नदोषो यद्वा यथा हस्तस्तथापाद इति सामुद्रिकवचनात् वैद्यकशास्त्रेसुश्रुते एकस्मिन् सावियभागे उक्ते इतर स विश्वबाहुख्यानाच्च "यथा हस्तयोरिन्द्रस्तथा पादयोर्विष्णुरिति" सुश्रुतशारीरे इन्द्रानुजविष्णु-स्थान पादाङ्गुष्ट दृष्टिन्यासात्करदर्शनमेव ज्ञेयमेवं विष्णुप्रतिमायामपि उदस्त शङ्खचक्रहस्तत्वं ज्ञापकं बोध्यम् ॥ १८ ॥

अथ ग्रन्थस्य नाम्नि श्लेषोक्त्या कविः स्वनाम्ना अन्वर्थतां दर्शयति ॥

**सामुद्रिकोद्बोधि पयोनिपीय मेघो रसंवर्षति मृष्टमुर्व्याम् ।**
**समेधतां तेन सुखेन लोकः श्रीहस्तसञ्जीनवनमेतदाप्य ॥१९॥**

सामुद्रिकोद्बोधीति । मेघोग्रन्थकृत् समुद्रेण मुनीन्द्रेण प्रणीतं सामुद्रिकं लक्षण शास्त्रं तत् उद्बोधिर्ज्ञानं तदेव पयः निपीय आदृत्यमृष्टं निर्दोषीकृतं निर्मलं रसं शास्त्र

ग—नरा हस्त दृशोऽखिलाः इत्यपि पाठः

वाक्य रसं उर्व्यांभूमौ भूमिस्पृशितात्स्थ्यात् तद्व्यपदेशो मञ्चाः क्रोशन्ति ग्रामो नष्ट इत्यादिवत् वर्षति प्रसारयति शास्त्ररचना विशेषद्वारा, अनेन स्वकपोल कल्पिताशङ्का ग्रन्थस्य व्युदस्यते तेन हेतुना पूर्वानुसारी ग्रन्थोऽयमिति जानन् हस्तस्य—हस्तज्ञानस्य सञ्जीवनमिव—उद्दीपनमिव यत्तत् आप्य लब्ध्वा लोकः सुधीर्जनः सुखेन तत्तान्निमित्त ज्ञानजन्य लाभेन समेधतां वृद्धिं प्राप्नोतु इत्याशिर्वचोमङ्गलाय पक्षे समुद्रोद्भवं उद्बुध्यते उल्लसतीत्युद्बोधि पयोजलं पीत्वा मेघो जलदः मृष्टं स्वादु रसं वर्षति अब्दैर्वारिजिघृक्षयावगतै-रित्यादिकविसिद्धान्ताल्लोको जलस्थलनभश्चारि जन्तुः श्रीहस्तसञ्जीवनं सम्यक् वस्त्रादिना गलितं जलं प्राप्य सुखी भवतु ॥ १९ ॥

**इतिश्री हस्तसञ्जीवनग्रन्थे सिद्धज्ञानप्रकाशके**
**शास्त्रप्रारम्भाधिकारः सम्पूर्णः ॥**

---

# अर्हम्

अथ निमित्तज्ञानं केवलं शास्त्रादेव न ज्ञातुं शक्यं, अनन्तत्त्वात, लक्षणशास्त्रस्य ततोऽप्यधिकत्वात् परीक्षाया इति । तेन इष्टध्यानजापादिकथन मावश्यकं येन वाक् सिद्धिस्तत्तत्प्रतिबंधकदुरितध्वंसेन सञ्जायते ततपूर्व भणिते हस्तदर्शने लक्षणविमर्शः केवलं न प्रयोजनं किन्तु तीर्थयात्रारूपं पुण्यमुद्भवति तदाह——

सूलेऽङ्गुष्ठस्य स्याद् ब्राह्मयं तीर्थं कायं कनिष्ठयोः ।
पित्र्यं तर्जन्यङ्गुष्ठान्तदैवतं त्वङ्गुलिमुखे ॥ १ ॥

मूल इति । ब्रह्मणो ज्ञानस्य हितं योग्यं वा ब्राह्मयं तीर्थं तीर्यत अनेन दृष्टेनेति तीर्थं, अङ्गूष्टस्य मोक्षजापेऽधिकारात्, ज्ञानसाधनत्वेन द्विजानां स्नानादौ तदुपयोगेन बुधस्य स्थानत्वेन तन्मूले तद्ध्यानं--तदग्र चन्द्रस्य सर्वज्योतिर्मुख्यत्वात् कनिष्टयोर्मूले कायं शद्वयोज्यं यशोभरसूचकं जन्मस्थानत्त्वात् कायलब्धिरूपं जीवितरेखाया स्ततः प्रादुर्भावात् श्वासोश्वासभाषापर्याप्तिसमुच्चय लक्षणं वा ऋषीणां द्विजानां तन्मूले जलदानात् तीर्थं ध्येयम् । पितृणां हितं पित्र्यं मृत्युरेखास्थानात् पितृणां तत्र जलदानात् पितृरेखा संप्राप्त्या जीवितरेखा समाप्तिस्थानाद्वात्रिवेणी सम्भवात् तीर्थं ध्येयम् । देवतानां इंद्र दैवतं अङ्गुलीमुखे मध्यायां गुरुस्थानत्वेन गुरोरपि सर्वदेव पूज्यत्वेन सर्वदेवसंगमात्, अनामिकायां सर्वदानवपूज्यशुक्रस्थानत्वात् कनिष्ठायां शनिराहू सरीसृपाविति नागस्य श्यामलत्वप्राधान्येन पश्चिमायां शनेराधिपत्येन नागलोकस्य तत्रावस्थानात् तत एव लोहमुद्रा तारायां धार्या एवं च सुरगुरुसूरिसक्को उवज्झाया थुण साहु मन्दो इति न्यासानुसारात् सिद्धम् । तर्जन्यां शत्रुनिग्रहार्थं जपाधिकारात् लोहिताङ्गस्य स्त्रीणां रक्तवसन परिधानमाधिकृतस्य सर्वग्रहेषु मुख्यस्य राशिमुख्यमेषाधिपस्य मङ्गलस्यावस्थानात्

सूर्यस्याप्यस्यां राश्यादि चक्रे तथा मुष्टिकरणे चन्द्रस्यापि प्राप्त्या सर्वज्योतिर्देवसंगत्या च तीर्थं ध्येयम् ॥ १ ॥

अथ परसम्मतिं निदर्श्य स्वमतमाह—

शत्रूञ्जयस्तुतर्जन्यां मध्यमायामुज्जयन्तकः ।
अर्बुदः खलुसावित्र्यां कनिष्टायां समेतकः ॥ २ ॥

शत्रुञ्जय इति। अङ्गुलीषु मन्त्रन्यासे आद्यत्वात् आद्य प्रभुपदं शत्रुञ्जयस्तर्जन्यां तस्यां जापेन शत्रुजयादन्वर्थात्, मध्यायां जापेन धनप्राप्तेर्धनाधिष्ठायिकालक्ष्मीरपि तत्रैव तन्मूले ऊर्ध्व रेखया धनसमृद्धिसर्वदेशख्यात्याचार्य पदप्राप्तेश्च सन्ध्यायां द्वारकापूर्यां मध्याह्ने रैवताचले इति प्रभासखण्डे भणनात् लक्ष्मीपतिनिवासेन उज्जयन्तो मध्यायां ध्येयः गौरी साविली शत्रुपत्नी हिमवतः पुत्री शिवस्वरूपादर्बुदोहिमवन्नगराजसूनुरिति लोकप्रतीत्या परिशेषा द्वा तत्र ध्येयः कनिष्टायां पञ्चतीर्थ्यां कनिष्टत्वात् विंशविंशोपकानां संख्याया विश्रामाद्विंशार्हन्निर्वाणभूमिसमेतकस्तीर्थं तत्र ध्येयं समैस्सर्वैः समतारूपेण सर्वत्र अवक्रै र्भा ज्ञानं तत् सहितैः सिद्धैः इत प्राप्तः सम्मेतकः सम्मेदको वा सम्यक् वृद्ध इत्यर्थः ॥ २ ॥

अङ्गूष्ठेऽष्टापदगिरिः पञ्चतीर्थान्यनुक्रमात् ।
स्वहस्तदर्शने नैव वन्द्यते प्रातरुत्तमैः ॥ ३ ॥

अङ्गूष्ठ इति। अङ्गौ शरीरावयवे तिष्ठतीत्यङ्गूष्ठः। तत्र रजताद्रि कैलासापरनामाष्टापदतीर्थं ध्येयं श्री आदिदेवस्य सूर्यस्वरूपेण ध्यातव्यस्य तत्र ब्रह्मपदापरपर्याय मोक्ष प्राप्तेः। अङ्गूष्ठोहि स्फटिकवन्निर्मलो जीवस्वरूप प्राधान्यात् तत एव स्फटिकोमोक्षदः परं इति जपमालायाः स्फाटिक्याङ्गूष्ठे मोक्षजापस्थाने अवश्यं सन्निधानं अष्टापदस्य स्फटिका चलत्वात् यद्वा योगप्राधान्येन शिवस्वरूपस्य अर्हतामाद्यस्य स्फटिक धवलध्यानं यतः—

शुद्धस्फटिकसंकाशं तेजोमूर्तिमयंवपुः ।
जायते क्षीणमोहस्य सप्तधातुविवर्जितम् ॥१॥

यद्वा—अङ्गूष्ठस्य अक्षीणमहानसादिलब्धीनां हेतुत्वेन बाल्ये तीर्थं कराणां तत एव परमामृतपानेन पुष्टेः सकलसिद्धिमूलत्वात् । आद्यप्रभोः सिद्धिस्थानं तीर्थेष्वाद्यमष्टापदरूपमत्र ध्येयम् । मन्त्रन्यासे प्रथमत्वादङ्गुलस्य तेनैवाङ्गूष्ठाद्या पञ्चणवाः सितपीतारुणा इत्यग्रे वक्ष्यते । यत्तु अङ्गूष्टः पञ्चवर्णः स्यादित्यादि तन्मुष्टिवस्तु ज्ञानाय अन्यथोज्वलत्वमेव सकलज्योतिर्मुख्यचन्द्रसूर्ययोः स्थानात्तद्व्यञ्जकमपि पञ्चदश्यास्थानं स्पष्टम् । शिरसि चन्द्रात्, शिवात्मकतया वा औजस्यमनेनाभिप्रायेण दक्षिणाङ्गूष्ठयवे शुक्लपक्षे जन्मोक्तिः प्राचां उत्तमैः पुरुषोत्तमैर्मोक्षाभिलाषिभिः पितृकर्मादिकारकाणामनुत्तमत्वात् ॥ ३ ॥

कनिष्ठायां सम्मेतकस्तथा अङ्गूष्ठेऽष्टापदगिरित्यिस्यदृढीकरणाय पुनर्ध्यानान्तरं प्राह—

विंशोपकाविंशजिना अङ्गुष्ठादाद्यतीर्थपात् ।
प्रत्यग् दक्षिणपूर्वोदक् तले शेषा चतुर्जिनाः ॥ ४ ॥

विंशोपका इति । विंशोपकशब्देनात्र त्रयोभागा अङ्गुलीनाम् न ग्राह्या स्तेषां पञ्चदशसंख्याकत्वात् किन्तुभागानां सन्धिरेखा रूपा विंशोपकास्तेषामुत्तमाङ्गुलीषु विंशतिसंख्याकत्वात्, तद्ध्यानं यद्वा दैवतं त्वङ्गुलीमुखे इति वचनात्, तथापि जिनध्याने विंशतिः पूर्यते । शेषा नमी । १ नेमि २ पार्श्व ३ वर्द्धमान ४ रूपा । यद्वा विंशजिनाविहरमाणतीर्थकृतः चतुर्जिनी श्रीऋषभ १ वर्द्धमान २ चन्द्रानन ३ वारिषेण ४ रूपा शाश्वतजिना इत्यनेन सर्वशाश्वतजिनध्यानं सूचितं । एतद्ध्यानं ज्ञाननैर्मल्याय ॥ ४ ॥

रेखाश्रयेणध्यानात् । राज्यश्रीर्भवतार्जितेत्यादिना हस्तवर्णनं मनस्यादधानः श्रीऋषभप्रभुपादुका तीर्थमक्षयवटं निदिध्यासुराह—

---

१ नमो अरिहंताणं–इति न्यासात् ससिधवला अरिहंता, रत्तासिद्धाय सूरिंणे कणयं तेन तर्जन्यां मङ्गलाश्रितायां–अरुणत्वं अरुणस्य सितेऽन्तर्भावात् । मरगय भाऊ उवझाया सावित्र्यां उपाध्यायन्यासाश्मीलत्वं पवनाश्रयात् सामासाहुसुहंदितु इतिस्तोत्रे तारायां साधुपदं न्यासश्यामत्वात्.

पितृरेखाभवेद् गंगा मातृरेखा सरस्वती ।
आयुरेखात्र यमुना तत् संगस्तीर्थमक्षयम् ॥ ५ ॥

पितृ इति । अङ्गूष्ठरूपाष्टापदगिरि प्रत्यासत्या पितृरेखा गंगा यद्यपि दक्षिणहस्ते दक्षिणदिशो रेखाया आगमाद् गंगाध्यानमयुक्तं उत्तरस्यास्तदागमात्तथापि गंगाया त्रिपथगतत्त्वेन तथा विष्णोः पादे ब्रम्हणः कमण्डलुनि हरस्य शीर्षे इति स्थानानि, नियमात् आगासे गंगसोऽव्व इत्यागमोक्त्या देवगंगाया आकाशस्थानं तच्चाङ्गूष्ठशीर्षे इति विमर्शात् पितृरेखायाः गंगास्वरूपं युक्तमेव यद्वा पर्यङ्कासनस्थाने वामहस्तपितृरेखापि मिलति सैव गंगा जात्याङ्गीकृते अशुद्धेऽपि पावित्र्यव्यवहारात् तथा विद्यारेखायास्तदन्तर्मिलनात् सरस्वती मातृरेखा न च रेखायां रक्तत्वं न सम्भवतीति त्यागाय रक्तागंभीरा तथा " अरवीण घणाहवं तिरत्ताहि " इत्यग्रे तत् फलकथनात् मातृरेखायामेव धनोदयात् तथा आयुः पर्यवसाने मृत्युर्यमस्तत् संनिधानमित्यस्या रेखायाः पर्यन्ते मृत्युरेखा स्पष्टैवेति यमभागिनी यमुना आयुरेखा तत् संगः अक्षयतीर्थं प्रयागस्थाने वटः श्रीयुगादिप्रभोर्ज्ञाने वटसामीप्यात् त्रिवेणी त्रिलोकप्रतीतं तध्द्यानं प्रान्ते समाधि मरणासये । अन्यदपि दिग् लभ्य ज्ञाने वर्षादिज ज्ञाने भौमादिविमर्शने प्रयोजनम्—यद्यपि वामहस्ते स्त्र्यंगाद्रक्ताधिक्येन रक्तानामनदी ऐरवनक्षेत्रस्था तस्या एव त्रिवेणी स्थानत्वं युक्तं तथाप्यत्रत्य लोकबोधाय गंगादिनिर्देशः यद्वाजलाशय मात्रे सर्वराजन्यानां राजेति कथनवत् गंगावचनेऽप्यदोषः गंगापि महानदी देवाधिष्ठिताऽष्टापदतीर्थमूलस्पृग् केषाञ्चिन्महर्षीणां सिद्धपदमित्यादि श्रद्धयाध्येया द्रष्टव्या स्मरणीया जैनानामपि लोकभावनायां भरते गंगाध्यानस्य संवररूपात् यथा रामस्य परमेश्वरत्वेन शैवानां श्रद्धा तथा जैनानां किन्तुपरमर्षितया शिवप्राप्तत्वेन तदुक्तं प्राक् श्रद्धाविशेषात् फलविशेष इति ॥ ५ ॥

अथ सामान्यतः करविलोकने मन्त्रजपार्थं हस्तप्रक्षालनरूपं न्यासमाह—

अङ्गुष्ठादिपञ्चपदीः नमस्कारस्य चिन्त्यते ।
चतुःपदीचूलिकायाश्चतुर्दिक्षुतले स्मृता ॥ ६ ॥

अङ्गूष्ठादिरिति स्पष्टं । नवांशचक्रादौ तध्द्यानं, । तत्र अङ्गूष्ठे अर्हत्पदं " नमो अरिहंताणं " इति न्यासः । अर्हतां पञ्चवर्णत्वात्तेन मुष्टिज्ञानेऽङ्गूष्ठः पञ्चवर्णः, एवं तर्जन्यां सिद्धन्यासाद्रक्तत्वं मध्यायामाचार्यन्यासात्पीतत्वं, अनामिकायां उपाध्याय न्यासान्नीलत्वे युक्तेऽपि स्नानदैवतत्त्वात् शुक्रस्थानात् शान्तिकपौष्टिककार्ये जपाधिकारात् धर्मरेखामूलत्वात् दक्षिण हस्ते जपप्रारम्भे प्राथम्यात् सितत्त्वं शुक्ले पक्षे दर्शनस्पर्शनादिषु कृष्णे तु नीलत्वमेव, अत एव विप्रौ शुक्र—गुरू इति वचनात, अस्यां रूप्यमुद्राधरणमेव स्मार्ता प्राहुः विप्राणां सावितत्वेन प्रसिद्धेः यत्तु आचारादिनकरादौ साविञ्यां सुवर्णमुद्रधारणमुक्तं तदस्याः क्षत्रियत्वसूचकं । यद्वा सुवर्णमपि श्वेतं स्यादेवेति । पवनत्वात् समाङ्गुलीत्वात् वर्णद्वये पीतनीलरूपे हरितोऽपि संभवात् प्राणो हरित्, अपानः कृष्णः, समानः शुक्लः, उदानोरक्तः व्यान इन्द्रधनुः प्रभ इति विविध वायुवर्णाच्च न दोषः, तारायां साधुन्यासात् शनिस्थानात् रात्रिप्रत्यासत्या श्यामत्वं मिथुनस्थानात् नीलश्यामयोरैक्यान्नीलत्वमपि । एवं च पञ्चपरमेष्ठिन्यासेन जापः पूजाद्यर्थं शौचं विधाय दिक्पालाह्वानसान्निध्याय चतुःपदीपरिकररूपाध्येया ॥ ६ ॥

हस्तदर्शने पुण्यसाधनत्वं पारंपर्येण द्रढयति—

एवं सर्वत्रमन्त्रेषु देवताराधने स्मृतः ॥
करन्यासस्तेन देवाः सदा सान्निध्यकारिणः ॥ ७ ॥

एवमिति प्रकटार्थम् ॥ १ ॥

हस्तदर्शने पुण्यसाधनत्वं पारंपर्येण द्रढयति—

हस्तद्वयायुरेखान्तर्योजने प्रातरुन्मुखैः
प्रत्याख्यानस्य समये ध्येयासिद्धासिलाबुधैः ॥ ८ ॥

हस्तेति । पूर्णं दर्शनमेतत्, एकहस्तदर्शनं तु खण्डरूपत्वा न्निषिद्धं प्राक् । देवानामपि, अर्हदादीनां सिद्धेन्तर्भावात्, तद्ध्याने सर्वध्यान प्रतीतेः सकलनयात्मक स्याद्वादवतोऽञ्जलिदर्शनस्यौचित्यात् ॥ ८ ॥

अथ स्पर्शने पृच्छाज्ञानाय न्यासमाह—

तलं सिंहासनं साक्षात्तत्रस्थस्त्रिजद्गुरुः ।
आदिदेवोऽङ्गुलःसेव्यो जयादि देवताजनैः ॥ ९ ॥

तलमिति । एवं ध्यात्वा ॐ जये स्वाहा । ॐ विजये स्वाहा । ॐ जयन्ते स्वाहा । ॐ अपराजिते स्वाहा । ॐ आदीश्वराय नमः । इत्ययं तारादिर्न्यासः ततः एवं योगेऽङ्गूष्ठस्य प्रदक्षिणादानं, आदिदेवत्वात् विद्यासाधनकार्येच्छा समये न्यासः कार्यो. वर्षज्ञानादाराभ्य चूडामणिशास्त्रानुसारेण पृच्छा फलं यावत् ॥ ९ ॥

ॐ जये विजये स्वाहा जयन्तेऽथापराजिते ।
ॐ आदिदेवाय नम एवं न्यासो विचिन्त्यते ॥ १० ॥

ॐ जयइति गदितार्थम् ॥ १० ॥

अथाङ्गुलीषु भागत्रये गोत्रधनायु रूपरेखात्रये शिरःप्रभृतिषु अवयवत्रयेषु त्रिसंख्यानियमनहेतुज्ञानाय ध्यानमाह—

अं इत्यर्हन् देवदेवो विश्वम्भरः परापरः
गुरुर्गुशब्देनाख्यातस्तयोर्धर्मस्तदीरितः ॥ ११ ॥

अमिति । अं—प्रतिसानुस्वारत्वं शिवबीजात् सिद्धरूपेणार्हद्ध्यानार्थं ॥ अक्षरार्थं चिन्तनया ध्यानारम्भः ॥ ११ ॥

त्रिकालं सामुद्रिकशास्त्रबोधकेन स्वं हस्तं वीक्ष्य किं—कर्तव्य—इत्याह—

भक्त्यादेवे गुरौ ध्यायेत्तस्मात्तत्वे त्रयं करे ।
लीतिलक्ष्मी चतुर्धापि स्यादस्याराधकाङ्क्षिणः ॥ १२ ॥

भक्त्येति ॥ १२ ॥

अथ जन्मपत्रभाव कुण्डलिकादौ ग्रहभावनार्थं तन्मूलध्यानमाह.

यथोदयगिरेःशृङ्गे प्रागऽभ्युदयते रविः
तथाङ्गुष्ठे ग्रहाज्ञेया नखाश्चन्द्रमुखाःपरे ॥ १३ ॥

यथोदयेति । प्रातः पाणिदर्शने अङ्गूष्ठस्य रविस्वरूपेणध्यानं मैमित्तिकस्याऽभ्युदयाय, यद्यपि अङ्गूष्ठस्य मध्यन्यंशे सूर्यस्थानं तथापि ध्यानसमये

सर्वोऽप्यङ्गूंष्ठस्तद्भावेन भावनीयः सूर्यप्रतिविम्बे सूर्यवत्, युक्तं चैतत्, अतएव राज्ञस्तथा गुरोरासनादेर्वैनयिकोपचारः, ननु नखादिषु प्रकाशवैशिष्ट्यात् चन्द्रादिप्रतिपत्तिः सुबोधा; अङ्गूष्ठमध्यव्यंशे सूर्यश्रद्धा कथं घटत इति चेन्न; पञ्चदश्यास्थानत्वेन चन्द्रवत् सूर्यस्यापि श्रद्धानमावश्यकमेव दाहिणं हत्थंगुठ्य मभेयजवेण दिवस जम्मं से इति प्रकरणकार वचनाद्दिनश्रद्धाने सूर्यश्रद्धायाः सुलभत्वात्, तेन रेखोपरेखादि सर्वसूक्ष्मव्यक्तिर्दिनत्वादेव करतलेन तथा करपृष्टे तत्र रात्रित्वात्; चंद्रादिग्रहप्रकाशोऽप्यऽस्मादेववेद्यः; किञ्च पुरुषस्य स्त्रिया वा प्राङ्मुखावस्थानेऽङ्गूष्ठः प्रागेव तद्दिशोऽधिपः सूर्य एव प्रागुक्तः नक्षत्रचक्रे सामान्यतो भरण्यपि प्रागेवयस्यां रविरुत्पन्नः तथा रेवत्यपि अङ्गूष्ठ एव सूर्यपत्नी रवेर्वाहनमश्वस्तेद्रखाप्यङ्गुष्ठमूल एव त्रिवेण्या अर्वाग् अश्वप्रियभोजनं यवश्रेणिस्साप्यत्रैव, तथा अङ्गूष्ठेव्योममूर्द्धगमिति। व्योमसूर्यस्याश्रय स्तदपि प्रत्यासन्नं तेन मध्यांशस्थितो रविरूर्द्ध्व[3] दृष्टित्वाद्व्यो-[4]मदर्शीत्यपि ज्योतिः शास्त्रवचः सुसाधम्। चन्द्रकालानले ऊर्वभागतो नक्षत्रचारः सूर्यकालानलेत्वधोभागतस्तेन चन्द्र उपरि सूर्याच्चरति व्यक्तं चैतन्नरपतिजयचर्यायाम्। आगमेऽपि "तारविचंदरिखा" इति वचनात्तथैव तेन चन्द्रस्य कामोद्दीपकत्वात् महाराजत्वात् फलाहानिवृद्धेश्च हस्तपृष्टे राहुकेतू इति राहोः प्रत्यासत्तेश्च शिवस्याङ्गूष्ठस्य मुर्द्धस्थायिनो नखरूपत्वं तद्भागादधोभागे सूर्यस्थानमपि। तथा मासचक्रेऽपि नक्षत्रचक्रमादङ्गूष्टपूर्वमाद्रपदन्यासादङ्गूष्ठो भाद्रपन्मत इति वचनम्। भाद्रपदे सिंहसंक्रमात् सूर्याधिकारः अङ्गूष्ठामृतपानमर्हतां तथाऽक्षीणमहानसलब्धि प्रमुखमपि आदित्याज्जायते वृष्टिरितिस्मृत्युक्तं कार्यमपि सूर्यस्य तत्रैव, एवं अवनीशोदिनमणिरिति वाक्याद्राज्ञां तिलककरणमङ्गूष्टेनैवेति लौकिक कार्यमपि बोध्यं, तथागमे पूर्वस्यां ज्योतिर्विमानवाहकतया युक्तस्य ज्योतिषेऽ-

---

१ तुला कोटिन्यायेन मध्यग्रहे सर्व ग्रहस्तेन मध्यभागेरवौ सर्वत्राङ्गुष्टे रविस्ततः साधु लोकाश्रयाद्ग्रामोऽपि साधुरित्यादिव उपचारात् अङ्गूष्टो रविरित्युक्तम्—२ दोचंदापभासिसुदोसुरातवसु इत्यागमात्॥ ३ भौमार्कोव्योमदर्शिनौ। ४ भुननदीपके।

पि सिंहराशेः प्रतीतेः सूर्यस्य भवनमपि । तथास्वरोदयशास्त्रे ' चन्द्रो वामे दक्षिणे सूर्य ' इति वचनात् । दक्षिणं नेत्रं भानुरूपं यदुक्तं मुरारि नाटके–

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकी लक्ष्मणः
कोकप्रीति चकोरपारणपटुर्ज्योतिष्मतीलोचने ।
याम्यामर्द्धविबोधमुग्धमधुर श्रीरर्द्धनिद्रायितो
नाभी पल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥ १ ॥

नाममालायामपि वामं तु नयनं सौम्यं भानवीयं तु दक्षिणमिति ततः पृष्टवाभिमुख्यो मातुश्च ललाटकृतसम्पुटेतिइति वाग्भटशारीरवचनात् । अङ्गूष्ठे सूर्यस्य प्रत्यासत्तिरपि तेनाङ्गूष्ठमध्यत्र्यंशे सूर्यप्रतिपत्तिर्युक्तैव शिरो १ मुखं २ तथा कण्ठ ३ इति भणिष्यमाणत्वात् मुखे दक्षिणदिग् भाग नेत्ररूपयोगात्, अथान्यग्रहवत् सूर्यप्रकाशोऽपि दर्शनीय इति चेन्न; मध्यभागस्थ सूर्यप्रकाशेन सर्वस्यापि दक्षिणहस्तस्य तले सूर्यप्रकाशदर्शनात् अत एव नतत्रान्य ग्रहप्रकाशो यद्वा दक्षिणायनत्वेन स्वरूपप्रकाशः । यद्वा अ इ उ ए ओ स्वरा अङ्गूष्ठतः क्रमादिति वक्ष्यमाणत्वेन ऊर्ध्वरेखा रूपस्य अकारस्य स्वरूपेण आकार प्रत्यासत्या रवेर्दर्शनम् । इतरथा वाचकरूपेण सूर्याकारेण वा स्पष्टं भाव्यं न च सूर्याकारः कुत इतिवाच्यं सिंहासन दिने शाम्यां नंदावर्तेन्दु तोरणैः पाणिरेखास्थितैर्मर्त्यासर्वाभिमानसंशय इति विवेक विलासे तदुक्तेः– अत एवाङ्गूष्ठमूलस्य नृपासनत्वं सिंहासनाकारस्य तत्र दक्षिणहस्ते सम्भवात् ततो ग्रामवासिनि लोकेग्रामश्चलतीत्यादौ आश्रये लक्षणया ग्रामव्यवहारवत् । अङ्गूष्ठा रविरिति सुष्ठूक्तं स्त्रीणामङ्गूष्ठे सूर्य रुपादर्शभरणस्थानात्, यद्वा अङ्गूष्ठे इति सप्तम्यन्तं अङ्गूष्ठमध्ये इत्यर्थः । नखा इति अङ्गूष्ठनखश्चन्द्रस्तर्जनी नखो मङ्गलस्ततो जयायाश्च गुरुः । प्रोक्त इति सर्व-

---

१ अरिहंताणमिति न्यासस्थाने शशी । रविमङ्गलसिद्ध इति कथनात्तन्यासे नमो सिद्धाणं तर्जन्या गुरुबुद्धा सूरीति वाक्यात् "नमो आयरियाणं" इति । न्यासे मध्यायां गुरुः । साहु सणी राहु इतिकनिष्ठायां स्पष्टम् ।

तोभद्र चक्रोक्त्या मध्यानखो गुरुः सावित्रीनखः क्रमागत; शुक्रः कनिष्ठानखः शनिः करपृष्टार्द्धे राहुः केतुश्चेति । एवं नवग्रहभावनया सर्वेग्रहा प्रातर्द्रष्टा प्रसन्नाः स्युः नवग्रह मुद्रिका धरणदर्शनवत् । बुधस्य सदासुरप्रत्यासत्त्या स्वप्रकाशादङ्गुष्ठमूले भावनैव दर्शनं तत्र भागिनी भ्रातृरेखा प्रत्यासत्या कन्याराशि बुधस्तत्रैवोचितः । एवं पुंसो लोकरूपस्य नाभिस्थानीयो मेरुस्तत रुत्तरभागेऽपि वामहस्ते ग्रहव्यवस्थाज्ञेया । याम्योत्तरयोर्ज्योतिश्चक्रद्वयसद्भावात् पादनखानां प्रतिफलनमात्रेण समाधिःतत एव भगवत्यां पंडिबिंदाइ वा पडिसूरा इवा इतिसूत्रं व्यक्तम् ॥ १३ ॥

अथ हस्तवीक्षणे मूलमन्त्रन्यासमाह—

ॐ कारमादित्यमुखे वाग्बीनं तारकानने ।
ह्रींबिजिं भगवत्यङ्के श्रीसौभाग्यवती स्थितम् ॥ १४ ॥
क्लींकारं तु प्रदेशिन्यां चतुर्दिक्षु तले पुनः ।
अर्हं नमोनमः सिद्धवर्णाष्टकमिदं जपेत् ॥ १५ ॥

ओ२ मिति । परमब्रह्माश्रय शिवरूपत्वादादित्योङ्गुष्ठस्तन्मुखे द्विजनायकाश्रिते ॐकारं, ततस्तिथिचक्रराशिचक्रचन्द्रचक्रादिषु प्रथमत्वात्; नियोग विद्याप्रावीण्यज्ञापकमुद्रापरिधानात्, ब्राह्मणी स्वरूपा त्रिकोणत्वाच्च कनिष्टाऽग्रे ऐमिमि सावित्र्यां मायामयब्रह्मशक्तिरूपान्मायाबीजं ह्रीमिति, सौभाग्यमुद्रायां मुख्यत्वात् सौभाग्यवती मध्या तस्यां धनाधिकारात् श्रीमिति लक्ष्मीबीजं प्रदेशिन्यामूले कलहस्थानात् वश्यकर्मण्यपि रक्तवर्णाधिक्येन मङ्गलस्थानाच्च तदग्रे क्लीमिति कामबीजं ततः पूर्वदिशि प्रदेशिनी प्रत्या सत्त्या अर्हतः पूर्वाभिमुखस्थानादर्हमिति तले तदनु कैलासचैत्ये चतुर्मुख रचनया नमो नमः । सिद्धमिति दक्षिणापरोत्तरदिक्षु जपेत् एतस्य मन्त्रस्य सप्तवारं जापं कुर्वन् नैमित्तिकः पुरोवक्ष्यमाणहस्त चन्द्रबलेन करं गृहीत्वा स्पृशन् तदनु हस्तं वीक्षते यावन्न " जृंभाछिक्का वायामिति " मनोभङ्गावास्यात् ततोमौनं कार्यमितीष्टोपदेशः ॥ १५ ॥

१ ससिसुक्के अरिहंते इति स्तोते नमो सुक्के उवज्झाया पुणं इत्युक्तेः ।

एतदेवाह

ततो हस्तं निरीक्षेत जानीयाद्येन निश्चितम् ।
जायते वचने सिद्धिः सिद्धदेवगुराः स्मृते ॥ १६ ॥

इति स्पष्टम् ॥ १६ ॥

अथ तिथिनक्षत्रचक्रादौ पृच्छोपयोगाय मातृकाध्यानमाह—

अकार इति मध्येर्हन् आकाराद्यास्त्रयोदशः ।
अं अ इत्यङ्गुलीपञ्चदशभागेषु च स्मरेत् ॥ १७ ॥

अकार इति । अकारोऽङ्गूष्ठ शिरोभागे इकारो मध्ये ईकारो मूले उकार शिरसि ऊकारो मध्ये ऋकारो मूले प्रदेशिन्यामिति । अनेन क्रमेण षोडशविद्यादेवीनां ब्राम्ही प्रमुखसतीनां वा स्मरणार्थं षोडशस्वरन्यासः । अत्रानुस्वारस्य स्वरत्त्वं अनुनासिकस्य स्वरत्ववन्नाशिकास्थानात् विसर्जनीयस्य स्वरत्वं अनुस्वारस्यैव द्वैरूप्यात्, पूर्वं उदात्तः परोऽनुदात्त इति मात्रारूप स्वरधर्मोद्वा । चतुर्दशस्वरपक्षे व्यञ्जनत्वमप्यनयोरिति । अत्रानुक्तोऽपि स्वरोपलक्षणाद्व्यञ्जनन्यासोऽपि स्मरणीयः । तद्यथा कः खः गः इति त्रयमङ्गूष्ठ शिरो मध्यमूलेषु घ १ च २ छ ३ इति त्रयं तर्जन्यां ज १ झ २ ट ३ इति त्रयं मध्यायां ठ १ ड २ ढ ३ इति त्रयं सावित्र्यां त १ थ २ द ३ इति त्रयं कनिष्ठायां तथैव चिन्त्यं, एवं धकारादि हकारान्तव्यञ्जनानि वामहस्ताङ्गुलि पञ्चदशभागेषु चिन्त्यानि क्षः पुनर्वाम हस्ततले ध्यातव्यम् । तत एव सरस्वत्या दक्षिणे करे अक्षमाला प्रसिद्धा अत्र ङ ञणानांग जडेष्वन्तर्भावो, नरपति ग्रन्थे तथा वचनात् नमस्कार स्तोत्रे तु "पढमदुसरा अरिहंता चउसरा सिद्धसूरि उवज्झाया दुगदुग सरा कमेण णंनंदतु मुणीसरा दुसरा इत्यादि" ॥ १७ ॥

अथ ग्रन्थकृत स्वेष्टध्यानमाह—

श्रीपार्श्वो वामहस्तोऽयं फणाःशाखास्तदीयकाः ।
श्रीनाभेयो दक्षिणश्च करः शाखाजटास्फुटाः ॥ १८ ॥

श्रीपार्श्व इति । भोगप्रधानत्वाद्वामे तद्ध्यानं भोगप्राधान्यं भोगिराज-सेव्यत्वात् श्रीनाभेय इति । योगप्राधान्याद्दक्षिणे ब्रह्माधिक्यव्यञ्जके करे श्रीऋषभप्रभुध्यानम् ॥ १८ ॥

निमित्तानां सर्व सम्मतत्त्वाद्दर्शनान्तरीयाणामञ्जलिविषयं ध्यानमाह——

**विष्णुर्देवोऽत्रवामस्थः केकिपिच्छाकिरीटभृत् ।**
**नाथः शिवोदक्षिणस्थस्तस्य शाखाजटाः घटाः ॥ १९ ॥**

विष्णुरिति । शिवो महाव्रती योगीश्वरस्तस्य जटास्तेजो रूपाः ॥१९॥

अथ हस्तद्वयवीक्षाया प्रागेवद्दढीकृताया निश्चये ध्यानमाह——

**तयोर्योगे यथोंकारः परमं मङ्गलं भवेत् ।**
**तथाञ्जलिविधानं च सर्वदा सर्वमङ्गलम् ॥ २० ॥**

तयोरिति । श्रीपार्श्वोऽत्र सङ्खेश्वरनामाविष्णुस्थापितत्वात् अकारवाच्यः, अकारवाच्येन विष्णुना स्थापितः स्वयमकारवाच्य एव कर्तरि पञ्चैत्यादि सूत्रेषु तथा रूपात् । यद्वा—अश्वसेनिरिति नाम्न एकदेशे[1] आ इति ग्राह्यं उसभ इति नामैकदेशे उ इति ततस्तयोः पार्श्व ऋषभयोर्योगे ॐ इति अर्द्ध मागधभाषाया अर्द्ध संस्कृतस्येति मिश्रभाषा ग्राह्कम् । स्वेष्टदेवत्वात् एवं व्याख्या। न चेत्, अः अर्हन् उः शम्भुः सिद्धः परमेश्वरः तयोर्योगे ओ३मिति परमं मङ्गलं — तथा मञ्जलिकरणं मङ्गलं नत्वेकहस्तस्तत एव सूर्याघर्घ-दानेञ्जलिकरणं चैत्यवन्दनायां स्वमतेऽप्यञ्जलिमुद्रा प्रसिद्धा एतेन हस्तद्वयेऽपिफलं वाच्यम् ॥ २० ॥

अथ पृच्छा विषये मन्त्रमप्युपयोगाय तदाह——

**ॐहरहुंहः सरसुंसः क्रमतः पञ्चाङ्गुलीषु राजमुखात् ।**
**न्यासो यन्त्रो हस्ते स्थाप्यं तत् सर्वतोभद्रम् ॥ २१ ॥**

ओ३मिति । स्पर्शाधिकारविस्तृतमेतत्, स्वागमप्रसिद्धमङ्गूष्ठादन्यथा सर्वतो भद्रचक्रं नरपतिजयचर्या ग्रन्थोक्तं विचारणीयम् ।

---

१ चिन्तादाविव तद्दशा आयात स्यानिवा वर्णविधाविति न्यासाच्च ।

एवं ध्यानविधिप्रधानमधिकाभ्यासाधिकारात्परं
ज्ञात्वा तत्त्वरुचिःशुचिशुचिधिया श्रीहस्तसञ्जीवनम् ।
श्रीमद्भागवतं प्रसिद्धमतुलं सान्निध्यप्रासादयन्
यद् यद्भक्तिफलं कलङ्कविकलं तत् सिद्धिमायात्यलम् ॥ १ ॥

॥ इति हस्तसञ्जीवने ध्यानाधिकारः ॥

———

## अथ नाम माला ॥

अथ कस्य चित्तथाविधनाममालान्तरज्ञानाभावेऽपि अस्मादेव ग्रन्थाद्बोधाय—उपयोगिनामान्याह—

हस्तः करः शमः पाणिः शयः पञ्चाङ्गुलीः सलः ।
पञ्चशाखः पञ्चशिखः पञ्चाननोवरप्रदः ॥ १ ॥
महाब्रह्मानन्तवीर्यो महादेवश्चसिद्धिदः ।
सिंहासनशक्तिशाली महावीरसुरायुधे ॥ २ ॥

हस्त इति । हसत्यनेन हस्तः, पुङ्क्लीबालिङः कुर्वन्त्यनेन कीर्यते वा कर शाम्यति शमः, पण्यतेऽनेन पाणिः, शेतेऽस्मिन् सर्वं शयः, एवं सर्वत्र निष्पत्तिर्नाम्नोऽवसेया, पञ्चाङ्गुल्यादिनामानि तत्तदाकारक्रिया गुणोत्पन्नानि महाब्रह्मेति ज्ञानमयत्वात्, महादेवो नखचन्द्रधारित्वात् सिद्धदो योगीन्द्रादिहस्तसम्बधात् सिद्धिरष्टधासिद्धचत्यतः । सिंह—अस्य निक्षिपत्यनेन सिंहासनः सिंहवाहन इत्यपि शेष नाममालायां भुजदलमिति ॥ २ ॥

अङ्गुष्ठाश्चाङ्गुलो हंस–शिवो राजा चतुः प्रियः ।
भोगीगणपतिर्विष्णुर्मेरुः सूर्योक्षयो वटः ॥ ३ ॥

अङ्गूष्ठ इति । अङ्गं शरीरावयवं शिरोमुखकण्ठलक्षणं वक्ष्यमाणं लातीति अङ्गुलः हंसो जीवस्यात्र नाड्यां परिभ्रमात् अत एवाङ्गूष्ठाङ्गुलिमध्यस्थं क्षिप्रमाक्षेपमारणमिति वाग्भटे शारीरचतुर्थाध्याये । शिवो हस्ते वितस्तिरूपेण ऊर्द्ध्वीकृते शिवस्थानलाभात्, राजा राज्ञां तेन तिलककरणात् तन्निष्ठनखस्य महाराजत्वात् श्रूयते । चागमे सक्कस्स देविंदस्स देवरणो सोमे नामं महाराया इति भगवत्यामाश्रितस्य महाराजत्वं चतस्रोऽङ्गुल्यः प्रिया यस्य कार्ये ताभिः सङ्गमात्, भोगीति कामशास्त्रेऽङ्गूष्ठात्कामकलावृद्धः । अक्षीणमहानसादि-सिद्धियोगाद्गणपतिर्विष्णुरङ्गुलीषु व्याप्तेर्यवमालात्रयधारित्वात् मेरुरुभय पार्श्वचन्द्रसूर्यस्थित्या अङ्गुल इति नाम्ना वितस्तिहस्तादिमानमूलत्वाच्च मेरुरपि सर्वक्षेत्रमानमूलमागमसिध्दं, तत एव ध्रुव राशित्रयं तत्रैव सूर्यः पुंस्त्रियोः पुरुषस्यैव प्राधान्येन दक्षिणनाडीवन्न चैवं दक्षिणाङ्गूष्ठे नखरूपचन्द्रवैयर्थ्यम् । हस्तस्य वामावाङ्गोभयात्मकत्वेन चन्द्रस्यापि योगात् ततोऽपि राजेति नामाप्यस्य यद्वामाशसीस्थाने चन्द्रसूर्ययो संगमात् । अक्षयो-वटोऽत्र शकुनपक्षे भषणत्वेन यक्षाश्रयत्वात् अथवा प्रागुक्त त्रिवेणी स्थानात् शिवरूपाच्च ॥ ३ ॥

**अङ्गुल्यः करशाखास्तारङ्गुर्यः करपल्लवाः ।**
**त्रिपुराकरजांबाश्च मायाः कामदुघा मता ॥ ४ ॥**

अङ्गूष्ठ इति । अगत्यङ्गुरिः लत्वेङ्गुलिः । त्रीणि पुराणि पर्वरूपाणि यासुतिपुराः करजानां नखानां अम्बा इव करजाम्बाः स्त्रीणां कामविलासेङ्गू लीनां मोटनम् । यदुक्तं—

वेण्याः संयमनं विलासगमनं कर्णादिकंडूयनं
निश्वासोऽङ्गविदर्शनं स्मरकथा हस्ताङ्गुलिस्फोटनम् ।
दृष्ट्वा बालकचुम्बनं सुहसनं गाढावनिष्ठीवनं
भावैर्विंशतिमिङ्गितानि कुरुते सौख्यानि कामाकुला ॥ १ ॥

---

१ विष्णोः सूर्येन्दुद्वयं नेत्ररूपं तेनात्र चन्द्रोप्यावश्यकः प्राधान्येतरतात्तु शुक्लकृष्ण-पक्षयो रिव ज्ञेया ।

तेन माया हेतुत्वान्मायाः कामदुघाः सर्वसिद्धिकारित्वात् ॥ ४ ॥

**मायाग्रहे यथा योगमङ्गुष्ठःक्वचिदुच्यते ।**
**पञ्चाशाखः करस्तस्याङ्गुली शाखेति सूत्रणात् ॥ ५ ॥**

मायाग्रह इति । भाष्यरूपमेतत् ॥ ५ ॥

**प्रदेशिनी तर्जनी स्यात् शत्रुहाद्यागवेषणी ।**
**ज्येष्ठा तु मध्यमामध्या लक्ष्मी सौभाग्यवत्यपि ॥ ६ ॥**

प्रदेशिनीति । प्रदिश्यतेऽनया प्रदेशिनी, तर्ज्यतेऽनया तर्जनी अत एव भगवत्यां चमराधिकारे–दाहिण हत्थपएसिणीए अंगुठण हेणय वितिरिच्छ मुहं विडंबेतीति पाठः भयोत्पादको न हेतुसूचकः । विवादालापे एतस्याः पुरस्कारे शत्रुपराजयात्, शत्रुहा शक्तिपूजने कुंकमेनाथ सिन्दुरैर्द्रवैः शक्तिप्रपूजयेत् तर्जन्यां जयशब्देन, ततो अनामिकयाशिवमिति कौलशास्त्रे शक्त्यधिकाराच्च मन्त्रन्यासे अङ्गुलीषु आद्यत्वात्, तर्जनी मध्ययोर्मध्येऽन्तरालाभावे आद्यवयः सुखसूचनाद्वा आद्या लक्ष्मीः अनया जापे लक्ष्मी वृद्धेर्मणिवन्धापयट्टा संपत्ता मज्झिमंगुलीइ जा रेहा साकुणइ घणसमिद्धं देसरखायं व आयरियं । इति रेखा विमर्शने वक्ष्यमाणत्वात् ॐ विष्णुपत्न्यै नमो मध्यमाभ्यां वषट् इति श्री तन्त्र संहितायां न्यासस्थानाच्च ॥ ६ ॥

**अनामिका च सावित्री गौरी भगवती शिवा ।**
**कनिनीका कनिष्ठान्त्या लघुस्तारा च काञ्चनी ॥ ७ ॥**

अनामीति । नामग्रहणायोग्या अनामासैव अनामिका ब्रम्हणोऽनया शिरच्छेदात् सवः स्नानं दैवतं अस्या सावित्री गौरी कुमारी भावीत्तदपि मेषादि राशिचक्रे कन्यास्थानात् सिंहाश्रयाच्च शिवाशान्तिकपौष्टिकार्थं पूजाधिकारात् कनतिर्दीप्यते कनीनिका । काञ्चनस्थानत्वात् काञ्चनी एतस्या रुधिरेण काञ्चन सिद्धेर्वा ॥ ८ ॥

---

१ तान्त्रिकमते.

विंशोपकाग्रन्थिपर्व स्थानभागांशसन्धयः
कन्दो नृपासनं पीठं गरुडोऽङ्गुष्ठमूलके ॥ ८ ॥

विंशोपका इति । नृपासनमत्र नृपो राजाङ्गुष्ठ एव अत एवात्र राजयोगवतः अपत्यानि अङ्गुष्ठमूलरेखाभिर्विचार्यन्ते पट्टरेखा सिंहासनाकारस्यापि संभवात्, गरुड इति विष्णुवाहनत्वात् अश्वस्य तार्क्ष्यस्य रेखास्थानत्वाच्च ॥८॥

हस्तस्यादिर्मणिबन्धो मणिरत्नाकरोऽपि च ।
करभोऽस्मादाकनिष्ठमुष्ट्रोवक्रोऽस्तभूधरः ॥ ९ ॥

हस्तस्येति । रत्नाकरः मत्स्यस्थानात्, करभो नाम साम्यात् । उच्चनीच रूपत्वात पश्चिमदिग् भवत्वात् उष्ट्रः वक्रत्वं सार्पनक्षत्राश्रयात् पश्चिमायां कंटकबाहुल्याच्च ॥ ९ ॥

अवहस्तोहस्तपृष्ठं तमः शून्यं वियन्निशा ।
प्रहस्तस्तालिकातालस्तलो भुतलगर्भकौ ॥ १० ॥

अव हस्त इति । प्रातर्हस्ततलस्य दर्शनोक्तेर्दिनत्वे सिद्धे पृष्ठं निशाराहोस्तमसोवस्थानात्, तमोपि चन्द्रादीनां स्थानात् वियत अत एव न रेखाबाहुल्यम् ॥ १० ॥

पुनर्भवो भुजाकण्ठः करेशुकः पुनर्भवः ।
कामाङ्कुशोमहाराजः करजो नखरो नखः ॥ ११ ॥

पुनर्भव इति व्यक्तम् ॥ ११ ॥

करपुष्पं रत्नकान्तिः शत्रुघ्नकरदीपकः ।
पितागोत्रबलं मूलं वक्षो धर्मो मनोधृतिः ॥ १२ ॥

करपुष्पमिति । मेघपुष्पवत् पितेति गोत्रादीनि पुरुषस्यात्र विचार्यन्ते १२

---

१ ब्राह्मणानां ब्रह्मक्रियापरायणानां जपपूजादिषु तस्या प्राधान्येन तर्जन्यादिव स्वामिनादा नधिष्ठितत्वाच्च कौमार्यम् । २ वैद्यशास्त्रेषु अर्कवृक्षस्य नामसाम्यात् रव्यादिशब्दवाच्यत्वं प्रसिद्धं, सिध्दान्तेऽपि भगवत्यां धर्मास्तिकाये नामसाम्यात् चारित्रधर्मनामानि गयिन्ते ॥

माता धनं सुखं कोशः साहसं पालिकारतिः ।
आयुः स्याज्जीवितं तेजः स्वभावश्च प्रभातनुः ॥ १३ ॥

मातेति । मातृजन्यसुखमत्र विचार्यं, पालिका धात्री रतिः पुरुषस्य धनस्वजातादिना सुखसंवेदनमिति । एतत् सर्वं तद्रेखा स्वरूपात् एवमायुरेखातः स्वभावादिर्ज्ञेयं, तेजः सात्विकप्रकृत्यादिकं प्रभाबुद्धिः सहजा ननु विद्या—अध्ययनादिका तस्या अन्यरेखास्थानात् यद्वा मतिरप्राप्ता विषया बुद्धिः साम्प्रतदर्शिनी अतीतार्थास्मृतिर्ज्ञेया प्रज्ञाकालत्रयात्मिका, तनुः शरीरं सामान्यतस्तत्र सुखदुःखाद्यवस्थानाद्धेतु अवयवादि विशेषसुखं तस्य सकलहस्तपुरुषवीक्षणेन अग्रेकथयिष्यमाणत्वात् ॥ १३ ॥

प्रदेशिन्यादिमूलानि नामतोप्यर्थतोऽपि च ।
कलहो राजमैश्वर्यं यशोऽनुक्रमतो मतम् ॥ १४ ॥

प्रदेशिनीति ॥ तुर्यपदे भाग्यं चक्रमतो मतमितिहस्त बिम्बकारमते ॥ १४

प्रदेशिन्यादिभिः सार्धमङ्गुष्ठे विततीकृते ।
प्रादेशः तालगोकर्णवितस्तय उदाहृताः ॥ १५ ॥

प्रदेशिनीति । अत्र मानाभिधानं तद्वितस्तिः ऊर्ध्वं रक्ष्यते तदाङ्गूष्ठदितः शीर्षाद्यवयवाः स्फुटं लक्ष्यामूर्द्धाङ्गूष्ठो भूजायुग्ममित्यादेस्तथा शिरो मुखमित्यादिः पुरुषाकारात् तत्रापि तर्जनि वामहस्तः मध्यादक्षिणः हस्तोऽत्र सर्वं भुजारूपः शिवादक्षिणः पादतारा वाम स्त्रियामध्या वामो बाहुस्तर्जनी दक्षिणः शिवावामः पादः तारा दक्षिण इति त एव सुरभिमुद्रायां परिघयन्त्रे स्वरोदये च पूर्वोत्तरादिशोरैक्यं याम्यपश्चिमयोश्च तेन तत्तद्दिगाधिपग्रहमैत्रीति बोधार्थं प्रादेशादिप्रयोजनं शास्त्रान्तरात् वाच्यम् । इति नाममाला ।

---

१ अत एव प्रज्ञापना वृत्तौ रत्नप्रभेत्यत्र प्रभाशब्दोऽत्र सर्वत्रापि स्वभाववाचीति ॥
२ न्यूनत्वेन अप्राधान्यात् मध्या दक्षिणः अधिकत्वात् ।

## अथ हस्तावलोकनविधिः

प्रातः शुचिः कृतस्नानो देवानभ्यचर्य सादरम् ।
सुगन्धिद्रव्यैः पुष्पैश्च नैवेद्यैर्विविधैस्तवैः ॥ १ ॥

प्रातरिति । यद्दिने हस्तस्य दिदर्शयिषा ततः प्राग् दिने नैमित्तिक गुरोः पार्श्वे गत्वा प्रज्ञापयति । प्रातरहंहमस्तोद्रष्टव्य इति, इयं निमन्त्रणा शकुनान्वेषण तदावश्यकी ततो गुरुः प्रागुक्तमन्त्रमष्टोत्तर शतवारं जपित्वा धूपोक्षेपणपूर्वमिष्टं स्मरन् शयीत ततो ब्राह्मयमुहूर्ते गुरुयजमानैर्निद्रा-विमोक्षेण स्वस्वधर्म्यक्रियाजापादिकाः कृत्वोत्सर्गकरणादिना देहविशुद्धिं कुरुतः ततः स्नात्वा देवपूजाविधेया इत्यनेन नास्तिकता परिहारः । देव-सान्निध्यं च स्यात् तथैव फलोपत्तेः निमित्तज्ञानफलकथनं चास्तिका नामेवन्याय्यम्, तदितरेषामयोग्यत्वात् ॥ १ ॥

गुरुं नत्वोपदेशञ्च श्रुत्वाधर्मस्य तत्ववित् ।
प्रतिलभ्यान्नपानाद्यैर्विधिना भुक्तभोजनः ॥ २ ॥

गुरूनीति ॥ अत्र प्रायो भिक्षुरेव गुरुः, समुद्रऋषेस्ताद्रूप्यात्, स्कन्देन सामुद्रिकशास्त्रं कृतमिति शांभवास्तत्र शास्त्रादौगणेश नमस्कारात् सकोप-रुद्रेण समुद्रे शास्त्रं प्रवाहितं देवेन्द्राग्रहात् पुनरूद्धरणे सामुद्रिकमिति, कथा तथापि कुमारकृतत्त्वा ब्रह्मचारी तदयोगेगृही द्विजन्मादिरपितस्य सिद्धान्तादिना सत्कारः वहुवचनं पूजाख्यापकं नतु गुरुबाहुल्यं तस्याग्रेन्निषेधात् विधिनेति कटुकषायवर्जितमधुरदुग्धादिना नाधिकं न स्वल्पं न ऋतुसाम्यादिविरुद्धं न विषमासनमशनं कार्यंकरणीयमिति विधिः । आहारसदृशोद्गार इति न्यायात् वाचिमाधुर्यं सर्वे बुद्धिप्रदागौण्या इति मनासि बुद्धिपाटवं कार्ये-प्युंचमविशेषस्तदभावे द्रष्टुर्निद्राजाड्यादिसंपादनेन रेखाफलभावनाविरोधात् करदर्शयितुः शरीरबाधया श्रद्धाविकाराच्च, ननु हस्तवीक्षणाम्भोजनोत्तरमेवेति

कुतः प्रातः स्वहस्तदर्शनवत् परहस्तदर्शनेऽप्य बाधकात्, तिथिपत्रेण तिथ्यादि श्रावणस्येव हस्तरेखाफलश्रावणस्यापि ज्ञानहेतुत्वेन विशेषतः प्रातरेवौचित्यात् अत एव चिकित्सकानां नाडीपरिक्षणादि प्रातरेव तदवसरे द्रष्टुर्ज्ञाननैर्मल्यात् दर्शयितुरपि वातादि विकारशान्त्यानाकुलत्वाच्चेति चेन्न।

रिक्तपाणिर्नपश्येच्च राजानं दैवतं गुरुम्।
नैमित्तिकं विशेषेण फलेनफलमादिशेत् ॥ १ ॥

इति वचनात् श्रीफलादेरादानेऽपिगुरोः पुरो ढौकनात् करदर्शयितुः पाणेरिक्तत्वात पाणेः फलं लिप्सुः पाणिमेव प्रथमं पूजयेत ग्रहफललिप्सोर्ग्रहपूजावत् एवं ज्ञीप्सोरपि पुस्तकपूजावद्धस्तस्य पूजाभोजने एव नानारससंसर्गात् तेन पञ्चाङ्गुल्याः कराधिष्ठायिकाया देव्या भोगप्रियत्वात् द्वयोरप्युपरिप्रसादः अतः " शतं विहायभोक्तव्यमिति तथा प्रथमं भोजनं फलमिति च लोकोक्तिरेव प्रमाणयितव्या यथाधिकारमाधिकृत पूजैव श्रेयसी रणे शस्त्राश्वगजभटभूजपूजनवत् शकुनावसरे बलिपिण्ड दानादिना भाषणार्चनवद्वा न चैव चन्दनादिनैव तदर्चनमस्तु इति वाच्यम्। ततोऽपि नैवेद्यरूपस्य तथाक्रमेण मदनाहुतिविधिरिति सौन्दर्यलहर्यां होमरुपस्य वा भोजनपूजनस्य प्राधान्यात्, अथ भोजनेन भोक्तुरात्मन एव पूजा किं तत्र हस्तस्येति तन्न; अवयवावयविनो सर्वथा भेदाभावात् यन्नियमितमवाप्य यत्क्रियते तत्तत्रैव उपतिष्टते, चक्षुस्तेजोनिमित्तमन्यवाह्यिमाणस्यौषधस्य चक्षुविषउपधानवदित्येवं हस्तस्यैव तत् प्रासेश्च, अतस्तर्जनीमप्युच्चैः कृत्वा न भोक्तव्यमिति। किञ्च प्रातर्धर्मकर्मशौचाद्याचारस्यावश्यकत्वादुभयोस्तल्लोपे ऐहिकामुष्मिक फलविरोधेन दोषोऽपिधर्माचारस्य करणेण भुक्तस्य भुक्तिसमयादर्वाक् करवीक्षणे सत्युभयोराकुलतया रेखाफलानां सम्यग् भावनां विना द्रष्टुर्वाक्यविसंवादः परस्य श्रद्धाभङ्गस्तेन सामुद्रिकशास्त्रवितवीफलकथनमर्थ विद्या-

---

१ भोजनान्तरं सर्वरसलिप्तेन एकःप्रतिदिनं पेयोजलस्य चुलुकोऽङ्गिभिः ॥ इति विवेकविलासे.

रूपं धर्मार्थकाममोक्षा इति क्रमापेक्षया धर्मानन्तरमेव प्राप्तावसरं शुभाय— अत एव विवेकविलासे भोजनोत्तरमेव सामुद्रिकनकाशः प्रोक्तो; भोजनोत्तरमेवार्थं कार्यं इत्याशयिनः तत् समये कुतिथि—कुवार—कुयोगादि फलनाशात् । यदुक्तं व्यवहारादर्शे——

तिथ्यृक्षवारप्रभवाविरुद्धा योगाश्चहूणादिषु दोषदाःस्युः ।
चन्द्रेऽनुकूले शुभदादिनाद्विद यामात्परं वाथवदन्ति केचित् ॥ १ ॥

अत एव भौमे सर्वकार्थं भोजनोत्तरमेव भोजनस्यापि दोषनिवारकत्वेन प्रसिद्धेः वैरविनाशस्य ततः साक्षादुपलम्भात् नवगृहे भोजनोत्तरमेव प्रवेशः प्रवीणानां शास्त्रीय इति तेन सामुद्रिकेऽपि तत्तिथिवारादि चक्रमुपयोगाय वक्ष्यति ।

न चैवं दानाध्यायनशास्त्रश्रुत्यादि नामाकुलत्वभयाद्भोजनोत्तरता प्रसङ्गः तत्क्रियाणां धर्म्याणां उषा प्रशंसते गर्ग इत्युक्तेः कालस्यापि तत्तक्रियाफले प्रयोजकत्वात् प्रातरेव समुचित्वात् कदाचित्कस्यचिद्भोजनोत्तरत्वेऽपि इष्टापत्तेश्च, एवं च कस्यचित्पापात्मनो दर्शनस्पर्शनालापनामग्रहादिप्रसङ्ग जन्याशुभमपि भोजनोत्तरता नियमे निवारितं स्यान्नचेद्यादृशो दर्शनं तादृक शुभमशुभं वा भवत्कोपि निवारयेत् यदुक्तं वाग्भटे शारीरे——

चतुर्थेऽह्नि ततः स्नात्वा शुक्लमाल्याम्बराशुचिः
इच्छन्ती भर्तृसदृशं पुत्रं पश्येत् पुरःपतिमिति ॥ २ ॥

शकुनशास्त्रेऽपि एकत्र सार्थे व्रजतामित्यादिना दर्शने शुभाशुभं व्यक्तमित्यग्रे वक्ष्यते । न च कस्य चिद्धार्मिकस्य दर्शने शुभसम्भवात् प्राभातिकमपि किं न करवीक्षणमितिवाच्यं प्रावाहिकः पन्था अनुसरणीय इति न्यायात् सूत्रस्य बाहुल्यविषयत्वात्, अन्यथा क्वचिदावश्यके सूर्योदये घटी चतुष्टयमध्ये सूर्याभिमुखं स्थित्वा रूप्यनाणकसुखभक्षिका सान्निध्येन हस्ते किञ्चिन्मात्र फलोक्तौनैकान्त इति स्वहस्तदर्शनं तु दर्पणवत्सूर्यवद्वा प्रातरेवकार्यं परहस्तदर्शने तु द्रष्टुः करोपरिपरकरन्यासात् स्वपुण्यस्याच्छा-

दनमेव दर्शयितुः स्वं पुण्यं परहस्ते न्यस्तमिति भावनया भोजनोत्तरतै-वोभयोः योश्रेयसी स्वस्वपुण्यस्य स्वसंयोगात् इतिकृतं विस्तरेण ॥ २ ॥

सुवेषश्चिन्तयाहीनः समधातुर्जितेन्द्रियः ।
हस्तं श्रीफलपुष्पाद्यैः प्रपूर्य विनयान्वितः ॥ ३ ॥

सुवेष इति । उत्साहवर्द्धनमेतत्, चिन्तयाहीन इति एकाग्रमनस्कत्व ख्यापनं समधातुरिति । वाताधिक्ये जाड्येन वक्ष्यमाणातीतानागतवस्तुप्रत्यय-विस्मरणात्, पित्ताधिक्येऽस्थानेऽपि क्रोधान्धभवनात् । कफाधिक्ये मनोभङ्गाच्च न स्वस्थता ततश्चित्तायत्तं धातुबद्धं शरीरं चित्ते नष्टे धातवो यान्ति, नाशं तस्माच्चित्तं यत्नतो रक्षणीयं स्वस्थे चित्ते बुद्धयः संभवतीति वचनात् धातुषु न प्रकोपः श्रेयान् तत एवंविधिना इति प्रागुक्तम् । हस्तमिति । श्रीफलं नारीकेरं सर्वफलमुख्यत्वाच्चिरस्थायित्वान्माङ्गल्यमेतत्, आद्य शब्दात् रुप्यनाणकसंग्रहः मुद्राया रुप्यनाणकेन सह समुद्रस्तत्प्रधानं सामुद्रिकमिति शास्त्रीयान्वर्थाश्रयणात् । केचित्तु आज्यैरिति पठन्ति तत्राज्यं राज्यं प्रयच्छतीति शकुनशास्त्रात् स्वप्न शास्त्राद्वा—घृतेन हस्ताभ्यञ्जनं कार्यं तिलकेन शूलादि दोषवतस्यापि दुष्टस्पर्शच्छायादोषवारणत्वात् ॥ ३ ॥

हस्तभे सद्गुरोः पार्श्वे स्वहस्तं दर्शयेत् सुधिः ।
निर्दम्भः शृणुयात्सर्वं श्रद्धया गुरुणोदितम् ॥ ४ ॥

हस्तभे इति । अनुषङ्गेण व्याख्यातमेतत् यथाहि—जन्मपत्रादिवि-लोकनं स्वरोदयादिविमर्शनपूर्वमेव कार्यं यद्वातीथिवारभयोगांके मास राशिवयोर्ङ्कं संमील्य मुनिभागेके शेषे शुभं न शून्यतः । इति विमृश्य जन्मपत्रं विचार्य तथाऽत्रापि नक्षत्रबलं ग्राह्यं एते न सर्वेभ्यः समयस्य बलाधिक्यं प्रोक्तं हस्तं दर्शयेत् क्रिया योगाच्चतुर्भिः कलापकम् ॥ ४ ॥

जितेन्द्रियस्य श्रद्धालोयत्फलं कथ्यते बुधैः ।
स्वप्नवज्जायते सत्यं तत् सर्वं नान्यथा पुनः ॥ ५ ॥

जितेन्द्रिय इति । श्रद्धालोः श्रद्धावतः सर्वत्र शुभाशुभ फल प्राप्तौ श्रद्धाया एव मुख्यहेतुत्वात् । श्रद्धाया संशये फलसंशयः नभोगामिवि-

द्याराधयितुर्वणिज इव तन्निश्चये फलस्यावश्यंभावश्चौरस्येव तत्रैवकथानके स्वप्नवदिति "मूलदेवभूपचरिते" यथा पूर्ण चन्द्रस्य स्वप्नदर्शने मूलदेवस्य राजप्राप्तिस्तस्यैव साहचर्येण तथैव स्वप्नप्रेक्षकस्य भरटकस्य गोधूमापूपस्यघृत पक्वस्य खण्डापूर्णस्य सशाकस्य प्राप्तिरिति तेन श्रद्धैव निमित्तेषु परमं शुभा शुभबीजमिति ॥ ५ ॥

अथ सद्गुरोरितिकथनात् गुरुस्वरूपमाह—

**ब्रह्मचारी क्षमाशीलः कृतज्ञो धार्मिकः शुचिः ।**
**दक्षो गुरुक्रमायातो वाक्सिद्धः स्वक्रियारतः ॥ ६ ॥**

ब्रह्मेति । ब्रह्ममैथुननिवृत्तिस्तच्चरति ब्रह्मचारी यद्वाजनसमक्षपरिणीतस्त्री मात्रप्रवृत्तिमान् अलम्पटः ज्ञानाभ्यासीवा सूचिरिति द्रव्यभावाभ्यां यथाविधि शौचाचार दक्षः पूर्वापराविरुद्धवाक् गुरुपारंपर्य्येण ज्ञान शास्त्ररहस्य स्वक्रियारतः कुलोचितमार्गगामी सन्तुष्ट इति ॥ ६ ॥

**सन्तुष्टः श्रद्धयायुक्तस्तपस्वी विजितेन्द्रियः ।**
**नाना शास्त्रविवेकज्ञः स्थिरचितोगुरुर्मतः ॥ ७ ॥**

स्वल्पलाभेऽपि न क्रुधः श्रद्धायायुक्तो न नास्तिकः तपस्वीव्रतोपासनादिरतः विजितेन्द्रिय चापल्यः, अनेक शास्त्राणां परमार्थवेदी । मनसि धैर्यवान् इदृशस्यगुरोः सम्यग् ज्ञानोदयात्तत्द्रेखाणां भावनाविशुद्धेः फलकथने निश्चयार्थः सुलभ इति ॥ ७ ॥

अथ फलकथनोविमर्शमाह—

**कुलं ज्ञातिस्तथा देशमाकारं जन्मजान् गृहान् ।**
**धर्मं श्रद्धांच विज्ञाय समयज्ञः फलंवदेत् ॥ ८ ॥**

कुलमिति । कुलं पैतृकं कस्यायं सुतः बीजानुसारा जीवपरिणामस्य क्षत्रियाणां क्रोधसाहसमानादिलक्षणं जातिर्मातृकी विप्पाणं वेयकरील्यादिना ज्ञानलुब्धता कातरत्वादिलक्षणं देशः प्राच्योदीच्यादिर्देशः १ मण्डलं २ स्थान ३ मित्येवंरूपावा क्रुराक्रुरत्वशौचाशौचानिर्दम्भसदम्भताद्यान्तरस्वभावस्य तथा यज्जन्मदेशस्योदयस्तज्जन्मिनोऽपि यथा योगमुदयस्तद्विनाशे विनाश

इति बाह्यस्थितेर्लक्षणं देशेपिलक्षणात् द्रव्यकालभावादिरपिलक्षणं; अकारो गौरश्यामह्रस्वदीर्घन्यूनाधिकावयवललाटौष्ठरेखादिर्जन्मपत्रे ज्योतिर्मतप्रवृत्ते- सति ततो ग्रहावीक्ष्यास्तदभावे वक्ष्यमाणाः सामुद्रिकरीत्या ग्रहाः धर्मः शैव जैनबौद्धादिस्तुरुष्कादिर्वाश्रद्धातत्तद्वस्तु तच्च प्रतिपतिरेतत् सर्वं चकारात् वयोरुपचेष्टा भाषाव्यवसायादिमपि भावं विमृश्य समयोवसरस्तद्वेत्ताफलं भूत- भवद्भाविपदार्थरूपं वदेत्–कथयेत् । किञ्चिद्व्यभिचार चौर्यादिस्वभाव एकान्त एव वाच्यो न जनसमक्षं तेनावसरः सम्यक् परीक्षणीयः । हस्तवीक्षणे वाच्य फलसंग्रह वृत्तानि यथा—

आयुः पूर्वंधनसुखमतः पैतृकं मातृकं वा
लभ्यं नारी चरितमरितः कष्टमन्यन्निवेद्यम् ।
विद्याकोशः परिजनकथा भ्रातृपुत्रादि संख्यां
मैत्रीसेवानृपपरिचयो वाहनं गोधनादि ॥ १ ॥
देशग्रामार्थवर्णव्यवहरणदिशां लभ्यमुत्साहभाग्ये
धर्मः सौभाग्यवृत्तीश्च सुरकुलधनं राजयोगोऽथकीर्तिः ।
अन्यस्त्री प्रीतिसंगोजानिरपिमरणं कृष्णपक्षेऽन्यथावा
रात्रौ यद्वा दिनेतच्छ्रुतमशुभमथोवर्षमासादिजन्यम् ॥ २ ॥

पूर्वे वयस्युत्तरके सुखं स्त्री
मृत्युः पितुर्वा प्रथमं जनन्याः ।
मनः प्रसादः प्रभुता प्रताप
तथा रणे संनिहिताजयश्रीः ॥ ३ ॥

पूर्वोऽवतारः परलोकसंपत् व्याघ्रेभसर्पादिभयं विपत्तिः ।
शास्त्रावबोधः स्वजनानुरोधः स्वप्नकलाकौशलमांसलत्वम् ॥ ४ ॥

इत्यादियावन्नमनो वैरूप्यं तावान्निरूप्यम् ॥ ८ ॥

गुरुकर्तव्यमाह—

**गुरुपद्मासनासीनो वाङ्मयं हस्तजीवनम् ।**
**संपूज्य संस्मरन् स्वेष्टं गुरुरेवं वदेत् फलम् ॥ ९ ॥**

गुरुरिति । पद्मासनमलब्रह्मणोऽधिकारादर्थविद्यारूपत्वेन लक्ष्म्याः सन्निधानाय हस्ताधिकारात् हस्तसंजीवनस्यान्यस्य वा कररेखा प्रकरणादेः पुस्तकस्य लवंगमरिचं चूर्णेन पूजेतीष्टोपदेशः, अत एव मुखमर्द्धं शरीरस्येति वचनात् सामुद्रिके मुखं—प्रधानं तस्य भोजनैकार्यानियतदक्षिणहस्तेन सह संयोगरूपाभूक्तिपूजा पूर्वंविधेया इति कथितमधस्तात् रेखाविमर्शनस्य ध्यानरूपत्त्वेन भोजनोत्तरत्ताया एव सौष्टवकारणत्ववेनावश्यकत्वात् । यत उक्तं सूत्रकृदङ्गवृत्तौ—

मणुणं भोयणं भुच्चा मणुणं सयणासणं ।
मणुणंसि अगारंसि मण्डणं सायए मुणी ॥ १ ॥

एतेन मनः प्रसुत्तिपूर्वकमेवकरवीक्षणमिति । स्वेष्टं देवं गुरूं च संस्मरन् गुरुः फलं निर्दिशेत् ॥ ९ ॥

हस्तविलोकने नियमाह—

**दिने चैकस्य पुंसोवाद्वयोर्हस्तं विलोकयेत् ।**
**हस्तं स्वं दक्षिणे हस्ते न्यस्यावहितमानसः ॥ १० ॥**

दिन इति । एकस्य द्वयोर्वापुंसोः करवीक्षादि न एव द्वयोरेवेत्युभयथानियमः । तथैव अनाकुलत्वेन रेखाणां स्पष्टावभासनेन दक्षिणहस्ते सूर्याश्रयेणयोग्यत्वात् । द्वयोरेवेत्यत्र स्वशरीरे हस्तद्वयस्यैव संभवान्नियमः । किञ्चिद्वामेऽपि फलं विचार्यमिति । हस्तचतुष्कं द्वयोःपुरुषयोर्जायतइति, तत पुरुषोत्तमन्य धर्मस्यगुरु शिष्यादेर्योग तथालोकेऽपि राजामात्ययोः पितृपूत्रयो र्वधूवरयोरित्यादिसम्बन्धे द्विष्टत्वेन सकलकार्यसिद्धौ चतुर्भूजत्व नियम एव वीजं स्त्रियास्तु पुरुषस्यवामाङ्गत्वादेकस्या एवकरवीक्षा चतुः कर्णस्थिरि-

---

१ हिंदुकस्य दक्षिणहस्तेन पूर्वं लवङ्गेन पुस्तकपूजा २ तदनु वामेन मरिचैः पुस्तकपूजा यवनस्यपूर्वं वामेन मरिचैः ततो दक्षिणेन लवंगैः पुस्तकपूजा ॥ ३ बहुनां करवीक्षणे व्याकुल त्वादिना वक्तुर्वाक्यं विसंवादात् दर्शायतुः श्रद्धाभङ्गेन फलाभावात् हस्तामिति पुरुषस्ययोगाङ्गप्राधान्येन आर्जवतया दक्षिणा भागएव पादोक्षेपादौ दक्षिणहस्ते असाधरणं कार्य्यं भोजनमेवेति तदुत्तरमेव करवीक्षण मित्युक्तं प्राक् । ४ प्रयत्नाधिक्या दक्षिणं हस्तं पूर्वं तदनु वामं च विलोकयेत् ॥

भवेदित्यादि पञ्चाख्याने राजमन्त्रादौ तथा व्यवस्थानात् । दक्षिणे हस्त इति अनुकूलं दक्षिणाङ्गे यो जयेदितिनीत्यादाक्षिणा दक्षिणात्प्राप्या साग्राह्या दाक्षिणेकरे इति शकुन शास्त्राद्वा तथा न्यास उचित एव अवहित इति सावधान चेता ज्योतिर्विचारे सामुद्रिके च दत्तदृष्टिरिति ॥ १० ॥

अथ स्त्रिया करवीक्षाविधिमाह—

रात्रौ दीपं पुरस्कृत्य संपूज्यैनं यथाविधिः ।
स्त्रियावामकरं वामे स्वहस्ते न्यस्य वीक्षते ॥ ११ ॥

रात्राविति । देवीस्वरूपाद्रात्रावेवस्त्रीप्राधान्यात् आवश्यके सन्ध्यायां दिवसस्याष्टमे भागे नक्तकालत्वात् हस्तवीक्षणं न्याय्यम् । वामाङ्ग्या याथार्थ्येन वामः करः प्रेक्ष्य वामां वामे नियोजयेदिति श्री विष्णु प्रतिमादौ लक्ष्म्यादि वामाङ्गस्थापनाया वास्तुशास्त्र प्रसिद्धे, वामे पुस्तकधारिणीति वाक्यात् वाम हस्त एव तन्न्यासः ॥ ११ ॥

द्रव्यभेदाद्भावभेदोऽपीत्यपवादमाह—

यो नरः स्त्रीप्रकृतिकः तत् करोवीक्ष्यते बुधैः ।
मध्यान्हात् परतः स्त्रीणां नृस्वभावे निशीथतः ॥ १२ ॥

यो नर इति । लज्जामानवक्रोक्तिदेहावगुंठनसाहसानृतोक्तिमायादि योगात् पुरुषाणामपि स्त्रीस्वभाव एवं स्त्रीणामप्यार्जवखरस्वर सत्यवाक्यतादिगुणैर्नरस्वभावो भवति । निशीथे करवीक्षाया अयोगे प्रातः सूर्योदयात्पूर्वमपि ॥ १२ ॥

बलावल योगमाह—

दक्षिणाद्बलवान्वामः पुंसस्त्रीशीलशालिनः ।
नृशीलायाः स्त्रियावामादक्षिणोबलवान्भवेत् ॥ १३ ॥

---

१ मेहनं खरता दार्ढ्यं शौण्डीर्यं स्मश्रु पुष्टता स्त्रीकामितेति लिङ्गानि सप्त पुंस्त्वे प्रचक्षते । २ योनिम्र्दुत्वमस्थैर्यमुग्धता क्लीवतास्तनौ पुंस्कामितेति लिङ्गानि सप्त स्त्रीत्वे प्रचक्षते । ३ न चात्र पूर्वापर विरोधः पूर्वं भोजनोत्तरता नियमादिति ज्ञेय सुखभक्षिकादि सन्निधि पूर्विकायास्तादृक्स्थिते गतेः प्राग् भणनात् ।

**स्त्रीमातृमातृपक्षादिगृहं क्षेत्रं च वाटिका ।**
**पुंसां वामकराद्वीक्ष्यं रात्रिशुक्लश्चपक्षकः ॥ १४ ॥**

दक्षिणादिति । स्पष्टम् । अथ कृष्णपक्षे नृणां जन्मवामाङ्गुष्ठगतैश्चतैरिति । विवेकविलासे तथा "वामागुंठजवेणयनूणं जाणिज्जनिसिझाय"मिति । कररेखा प्रकरणे पुनः जित्ताउ दाहिणकरे मूले रेहाउतावजण पुज्जो अहवामेतो पच्छासेवा वाणिज्जधण पुरओ ॥ १ ॥ इत्युक्त्वा वामहस्तरेखा अपि न व्यर्थ इति व्यक्तम् । तन्नरस्यापि वामहस्ताद् यद्विचारणीयं तदग्रे वक्ष्यते तत् सूचामात्रमाह— स्त्रीति । स्त्रिया माताश्वश्रुरिति—उपलक्षणात् स्त्रियाः पितृमातृविज्ञानायुर्धनभाग्यधर्मादि । मातृपक्षः स्वीयः गृहं गृहालभ्यमन्यद्वा एवं क्षेत्रादिष्वपि । न गृहं गृहमित्याहुर्गृहिणी गृहमिष्यते । इति पञ्चाख्यान ग्रन्थानुसारात् । अधिगृहकार्यमिति वचनाद् गृहविमर्शः । पुंसो वामकरात् । क्षेत्रवापे लवने च वामहस्तप्राधान्यात् । केषाञ्चिद्वृक्षाणां वामे स्त्रियाः प्राधान्यात् नागलतामण्डपादौ स्त्रीवद्रक्षणाच्च तद्विमर्शस्तत्रैव एतदुपलक्षणाच्चतुः षष्टिकस्त्रीकलाविचारो वामहस्तादेव । रात्रिरिति चन्द्रस्य स्त्रीग्रहत्वेन स्वरोदयेऽपि चन्द्रः । स्त्रीपुरुषः सूर्य इति वचनाच्च रात्रौ घटिका विचारादिः शुक्लः—उज्वलपक्षः जन्मनिलभ्यालभ्ययोर्वामे विमृश्य । अत्र विवेकविलासे शुक्लपक्षे तदाजन्म दक्षिणाङ्गुष्ठगैश्चतैरित्युक्तत्वाद्दक्षिणकरे शुक्लपक्षे निर्णय इति दृश्यते परं हस्तचिन्हसूत्रे शुक्लपक्षे तदाजन्म वामाङ्गूष्ठे तु रात्रिकथितपाठात् वामकरे शुक्ल पक्षानिर्णय इत्युक्तं युक्तं चैतत् स्वरोदयानुसारात् ॥ १४ ॥

स्त्रीणामपि तथाविशेषमाह—

**पत्युः सुखं पितुः पक्षं धर्मगोधनमार्जवम् ।**
**कृष्णपक्षदिनं स्त्रीणां वीक्ष्यं दक्षिणपाणितः ॥ १५ ॥**

प्रत्युरिति । पत्युः सुखं दक्षिणकरायुरेखाविशेषात् वेद्यं; तथा पत्युः पितृपक्षं नतु स्वपितृपक्षं तथाधर्मकथनात् ज्ञानमैश्वर्यवंशादीत्यग्रे वक्ष्यति गोधनं चतुष्पादादि उपलक्षणाद्दासिदासादि आर्जवं सरलता कृष्णपक्षः

जन्मनि लभ्यादौ वा दिनं सूर्यस्य पुरुष ग्रहत्वात् दिनघटिकाविमर्शः सर्वमेतत् स्त्रीणामपि दक्षिणपाणितो विचार्यम् । अनुक्तमपि पुरुषस्यद्वासप्तति कलादिकं तत एव ॥ १५ ॥

आदौ मन्त्रन्यासः मध्ये इष्टं स्मरन्निति मङ्गलद्वयमुक्त्वा तृतीय मङ्गलार्थमाह—

यजमानः फलं श्रुत्वा गुरोस्तथेत्युदीरयन् ।
निरीक्ष्य माणकं रौप्य स्वव्यापारं सर्वमाचरेत् ॥ १६ ॥

यजमान इति । तथेति सत्यमेतदिति मन्यमानो मनसा वाचामणंश्च रूपस्येदं रौप्यं नाणकमिति । देशीयभाषया मुद्रा दृष्ट्वा रूप्यस्य चन्द्रोदये दर्शनवदत्रापि माङ्गल्यात् स्वकार्यं कुर्यादित्यर्थः ॥ १६ ॥

अथोपसंहारमाह—

इत्येवं विधिना गुरुर्गुरुमति पञ्चाङ्गुलिर्वीक्षते ।
वश्यन्तस्य भवेदवश्यमचिराल्लोकत्रयं सद्गुणैः ।
वृष्टिः स्वर्णमयी च मेघविजयात् सञ्जायते तद्गृहे ।
मौलौ माल्यमिवाश्य शासनमहोमिभूभुजो विभ्रति ॥ १७ ॥

इत्येवमिति । इति समाप्तौ एवं प्रागुक्तविधिना पञ्चाङ्गुलहस्तं वीक्षते तस्यवश्यं लोकत्रयं ऊर्ध्वाधस्तिर्यग् लक्षणं भूर्भूवः स्वर्लक्षणंवा । स्वर्णप्रधाना स्वर्णमयी मेघस्य वर्षणरीत्या विजयोऽधिकत्वं तस्मात् । मौलौ शीर्षेमाल्यं पुष्पस्रक् तद्वत् शासनं आज्ञांधरान्ति भूपाः ॥ १७ ॥

इति श्रीहस्तसञ्जीवने हस्तविलोकनाधिकारः ॥

अथ कथयितुमत्रारभ्यते सभ्यतेजो-
धिकविभवसमृद्ध्यै विस्तरात् शास्त्रवृद्ध्यै ।
गुरुगुरुकृपयैवार्हन्त मानम्य सिद्धं
तिथिभगणभवारैर्दर्शनं दर्शनीयम् ॥ १ ॥

श्री सामुद्रिकेन्द्रैः प्राचीनानूचानैर्हस्तविलोकने हस्तनक्षत्र ग्रहसौम्य

शुभ दिनादेरवसरस्य प्रोक्तत्वात् तिथि चक्रादिकार्यमप्यावश्यकमिति मत्वा तद्विवक्षायामाह—

नन्दा भद्रा जया रिक्ता पुर्णास्युस्तिथयः क्रमात् ।
ताराद्याः कृष्णपक्षे तु दर्शे सूर्येन्दुसंगमः ॥ १ ॥

नन्देति । यथाहि विवाहादिकार्ये मुहूर्तनिर्णयोऽपि सुमुहूर्त एव क्रियन्तेऽङ्गविद्यापिसमय एव फलाफलबोधिकास्त्वभवत्, तत एव स्वरशास्त्रेऽपि तिथिवारनक्षत्र राशियोगस्वरादि विमर्शः । वात्स्यायनेपि तिथ्यपेक्षया कामकलावृद्धिश्च तथा सामुद्रिकेऽपि तिथ्याद्यपेक्षया कालस्य फलाफलयोः प्रयोजकत्वमेष्टव्यम् । यथोत्तरं निमित्तानां बलीयस्त्वेनान्तरिक्षरूपज्योतिःशास्त्रस्य कालप्राधान्येन प्रवृत्तस्य सर्वत्रापि उपादेयत्वात् तत एव सर्वनिमित्तान्ते तदुपन्यासः सूत्रकाराणां तेन तिथिचक्रं—१ वार चक्रद्वयं ३ नक्षत्रचक्रं ४ चन्द्रचक्रं ५ राशिचक्रं ६ वर्षफलचक्रं ७ जन्मपत्रचक्रं ८ मासचक्रद्वयं ९–१० पक्षचक्रं ११ दिनचक्रं १२ घटीचक्रं १३ दशाचक्रं १४ दिनलग्नचक्रं १५ द्रेष्काणचक्रं १६ योगचक्रं १७ दिक्चक्रं १८ देहचक्रं १९ हस्तचन्द्रचक्रं २० अङ्गुष्ठादि स्वरूपचक्रं २१ चेत्येकाविंशतिचक्रैर्दर्शनं निरूप्यते । तत्रादौ शुक्लाशुक्लपक्षयोस्तथा दिवारात्रौ च जन्माद्युक्तिसर्वावसरनिर्णयस्तथावयसोलभ्याद्युक्त्यावर्षमासादिनरूपत्रिधाकालादिलभ्यालभ्यनिर्णयोऽपिवाच्यः शास्त्रे भोजनावसरे दुःखं कोप्याहुः—श्रीमतापपीति वचनात् तेन एकैकं क्षेत्रसम्भूतलक्षणं वाप्यलक्षणं दशभिर्दशभिर्वर्षैः स्त्रीणां दत्ते निजं फलमित्यादिना लक्षणानां फलोदयसमयोक्तिः ततो द्रव्यादि लभ्यालभ्य बोधाय तिथिचक्रमुच्यते—तिथिव्यवस्थादिनमाननिर्णयाद्बोध्या अङ्गुष्ठे पञ्चदशीति भणनात् तत एव तत्र सूर्यचन्द्रयोरवस्थानं स्पष्टमिति । किञ्च तिथिचक्रं विना पुंसः स्त्रियावा केदिनाः शुभा—अशुभावा काघटी कीदृशीतिवा कथं ज्ञेयम् । अथ दक्षिणहस्ते पञ्चदश तदनु वामे पञ्चदशेति क्रमात् पुंसः स्त्रियातद्व्यत्ययेनेत्येवं किं तिथिव्यवस्थयेति चेन्न सर्वसमापत्तेः रेखाभेदाद्भेद इतिचेत्, तासामस्पष्टत्वे शून्यतापत्तेः अङ्गुल्यस्तथा ग्रहभावनयेति चेत्, चिरं जीव

आगतोऽसि स्वयमेव मार्गे सर्वसाम्यानुषङ्गात्  न च तत्रापि रेखाणामव्यक्तो सर्वसाम्यमिति वाच्यं या तिथिः प्राप्ता तत एव दिनघट्यादिगणनायां तत्तदङ्गुलिग्रहभावनया विवेकात् । अथ मास्तुदिन विवेक इति चेन्न; प्रत्यक्षं भुज्यमानत्वादिनां शुभाशुभफलस्य तज् ज्ञानेकरस्य द्रष्टुर्विवेचकत्वस्यैव सर्वेष्टत्वात्, यदि च यवादिना तत्तत्पक्षरात्रिजन्मादिविवेकऽनूचानानां चिरन्तनानां समभीष्टस्तदा शुभाशुभदिनघटीव्यक्तिः आगन्तुकाः प्रशस्ताः स्युरित्युक्तेः कथं नात्रेऽति सम्यग् भावनीयम् । अथैवं तिथिचक्रं प्रमाणमस्तु किं वारचक्रेणेति चेत् ग्रहाणां निष्फलतापत्तेः । ज्योतिषेऽपि तिथि नक्षत्रयोर्लक्षणं चन्द्रे स्पष्टं न तथावारस्येति । तत्रापि तद्वैयर्थ्यमनुषज्यते ।

अथ तत्र अष्टपादार्थं वार्तिकप्रवृत्तेर्मूलत्वादस्ति वारोपयोग इति चेत् प्रष्टव्योऽसि लोकानां प्राथक्येन गमागमविवाहादिकार्ये किमपि वारप्रयोजनमस्ति नवा ? अस्ति चेत्? तदेवात्राप्यस्तु नास्तीति तु वक्तुमशक्यं राजाभिषेकोत्सवेत्यादिना रत्नमालायां प्रत्यक्षेण तत् फलकथनात्, अत्रापि वारपरिज्ञाते तद्वारेण स्वराशिनाथस्याङ्गुल्यां शुभाशुभलक्षणे पूर्णफलं वैरेपादमात्रं साम्येत्वर्द्धं स्वराशीशमित्राङ्गुल्यां पादोनं फलमित्यादि चिन्तनया वारस्योपयोगात् यदाहुः सर्वतोभद्रचक्रे ज्योतिर्विदः ।

स्वक्षेत्रस्थे फलं पूर्णपादोनं मित्रभेग्रहे
अर्द्धं समगृहे ज्ञेयं पादं--शत्रुगृहस्थिते ॥ १ ॥

यथा कस्यापि भणनोद्योतस्य कदापि यथोक्तविधिना हस्तदर्शने प्राप्तः शुक्रवारः परं स्वराशिस्वामी रविस्तेन रवे तथा च किञ्चत्पादमात्रमेव पठनं यावज्जीवं शुक्रवारपठने बुधेस्त्वर्द्धं खेः साम्यात् एवं सर्वकार्यमुहूर्तेषु तत्तद्वारपरिज्ञानफलं बोध्यं प्रायो नरस्य करदर्शने पूर्वाह्ण एव नियमात्, वारद्वयोपयोगोह्यावश्यक इति द्वितीयं वारचक्रं तु स्वराशीशः करदर्शने यद्वेलायां यां दिशं प्राप्नोति । तत्र शुभरेखादिलक्षणे तद्वेलायां तादृग्गमने शुभं मुहूर्तं विना तद्बलात् यत्रतु स्वराशीशस्य वैरिणोदिग् । तद्वारवेलायां तद्दि-

ग्गमने सुमुहूर्तेऽपि निःफलतेत्युयोगाय । तथा च स्वराशिस्वामी तन्मित्रं वा वारः अधोलोके प्राप्तस्तदा रात्रौ स्वग्रामान्नीच प्रदेश स्वदेश ग्रामादौ लाभ इति अत एवोक्तमवहस्तस्तमस्विनीति । एवं नक्षत्रचक्रेणापि दशाचक्रं दिग्लम्यं गतवस्तुस्थान प्राप्त्यादिफलं ज्ञायते इति । अथ बहुशो हस्त-दर्शने परस्परविरोधे किं सत्यमितर द्वावेद्यामित्या जन्मसंशय एव शास्त्राज्जन्य इति चेत्तन्न; तत्त्वनिर्णयार्थं तादृग् गुरूयोगे एकवारमेव दर्शनस्यौचित्यात् बहुशोदर्शने तत्ताद्विरुद्धोक्तौ श्रद्धासंशयात् फलसंशया पत्तेर्दर्शयितुरेव हानेश्च। चन्द्रचक्रं राशिचक्रे निधिलाभादौ चन्द्रस्थानलाभाय ननु ? चन्द्रस्थान मङ्गूष्ठाग्रमस्त्येव तत् किं तस्य नवीन स्थानाधिजिगमिषयेति चेत् ? सत्यं स्त्रीगृहत्वात् राजरुपत्त्वात् तस्माच्चन्द्रबलेमलमितिवाक्यात् सर्वतोऽधिकत्वात् सर्वत्र दुरितवचनात्, सर्वकार्यसंमतत्वाच्च स्थाने सत्यपि रविः स्थिरः शीत-करश्चश्चेति रत्नमालाभाणितेराचिरस्थितिकत्वात्, दक्षिणहस्ते कृष्णपक्ष प्राधान्येनामावस्यां सूर्यासन्नत्वेन निर्बलत्वात् तारा प्राधान्येन नक्षात्रानुसरण-मिति राशिचक्रं बालानां झटितिबोधाय ग्रहस्पष्टीकरणेन फलितार्थं तत एव भाव परिज्ञानात् भावकुण्डलिकारूपं ज्ञेयमन्यथा तत्तद्रेखाभिरेव सर्वं भावबोधात् तद्वैयर्थ्यपातात्, एवमन्यान्यपि चक्राणि सोप-योगानि तत्तत् स्थले वक्ष्यन्ते । तत्र तिथिचक्रे कनिष्ठायाः प्रारभ्य नन्दादि तिथिपञ्चकज्ञेयं—योगशास्त्रे पञ्चमप्रकाशे—अधोमध्योर्ध्वपर्वाणि कनिष्ठाङ्गुलि-गानि तु क्रमेण प्रतिपत् षष्ठ्येकादशीः कल्पयेत्तिथीः १ इत्यादिना तथा कथनात् ।

अत्राह परः—ननुतारायां नन्दात्वं न युक्तं शनिराहुस्थानत्वेन श्याम-त्वात् सर्वाङ्गुलिभ्योहीनत्वेन नंदेति वृद्धयर्थविरोधात्—अत एव अङ्गूष्ठादौ विजानीयादिति । दिनमानघटिका संख्यायां पञ्च ५ नन्दा ९ श्चतुर्दशे १४ त्यङ्कन्यासे नवम्याश्चतुर्दश्यारिक्तायास्थितेर्व्यवस्थापिनन्दात्वं, अङ्गूष्ठस्य युक्तं मन्त्रन्यासे तस्यैव प्राथम्यात् राजाविष्णुर्भोगीगणपतिरित्युक्तत्वाच्चेति चेन्न तारायां नन्दात्वं एकैकादशकैक विंशति घटी ज्योतिःशास्त्रे तथा

लोकेऽपि तथैव गणनाक्रमेण वृद्धिस्थानत्वात्; रेखास्त्रपि स्वात्मरेखायाः पश्चिमार्त एव पूर्वस्याङ्गमनाच्च। प्रतीयते चेदं अनामिकान्त्यरेखायाः कनिष्ठावृद्धौ धनायुषोर्वृद्धेः किञ्च अस्या नन्दात्वे क्रमवशात् गौर्यां भद्रात्वं तत्र शान्तिकपौष्टिककार्यप्रसिद्धेः भद्रासुकार्याण्यपि पौष्टिकानीत्यत्र रत्नमालावचोपि। अन्यथा भद्रात्वं तर्जन्यां तत्र वक्रग्रहस्थानत्वात् तर्जन-कर्मणि प्राधान्येन च पौष्टिकेऽनुपयोगो यद्यपि आद्यत्वात् अस्या मध्यमान्त्य पर्वणीऽधिकत्वे पितृपक्षलक्ष्म्योराधिक्यमपि दृश्यते। तथापि जापे तर्पणादौ तर्जन्या अग्रहणात् तन्मूले कलहमृत्युरेखास्थानेनरिक्तात्वमेव तत एवाङ्गुष्ठे तवमतेऽपि दशमी पञ्चदश्योव्यवस्थानात् पूर्णत्वमेव तर्जन्या आद्यत्वं अङ्गुष्ठ प्रत्यासत्त्या मायास्वेव तदपि तस्या मध्याया अनन्तरालत्वे वामहस्ते प्रथम वधू सुखित्वलक्षणात् तेन दीक्षा गृहभारव्ययादिमूलकत्वात् रिक्तारूपमेव अपि च अङ्गुष्ठस्य नंदाभावे तारायां पूर्णत्वं ननुरिक्ताभावः तद्भावो गौर्या-मायाति। सचानिष्टस्तत्र शुक्रस्थानत्वेन रिक्तायोगे मृत्युयोगात् परत्र पूर्णाया-मपि शनिस्थानात् स एव मृत्युयोगःस्यात् स च नेष्टः कनिष्ठा मूले भाग्यस्य तथा जन्मनो रेखा सम्भवात्। "पञ्चनन्दाश्चतुर्दशेति" मतं वामहस्त-गणनायामेव चक्रगणनात् तद्यथा—

अङ्गुष्ठे तर्जन्यां द्वयमित्यादि गणने द्वितीयावृत्तौ सत्यामङ्गुष्ठंपरित्यज्य पुनस्तृतीयावृत्तौ दशमादि चतुर्दशान्तमङ्गुष्ठे संख्याय तुर्या वृत्तिरङ्गुष्ठ एव विश्राम्यत इति। आर्जवेन संख्यातु कनिष्ठातः प्रतिपदादि गणने प्रत्येक-मङ्कत्रयप्राप्तौ तृतीयावर्तने नैव पूर्यते। दक्षिणहस्ते तथैव गणनीयं पुरुषा-ङ्गत्वेन आर्जवात् कुटिल तया गणनं तु स्त्रीणां कौटिल्यबाहुल्यात्तदङ्गरूपे वाम एव तत एव समायां निशिपुत्रः स्याद्विषमायां तु कन्यकेति विषम रात्रिजन्यत्वेन वक्रत्वं विवेकविलासेप्युक्तम्। दक्षिणेप्यङ्गुष्ठादिसंख्याने

---

१ कनिष्ठादि तलस्पर्शे पट्स्थानाष्टौ नव क्रमात्। इतिविवेकविलासे—

२ एकद्वित्रिचतुःसंख्या तर्जन्याद्यङ्गुलिग्रहे साङ्गुष्ठानां पुनस्तासां संग्रहे पञ्च संस्थिता इति विवेकविलासे।

संहारगणना स्यात् सा तु निषिद्धैव विप्रजायवत् तत्र दाक्षिणे करे अनामिका मध्यरेखातः प्रारभ्य कनिष्ठायां पर्वत्रयं संख्याय चानामिका मध्याद्यानामुपरितनपर्वगणनाक्रमेणाद्यामूलपर्वयावत् सृष्टिसंख्यैव । एवं वामेऽपि करे मध्यमामध्यारेखातः प्रारम्भे मध्यामूलाद्या पर्वत्रयमध्यानामिका ताराणामुपरितनपर्वगणनं विधाय तारामूले पर्यवसानात् सृष्टिरेव, तेन वामहस्ते अङ्गूष्ठादौ विजानीयादिति गणनायुक्ता सृष्टिरूपात् । यद्वातारादि त्र्यंशके इत्येतज्जघन्यदिनमानापेक्षमङ्गूष्ठादावित्येतन्मध्यदिन मानापेक्षते । न व्यवस्थितस्तारादिरेवदाक्षिणहस्ते नन्दादिक्रमः । कश्चित्तु अकारादिक्रमान्यस्य नन्दादितिथिपञ्चकं दिनस्वरोदये नित्यं स्वस्वतिथ्यादि जायत इति । नरपति जयचर्याग्रन्थोक्तं—दृष्ट्वा पुरोवक्ष्यमाणाङ्गूष्ठादि अइउए ओ स्वरन्यासापेक्षया राजाद्यमेव नन्दादिक्रममाह——

तत्तु चिन्त्यं "सामुद्रिकभूषणे" तारादिरिह नन्दादिरित्येवोपलम्भात्— यत्तु नन्दातिहि अरिहंता—मदासिद्धायसूरिणो विजया तिहिरित्ता उवज्झाया पुन्ना साहूसुहं दिन्तु । इति नमस्कारस्तोत्रवचनाम्नायसापेक्षयांङ्गूष्ठे नन्दात्वावस्थानं तदपि न युक्तं तत्र रक्षामन्त्रादिषु पादादिक्रमात् पादस्थानीयात्तु कनिष्ठैव यदुक्तं नमस्कारकल्पे " ॐ ह्रीँ नमो अरिहंताणं " पादौ रक्ष २ यद्वा रक्षामन्त्रत्वाद्वामहस्तन्यासोऽयं न तु दक्षिणे तत्रापि हेतूक्तिपूर्विकां व्यवस्थामाह—— तदित्यव्ययं तस्मादित्यर्थे हेतौ पञ्चमी । दर्शे दक्षिणहस्त शिरोभागे अमावस्याः स्थाने सूर्येन्द्वोः सङ्गमः नखश्चन्द्र स्तत् स्पर्शान्मदनवृद्धेस्तत्रैवान्तश्चक्रादिरेखास्वरूपः ऊर्द्ध्वायतरेखाद्वयरूपश्रीवत्सलक्षणात्मता सूर्यश्चतुरस्राकारस्तयोर्मिलनं प्रतीतं स्थूल इन्दुः सितः खण्डश्चतुरस्रौकुजोप्णग् इति वचनात् तेन अमावस्यायां हस्तदर्शननिषेधेऽपि नक्षत्रागमादावश्यके कार्ये सूर्योपाङ्गूष्ठ शिरोभाग एव भावचक्रादेर्वर्षफल परिज्ञाने तर्जनी शिरोभाग एव सन्निधेय इति त एव तर्जनी मेरुमादाय शेषासप्ताङ्गुलीधरा आदावन्ते युगे पृथ्वीमध्ये पञ्च द्विकं द्विकम् ॥ १ ॥ अत्र तर्जन्यां मेरुन्यासात्तदनुबद्धं रवेरपिस्थानं तच्चिन्हं

तु अङ्गूष्ठे आदर्शरूपमुद्राधरणं तदपि देशान्तरे स्त्रीणां तर्जन्यामेव दृश्यते नमस्कार स्तोत्रेऽपि रविमङ्गलसिद्ध गुरू बुद्दासूरिति वचनासिद्धन्यास वन्त्यां तर्जन्यां रविः अन्यदिनेतु सिंहस्थानत्वाद्विष्णुमध्यभाग एव सूर्यः। ननु मेषादिक्रमाद्राशिचक्रेगौर्यामध्यभागे सिंहराशिस्तत्रैव सूर्यः किं नेष्यते। वारद्वयं सिंहराशिविमर्शे गौरवादिति चेन्न; पूर्वदिग् भाग् एव तस्य युक्तत्वात्, तत एव शुक्राकौं प्राग् मुखौ ज्ञेयाविति प्राग् मुखत्वं किञ्च तत्र सप्तम्या व्यवस्थया । रविणायोगे संवर्त्तकोत्पत्तिरपि एवं गौर्याङ्ककं राशौ चन्द्रो पि द्वितीयां प्रसङ्गेन मृत्युयोगापत्तिः ॥ १ ॥

एवं तिथीर्व्यवस्थाप्य प्रागुक्तदिन शुभाशुभफलादिज्ञानाय तत् करणमाह—

यस्यां निरीक्ष्यते हस्तः सा तिथिः स्याद्दिनोदये ।
घटी चतुष्टयं शेषास्तदनु क्रमतो मताः ॥ २ ॥
हस्तवीक्षणवेलायां या तिथिः समुदीर्यते ।
तदङ्गुल्याः स्वरूपेण वाच्यं सर्वं शुभाशुभम् ॥ ३ ॥
तारादि त्र्यंशके ज्ञेया प्रतिपत् षष्टिकातिथिः ।
एकादशीच क्रमतः शेषं शेषास्त्ववस्थितम् ॥ ४ ॥
एवं तिथी फलंज्ञेयं त्रिपुरांशस्य दर्शनात् ।
जातिदिग् द्रव्यराश्यादेर्लभ्यालभ्यप्रवृद्धये ॥ ५ ॥

यदि मध्याया: प्रथमेंश उर्ध्वरेखादि शुभलक्षणम्, तदातेभ्योलभ्यं न चेद्लभ्यमिति भावः ।

ब्राह्मणाः क्षत्रियाः वैश्या शूद्रास्युः करपल्लवाः ।
कनिनिकाद्याहंसोऽपि योगवान् वर्णवर्जितः ॥६ ॥

यस्यामिति । ननु यद्दिने हस्तवीक्षा तत्तिथिस्थानादेवादिन शुभाशुभ-लभ्यालभ्यादि विचारः श्रेयान् अष्टप्रहरान् यावत् तत् एव निर्णयोपलम्भादिति चेन्नः पुरुषद्वयस्य स्त्रियाश्चैकाया करवीक्षा सम्भवे त्रयाणां फलसाम्यापत्तेः तिथि परावर्तेतु विशेषज्ञानमित्यतआह—हस्तेति । इतो भाष्यान्तं सर्वं स्पष्टम् । नवरं

उत्तर दिश इति । ननु यदि दिशि कस्यां मया लभ्यमित्यादिवक्ष्यमाण नक्षत्रचक्रापेक्षया आत्मभंमध्ये प्राप्तं तिथिचक्रापेक्षया उदग् लब्ध्वा तदा किं वाच्यमितिचेत्, " तिथ्यपेक्षया नक्षत्रस्य चतुर्गुणत्वेन बलवत्त्वात् परेण पूर्वबाधाच्च नक्षत्र चक्रफलमेव मुख्यं वक्तव्यं यद्वा स्वग्रामे लभ्यं " परं तत्राप्युत्तरभागतः ऊदीच्याल्लोकात्पण्याद्वेति । तत्रा शुभलक्षणेन लभ्यमिति भावः

अथजात्यादि परिज्ञानायाह—

ब्राह्मणीति । ननु ताराया ब्राह्मणीत्वं न युक्तं म्लेच्छौ सैंहिकेय शनीश्चराविति वचनात् म्लेच्छस्थानत्वात् तन्मूले सूतिकास्थानात् पादस्थानीयत्वाच्च प्रत्यक्षं ब्राह्मणीत्वं— .... .... .... सावित्र्यामुक्तं ब्राह्मणानां सावित्रत्वात् शान्तिकादिकार्येऽधिकारात् स्थानदैवतत्वात् विप्रौशुक्रगुरू इति शुक्रस्थानात् कर्कराशिर्द्विजाधिपस्थानं तथा धर्मरेखा च तन्मूल एवेति चेन्न; बालत्वेन ब्रह्मप्राधान्यात् अग्नितत्त्वाश्रयतया मुखेपीन्द्राग्निद्विदेवाधिष्ठितत्वेन अग्निमुखत्वात् ' अग्निमुखा वै देवा ' इति श्रुतेः ताराया एव ब्राह्मणीरूपं तत एव " कणयुंगलिमूलेवरीति " प्रकरणगाथायां पूज्यरेखापि तन्मूले सामुद्रिकफलकथनपृच्छासुमुद्राधरणीयैवशास्त्रीयान्वर्थात् सुवर्णमुद्रायाः प्रथमस्यां धरणात् सदा पवित्रैषा तत एव ऋषिब्राम्हणतर्प्पणकर्मापि तत्र प्रख्यातं कृष्णपक्षत्वात् दक्षिणहस्तस्य भद्रारहितैकादशी अप्यस्यां निश्चिता यज्ञ हिंसायां मेषभोगः धर्मेवृषभरूपत्वं—' न मांसभक्षणे दोषो न मद्ये न च मैथुने ' इत्यादिना शत्रुदानेन च मिथुनकर्मोपदेशः सन्ध्या प्रत्यासत्या पितृसमयश्च तर्हि ब्राह्मण्यं किं वाच्यं, अनामिकायां तु ब्राह्मणः शिरच्छेदात् क्षत्रियत्वमेव रसना घटीकाग्रस्था अङ्गुष्ठोऽनामिकातले इति नरपतिग्रन्थे रणमुद्रायां तदधिकाराच्च किञ्च षोडशकलापतिस्थान कर्क— आश्विने षोडशशतकस्वामिसूर्यक्षत्रियस्थान सिंह २ षोडश विद्यादेवि समधिष्टेय षोडश ऋतुरात्रि प्रधानकन्या राशिस्थानं शिवा तत एव षोडशार्चिः शुक्रोऽस्याधितिः शास्त्रेते न नृप इति षोडशाङ्कसंज्ञा ततः कौमार्यात् सम्भवदपि तस्या ब्राम्हण्यं व्याहतप्रायं भद्रातिथित्वेन मूलपर्वणि

कर्कराशीश चन्द्रयोगेन मृत्युयोगस्पर्शात् । मध्यायास्तुलात्तस्य मूलांशे सद्भावात् । वणिग्गुरुः कविर्वैश्य इति भुवनदीपकोक्तेश्च वैश्यत्वं शिरोभागे तत एव धनुराशिरपि गुरुस्थानं एवं प्रदेशिन्या गवेषकत्वेन जापाद्यनधिकृताया हननकर्मप्राधान्य तया शूद्रत्वमेव यद्यपि क्वाचित्किञ्चित् हेत्वन्तरप्राप्त्यावस्थाभङ्गस्यादपि तथापि नास्मिन् ग्रन्थभणिते विपक्षश्चिन्त्यः सिद्धवचनत्वात् हंसोऽङ्गुष्ठेति नैर्मल्यात् संयोगवान् अङ्गूष्ठावतारादि विद्याविषयत्वेन अङ्गूष्ठाद्यभिगृहीत प्रत्याख्यानहेतुः शिवरूपस्तथा आदि देवस्वरूपेणध्येयोयोगप्राधान्यात् चातुर्वर्ण्यरहित इति ॥ ६ ॥

दिग्व्यवस्थामाह—

तर्जनीप्राच्युदङ्ग्मध्या पश्चिमा काञ्चिनीस्मृता ।
दक्षिणाऽनामिका मेरुर्मध्यदेशः प्रकीर्तितः ॥ ७ ॥

तर्जनीति । त्रिवेण्याः प्रवेशात् पूर्वाभिमुखस्थायि पद्मासननरस्य पूर्वोदधि प्रत्यासत्त्याराशिचक्रे सूर्यावस्थानात् पूर्वदिक् प्रदेशिनी । अनन्तमुत्तरापथमिति । गुरुत्वेन धनादिप्राप्त्या तदधीशधनदाधिष्ठितत्वेन च मध्यमाङ्गुली उदीची प्रायोमलिनवसनाचारत्वेन पश्चिमाधिपशानिस्थानात् काञ्चनी प्रतीची । शुक्रोहि दक्षिणदिशोऽधिपः समुद्रप्रसङ्गाज्जलचर स्तत् स्थानात्, दक्षिणानामिका तत्रोपाध्याय न्यासात् धरसंवरसुवज्ञाया तत एव अस्यास्पर्शे जलवृष्टिरपि राशिचक्रे कर्कादित्रयं दक्षिणायनमुखं तत्रैवमेरुरङ्गूष्ठो मध्यदेशे मण्डलापेक्षया विनिवेशनात् प्राग् प्रयागाच्च प्रत्यग् जन्मदेशापेक्षया देशमध्यम् । स्थानापेक्षया ग्राममध्यं गृहमध्यं यथासम्भवं ज्ञेयं हस्तस्य तलसंस्पर्शे पुनः पञ्चदशस्मृता इति पञ्चदशाङ्क संज्ञास्थानत्वात् ॥ ७

द्रव्यव्यवस्थामाह—

धातुमूलं तथा जीवं स्त्र्यंशकाविषमाङ्गुलेः ।
समायाः खलुमाया या जीवोमूलं च धातवः ॥ ८ ॥

धातुरिति। विषमा एकत्रिपञ्चसंख्येयास्तारामध्याङ्गुष्ठश्च समा द्विचतुः संख्येया शिवातर्जनी च। क्रमात् पुंस्त्रीरूपत्वात्। मायाशब्देनात्राङ्गुष्ठोपि देशग्रहे सर्वग्रह इति न्यायात् अग्रे ससिकं भोगिनो मूल इत्युक्तेः ॥ ८ ॥

तत्रापि विशेषमाह—

**धातुप्राप्तौ यदङ्गुल्यां यो ग्रहस्तस्य धातवः।**
**सिसकं भोगिनो मूले मध्ये ताम्रं रविस्थिते ॥ ९ ॥**

धात्विति। ननु रविराहुकेतूनां मध्यांशत्वात् चन्द्रस्य मूर्द्धांशत्वात् कथं धातूक्तिस्तत्ररव्यादिस्थाने मूलत्वात् चन्द्रस्थाने जीवत्वादिति, तन्न; अभिप्रायाऽनवबोधात् यदाप्रतिपत् १ तृतीया २ पञ्चमी ३ चेतित्रयं विषमाङ्गुल्यां धातुतिथयः समाङ्गुल्यां द्वादशी ४ चतुर्दशी ५ च तत् तिथि पन्चके हस्तवीक्षणसमये प्राप्ते क्रमाल्लोह १ कनक २ सीसकं ३ त्रपु ४ रीति ५ धातवो वाच्या अङ्गूष्ठमूले पन्चार्चिषो वुधस्यस्थानात् पन्चम्येव युक्ता नतु अङ्गूष्ठादौ विजानीयादर्क—अङ्गूष्ठेन सहाङ्गुलीग्रहे पन्चसंख्यासंकेतात् तिथि १५ संख्येतिमताश्रयणात् प्रतिपत्। अत एव प्रभातमिन्दु जगुरु इवि भुवनदीपके वुधस्य प्रभातोक्तिः सामुद्रिके अङ्गविद्यारूपे मासःकृष्ण पक्षादिर्जैनसिद्धान्तवन्नज्योतिः शास्त्रवच्छुक्लादिः पुरुषप्राधा[2]न्यात् तेन कृष्ण पक्षदशमीं यावत् हस्तेक्षणे पञ्चमी प्राप्तौ सीसकं तदनुअमावास्या अग्रतः पन्चपृष्टतः पन्चेतिशुक्ल पन्चमीं यावत् पन्चम्या प्राप्तौ मध्ये इति मासमध्ये ताम्रं २ तदनु पूर्णिमाशकायां यावत् दशदिनेषु हस्तेक्षणे पन्चमी प्राप्तौ तारं अङ्गूष्ठमूर्द्धनि चन्द्रचारात् मेरौज्योतिर्देवानां त्रयाणामप्याधिपत्यात्। एवं कृष्णपक्षे सूर्यप्राधान्यात् प्रतिपत् प्राप्तौ रविसुतस्य शनेर्धातुर्लोहमेव शुक्लपक्षे चन्द्रप्राधान्यात् रात्रियोगात् प्रतिपत्प्राप्तौ कांश्यकं राहोर्धातुर्वाच्यो रात्रि हस्तपृष्टे व्यवस्थिता इति वक्ष्यमाणत्वात् तत्र राहोरधिष्ठानाच्च। तथा तृतीया प्राप्तौ कृष्णपक्षे कनकं गुरोरधिका राच्छुक्लपक्षेकृतलोहं रात्रौ केतूदयाधिकारात् स्थानसाङ्कर्ये कालवलमेवात्रप्रयो-

---

१ दिक्। २ तत् एवशब्दशास्त्रे मातृपितृ समासे पितृरेखावस्थानम्।

जकं यद्वा मध्यांशे मूलमपि तत्तद्ग्रहधातु योगाद्वाच्यं मूर्ध्नि जीवोरूप्ययुक्तः तथा चन्द्रे फलं जीवयुक्तं राहोस्तिथौ नारका इति नारकभोग्यं मूलमित्यादि ज्योतिः शास्त्रेऽपिस्थानेग्रहयोगे तत्तन्मिश्रव्याख्यानात् यद्वा माया शब्देन मेरुनेग्राह्यस्तत्र सामस्त्येन ग्रहाश्रयत्वेन जातिसांकर्यवत् द्रव्यसाङ्कर्यदोषात्, सामान्यशास्त्राद्विशेषे बलाधिक्यम् ॥ ९ ॥

ग्रहाणां धातूक्तिमाह—

मूर्ध्नितारं चन्द्रचाराद् ग्रहाणां सप्तधातवः ।
ताम्रं तारं रीति नागो हेमवर्गौ च तीक्ष्णकम् ॥ १० ॥

मूर्ध्नीति । रसाधिकारे शार्ङ्गधरचिकित्सायां वैद्यग्रन्थे तथैव सम्मतत्वात्, रीति—जसद्धातुः नागं सीसकं--वंगं त्रपुतीक्ष्णकं लोहम् ॥ १० ॥

कांसकं वृत्तलोहं च राहोः केतोश्चयत्स्मृतम् ।
लघोर्द्वितीय त्र्यंशे तन्मध्यायावृत्तलोहकम् ॥ ११ ॥

कांश्यकमिति । वृत्तलोहं धातुसङ्करजन्यं लघोरिति—यथा सूर्योऽङ्गुष्ठस्थोऽपि राशिविचारे प्रत्यासत्या तर्जनी द्वितीय भागे स्वसुहृन्मंगलग्रहे पूर्वदिश्येव । अङ्गुष्ठाद्दक्षिणायनरूपादुद्धयावृत्य तत्रैव पूर्वोत्तर दिग् व्यवस्थायां युक्तो हस्तस्य सूर्यदेवतस्य तर्जनी मूल एव न्यासात् तत एव सिंह सप्तमराशिं तत्रस्थः पूर्णदृष्ट्या पश्यत्यपि सर्वतोभद्रचक्रे पञ्चचत्वारिंशदङ्कन्यासः पञ्चचत्वारिंशमुहूर्तव्यञ्जकस्तेन स्पष्टः तथा राहुरपि पृष्ठस्थस्तारा द्वितीयभागे राशिचक्रे ज्ञेयोः मध्याया द्वितीये केतुःसप्तमत्वात् ॥ ११ ॥

मूले मूलं शनेः राहोः पक्षं शुक्रे कुजे गुरौ ।
फलं च चन्द्र भानुभ्यां शेषे पुष्यं विनिर्दिशेत् ॥ १२ ॥

---

१ चूडामणि शास्त्रेऽपि अधोमात्रौ द्वौस्वरौःयुक्तौ तौयदाजीवाक्षरयुक्तौ प्रश्ने दृश्यते तदा जीवधातुं दर्शयतः धातूत्कीर्णो जीवोजीवधातुरिति मिश्रव्याख्यादृश्यते । भुवनदीपके मंदे दूरगे भौमाः स्युः धातुः सवितृभागी वोमूलं जीवश्चसौम्यश्च जीवं प्राहुर्महाधियाः इत्युक्त्वा शुक्रे चन्द्रेःभवेद्रूप्यं बुधेस्वर्णमुद्राहतं पर्यायस्य गुरोरत्नत्रयुतं हेमसूर्ये मौक्तिकमुच्यत इति तथा दर्शनात् ।

मूलइति। मूलतिथिपञ्चके षष्ट्यादिके प्राप्ते शनेस्ताराधिपत्याज्जीवयुक्तं मूलं वाच्यं " ताररविचंदरिखावुहसुक्काजीवमंगलसणीया" इति—आगमे सर्वोपरिस्थानात् ताराधिपत्यम्। सप्तम्यामष्टम्यां नवम्याञ्च शुक्र गुरु कुजस्वामिकत्वात् पक्षं वाच्यं कृष्णपक्ष एवै तत् शुक्ले तु षष्ट्यां मूलमेवाष्टम्यायां पुष्यं च राहुकेत्वोः। प्राधान्यादिति। दशम्या दशशतरश्मिस्थानात् फलं ज्ञेयं अत एव सूर्यस्य तर्जनी मध्यमपि स्थानं तर्जन्यां दशविज्ञेया इति तथा तर्जन्यर्द्धग्रहे शतमिति विवेकविलासोक्तेः। एवं चन्द्रेऽपि ननु चन्द्रस्थाने तिथिरमावसी पूर्णावातयोः प्राप्तौ जीव एव विषमाङ्गुल्याः शिरस्त्रिभागात् यद्यत्र जीवयुक्तफलावाप्तिस्तदालभ्येऽलभ्येवा संशय एव किं हस्तदर्शयितुरमावस्यायां पूर्णायां वा प्राप्तायां जीवाल्लभ्यमुतजीवयुक्तफलादिति चेत् सत्यं; कृष्णपक्षे सूर्यप्राधान्याज्जीवयुक्तफलात् शुक्ले हस्तवीक्षणे केवलजीवाच्चन्द्रप्राधान्याल्लभ्यं तत्राशुभलक्षणेन लभ्यमित्येव निर्णेतव्यम्। अमावास्यां सूर्येण संगमात् चन्द्रस्य बाध एव न च पूर्णिमामावश्ययोरेवं सांकर्यमपि सामान्यतो विशेषस्य बलवत्वात् शेषेबुधकेतूवारघातस्थान तिथौ प्राप्तायामत्रापि बुधे मूला संभवात् समाधिः प्राग्वत्॥ १२॥

**एवं जीवेऽपि संप्राप्ते ग्रहैर्वाच्योऽस्य निर्णयः।**
**चन्द्रदेवाश्च तिर्यञ्च कुजदैत्याः शनेःस्थितौ॥१३॥**

एवमिति। अनेन प्रकारेण जीवेजिवतिथि पञ्चके एकादशी द्वितीया त्रयोदशी चतुर्थी पञ्चदशीति लक्षणे प्राप्ते चन्द्रे इति चन्द्रतिथौ पञ्चदश्यां देवाः। तिर्यञ्च इति तिर्यग्जृम्भकादेवविशेषा भूतादयो लोकेपितर इति प्रसिद्धा वा कुजेकुजाधिपचतुर्थी तिथिर्वाच्याः। शनेरिति शनिस्थानायामेकादश्यां तिथौ दैत्याः प्रेतादयः॥ १३॥

**राहो स्तिथौ तारकास्युः शेषे तु मनुजाः स्मृताः।**
**मनुष्येऽप्यर्थसंप्राप्ते पञ्चमायाः लयोः क्रमात्॥ १५॥**
**बालं कुमारं तरुणं पक्कं वृद्धं विचिन्तयेत्।**
**इत्यादि शेषं सर्वं स्यादत्र चूडामणाविव॥ १६॥**

राहोरिति । राहुः षष्ठी तिथिस्थाने । षष्ठस्य राहोः शुभत्वात् तेन षष्ठी तिथि प्राप्तौ नारका इति नन्वस्यां जीवसम्भवे नारका इति कुतः सामान्या भावे विशेषस्याप्यभावात्, किञ्च नारकेभ्यो लभ्यालभ्यं तदप्यसम्भाव्यमेवेति चेत् अत्र सतोगतिश्चिन्तनीयेति न्यायाच्छुक्लपक्षे हस्ते क्षणे एकादश्याः प्राप्तौ शनितिथिः सैव राहु तिथिः वर्णादिकं शनिवदस्य चेति। ज्योतिःशास्त्रे तथा प्रतीतेः । त एव लोहमुद्रा कनिष्ठायां धार्या तस्यास्थाने ताराशिरोभागे शुभलक्षणे नारकानारकप्रायाश्चाण्डालभिल्लचौरवागुरिकशाकुनिकमात्सिकादयो हिंस्रजीवास्तेभ्योलभ्यमिति ज्ञेयं, कृष्णेतु दैत्या एव अत एव मूलेमूलं शनौराहाविति द्वयोर्मूलत्वेन साम्योक्तिः । यद्वा सर्वज्ञानात्मकत्वादस्य ग्रन्थस्य तिथिचक्रेण गत्यागति ज्ञाने षष्ठ तिथि प्राप्तौ नारकाणां गतिरागतिर्वावाच्या । ऊर्ध्वीकृतवितस्तिरूपे स्वाङ्गे शिवातारा पर्वस्थितराशिवर्ता नराणामङ्गोधाभागवर्त्तित्वाद्वानारकत्वेन तेभ्योलभ्यमन्यद्वा, तेन दोषज्ञानपृच्छायां स्पर्शेतत् स्थानप्राप्तौ नारकरूप कुत्सितदेवोपद्रवादिरपि ज्ञेयः । शेषेषु रवि गुरुज्ञकेतुशुक्रेषु कोऽर्थस्तत्तत्तिथिषु प्राप्तासु मनुजा वाच्याः तत्र शुक्राधिपाद्वितीया गुरोः स्वामित्वेन त्रयोदशी च अनयोः प्राप्तौ जीवस्थानान्निर्विवादमेवमनुष्यप्रतिपत्तिः परत्रजीवस्थानस्यैव दुरापत्वात् किमेतद्विरुद्धमितिचेन्न, वस्तुतो वक्ष्यमाणस्यावयोऽपि च कनिष्ठादेः स्पर्शाद्बालादिकं वदेत् इति स्पर्शनाधिकार सूत्रस्यावसरदानायास्योपन्यासात् तथा च द्वितीया त्रयोदश्योर्विना शेषतिथीनां बाधादेतत्तिथिद्वयेन मनुष्येभ्यो लभ्यालभ्यपरिज्ञाने मनुष्यादपि कीदृशाल्लभ्यमन्यद्वेतिज्ञेयम् । पञ्चाङ्गुलीषु शुभाशुभलक्षणाद्बालादिकं वदेत् । तत्र तारायां कनिष्ठत्वाद्बाल्यं गौर्यां कन्याराशिस्थानात्कौमार्य्यं मध्यायां सौभाग्याद्धनस्थानाद्वातारुण्यं तर्जन्यां तर्जनगवेषण कलहस्थानात् पक्वत्वं गतार्द्धवयस्करूपं विष्णोः, पुराणपुरुषत्वात् सूर्यस्यस्थविर ग्रहाश्रयाद्वावृद्धत्वमिति ॥ ततो न काश्चिद्विरोधः न चैवं तिथिचक्रं वैयर्थ्यं मनुष्यार्थलाभात् एवं मनुष्यादिभ्योलभ्यं तदपि तद्वेलायां स्पर्शात् नक्षत्रचक्रे यत्रात्मभं तदङ्गुल्यांवयस्तत्रमध्येङ्गुष्ठाभागवृद्धत्वं तत्र-

दिक्षुमायावत्तत्द्विसृश्यं भचक्राद्वा बालादिस्ववयसि वाच्यमिति जातिदिग् द्रव्यलभ्यालभ्यसमयज्ञानाय फलवत् सूत्रं बोध्यम् । तदेवाह बालमिति । चूडामणिशास्त्रकथनं शिष्टसम्मत्यर्थम् ॥ १६ ॥

अथ राशिव्यवस्थामाह—

कस्य पार्श्वेऽथवा ग्रामे कस्मिन्मे लभ्य सम्भवः ।
इति प्रश्नेऽङ्गुली भागामेषाद्या द्वादशो दिताः ॥ १७ ॥

कस्येति। कस्य—देवस्य नरस्य तिरश्चोवेति। सामान्यतो जात्यादिलभ्यालभ्य निर्णयप्रागुक्तेतत्तन्नामराशिना विशेषलभ्यालभ्यज्ञानाय राशिचक्रामिदम् । अत्र जन्मराशेर्नमुख्यता किन्तुनामराशेरेव यतश्चाग्रेऽपि वक्ष्यते जागर्तियेन नाम्ने-त्यादिस्वरोदयशास्त्रे तस्यैव प्राधान्यात् यदुक्तं श्रीनरपति ग्रन्थे—

प्रसुप्तो भाष्यते येन येनागच्छति शङ्कितः ।
तस्य नामादिवर्णे या मात्रा मात्रा स्वरः सच ॥ १ ॥

अत्रार्द्धे तस्य नामप्रमाणं हि ग्राह्यं स्वरविशारदैः इत्यपिपाठः ।

बहूनियस्य नामानि नरस्य तु कथञ्च न ।
तस्य पश्चाद्भवं नाम इत्युक्तमादियामले ॥ २ ॥
यदि नास्ति भवेद्वर्णः संयुक्ताक्षरलक्षणः ।
ग्राह्यस्तदादिमो वर्णः इत्युक्तं ब्रह्मयामले ॥ ३ ॥

अथ राशीनां क्रमानियममाह—

काञ्चन्याः प्रथमे त्र्यंशे मेषोवृषोद्वितीयके ।
एवमत्रक्रमे हस्तप्रेक्षा तिथिरुपागता ॥ १८ ॥

काञ्चन्या इति । "षड्निशाबलिनोऽजोक्षयुग्मकन्या धनुर्मृगा" इत्यारम्भ-सिद्धिवाक्यात् । मेषादि त्रयं रात्रिबलं रात्रिप्रत्यासत्या तारायामेव तस्याः स्वल्पप्रकाशेन सायङ्कालरूपत्वात् तत एव सध्न्या मन्दभुजङ्गमाविति शनि-राहोस्तत्रव्यवस्था रात्रावेव वह्नेस्तेजोधिकत्वात् तस्यां अग्नितत्त्वाधिष्ठानेन तद्वाहन मेषस्य औचित्यमपि तेन पश्चिमायां कम्बलबाहुल्यं तथा देवानां

विमानेष्वपि वृषभरूपं पश्चिमायामेव वाहकदेवानां मिथुनप्रवृत्तिं मिथुनप्रवृत्तिरपि ताराग्रे नखरक्तीकरणान्नार्यावश्ये सुलभैवं चन्द्रचक्रेऽपि अश्विन्यादिक्रमाद्राशित्रयं नियतं गौर्यां कर्कादित्रयं दक्षिणप्रदेशरूपत्वा-त्तस्याः ।[2]सूर्यस्यापि कर्कादेवदक्षिणायनमिति । तथा दक्षिणस्यां भोगा-धिक्या कुमार्याः कन्यायाः स्थितप्राधान्यमपि । कुमार्याः सिंहस्य स्ववाहनरूपप्रत्यासत्तेः कर्काधिशोद्विजपतिरस्यामेव पूजायामधिकारीति कुमार्यामूले गणपतिः परमब्रह्मरूपे वश्यं तत एव दक्षिणस्यां गजप्राधान्यमत्र गणपतिरङ्गुष्ठे जापे प्रथमं सावित्र्यां योगार्ह इति तथा व्यापारे निवसेल्लक्ष्मीरिति लक्ष्म्यां तुलादित्रयं जयासु संग्रामवलोपयो-गीति रत्नमाला वचनात् युक्त एव तत्र धन्विप्रसङ्गः तेन धन्व्यश्वपश्चार्द्धक इति वाक्यादुत्तरस्यां हैय प्राधान्यमपिदेवविमानेषु वाहकानां सिंहा १ हथी २ वसहा ३ हया ४ कमसो इत्यागमात् । तर्जन्यामकरादित्रयं तदधः स्नानोचितात्रिवेणीकप्रदेशात् " एणास्येमकर " इति ज्योतिःशास्त्रे मृगा-ननत्वेन पूर्वोत्तरदिग्भागे ते नैव कस्तूरिका मृगप्राधान्यं तत्र तथा मकरस्य पाश्चिमार्द्धं कुम्भोमीनश्च जलचराः ख्याता इति लघुजातकोक्त्या पूर्वसमुद्र प्रसङ्गेन मकरादि स्थानौचित्यमत्रैव तत एव चतुर्मायामूलपर्वस्थानान्मेषा-दयश्चत्वारोराशयो[3]नवांशेष्वाद्या इति सुस्थितमेतद्राशिचक्रमस्य किञ्चित् साम्यं नमस्कारस्तोत्रे कन्नाविसमरिहंता मेसोमयरोअं अंतिणो सिद्धा पंचाण अलि-सूरी । मिहुणधणाहुतिं उवज्झायाकवडतुलायसाहु ॥ १७ ॥

अस्योपयोगमाह——

---

१ रोचनं मत्स्यपितंचपिष्ट्वा तु तिलकेकृते वामहस्त कनिष्ठायां पतिर्दासो न शंशयः । इति उडिशग्रन्थ वश्यत्वम् ॥ २ तुलादित्रये दक्षिणायनेऽपि अर्द्धगतें सर्वगत मिति न्यायादुत्तरस्यां तद्व्यवस्थायां न दोषः एवं मकरादित्रयस्य पूर्वोत्तर विदिग् भागे न उत्तरायणे सिद्धे मेषादित्रयस्यापि पश्चिमायां व्यवस्थाने न दोषः । अर्द्धोत्पन्ने घटेघटो जात इति व्यवहारात् भीमोभीमसेन इति सत्यभामाभामेति नाम्नोर्द्धे पूर्णनामवतत् । ३ सैन्धवा–अश्वाः प्रतीताः ॥

ततो लभ्यमलभ्यं वा स्वराशिपरमेलकात् ।
ज्ञेयं कर्कत्रयं मेरोर्नखमध्याद्यपर्वसु ॥ १९ ॥

तत इति । तत् स्थानराशिनामवतो वस्तुनो ग्रामान्नराद्वा शुभोर्ध्व-रेखादि लक्षणे लभ्यं तदभावेन लभ्यमिति वाच्यम् । क्वचिद्रेखाणामप्राकट्ये स्वराशिना तद्राशेः षडष्टकादिवर्जनया स्वामिमैत्र्यादिकं विमृश्य मेलकश्चिन्त्य-स्ततोलभ्यालभ्ये ज्ञेये न चैवं ज्योतिःशास्त्रावष्टम्भे अलाक्षणिकत्वापत्तिः करद्र-ष्टुरितिवाच्यं—पृच्छन्त्या पितृमन्दिरे पितृग्रहाभिख्याक्षरं गृह्यते । पत्युश्चापि तदीय मन्दिरगतं गुर्व्या अभिख्याक्षरम् ॥१॥ सुद्यारम्भ्यवदि व्यवस्थिततिथीन् दत्वा मुनींश्चध्रुवान् । भागं वह्निभिरेककेन तनयो द्वाभ्यां सुताखे नखम् ॥ २ ॥ इति भुवनदीपके ज्योतिः शास्त्रेऽक्षरविचारात्मकचूडामणि शास्त्रावष्ट-म्भवत् निमित्तेऽपि निमित्तान्तरसाहचर्यस्य सर्वत्राभीष्टत्वादित्युक्तं प्राक् ।

अथ पञ्चम्यादितिथिप्राप्तौ तत् स्थाने राश्यभावात् किं वाच्यमत—आह—

ज्ञेयमिति । स्थावरं[1] राशित्रयं कर्कादि तच्चन्द्रादिमहागृहस्थानत्वात् वुधस्य महाग्रहत्वं तच्छुक्रमहाग्रहस्य सम्नुखगमनादपि वुधसम्मुखगमनस्या तीव दुष्टतायारत्नमालादौ कथनाद्विज्ञेयम् । ज्योतिःशास्त्रे त्रिशश्चतुर्णा-मित्यादिना राशिमार्गानुरोधेन पञ्चदशतिथीनां विभागवदत्र तिथिभागानु-रोधेन राशित्रयं पुनरुक्तिः । नन्वेवमङ्गूष्ठ राशिषु शुभलक्षणे सावित्र्याम-शुभलक्षणे किंवाच्यमिति चेदुच्यते कृष्णपक्षेगौर्य्या शुक्लेऽङ्गूष्ठे न शुभा-शुभ एवं च रेखासु शुभलक्षणपाटवेऽपि लभ्यालभ्ययोर्न्यूनत्वपूर्णत्वेवाज्ञेये राशि-मेलकस्यावश्यं विमर्शः कार्य इत्यत आह—यद्वेति । स्पष्टं अत्रकेचन-ध्रुवराशित्रयं न मन्वते किन्तु अङ्गूष्ठभागत्रये प्रत्यंशं मेषादि चतुष्टयमुपरितः प्राहुरतश्चन्द्रोरविश्चस्थानस्थ एवं वुधोमित्र शनिगृहे मीनेति च वेति ।

---

१ स्थावरत्वं वक्ष्यमाणजन्मचक्रे निजराश्यादिकः क्रम इतिभणनाद्राशिव्यवस्थाया अनैयत्यात् । २ प्रतिशुक्रं त्यजन्त्येके यात्रायां त्रिविधं वुधाः तस्मात् प्रतिकुजं—कष्टं ततोऽपि प्रतिसोमजमित्यारम्भासिध्दौ ॥

एवं सेवनया गुरोः सुरतरोर्मृष्टं विमृष्टं तिथे-
श्चक्रं चक्रभृतां निमित्तसुधियां दुर्बोधमायासतः ।
सिद्धोपासननर्मकर्मरुचिना मेघेन सत्संविदां
मत्वातत्कथयन्तु लक्षणकथां सन्तः श्रियां साधनम् ॥ १ ॥

इति श्रीहस्तसञ्जीवनव्याख्यायां सामुद्रिकलहर्याख्यायां तिथिचक्र-दर्शनं सम्पूर्णम् ॥

अथ वारदर्शनमाह—

रविरङ्गुष्ठमध्यस्थस्तन्नखं चन्द्रमास्फुटः ।
मङ्गलस्तर्जनी शीर्षे नृपासनगतो बुधः ॥ १ ॥
लक्ष्म्यां गुरुः कविर्गौर्यां कनिष्ठायां शनिर्मतः ।
हस्तपृष्ठे राहुकेतू चैवं वारास्तथा ग्रहाः ॥ २ ॥

रविरिति । अङ्गुष्ठमध्यत्रिभागे रविः तत्र कर्कादिध्रुवराशित्रयमध्ये सिंह-व्यवस्थानात् ननु मेषादित्रयं मूलांशाच्चटत् निश्चितं कर्कादिध्रुवत्रयं कथम-वतरत्, मन्यते किञ्चध्रुवसूत्रस्यां दृश्यते मेरोरपि तत्रैव ध्रुवत्वात् तेन तुलादि त्रयमेवध्रुवमेष्टव्यमिति तन्न, दक्षिणहस्तस्य दक्षिणायनरूपत्वेन दक्षिणादि-ग्भागस्थस्पष्टनखरूप चन्द्रोपलम्भात्तद्भवनादिरेखात्रयं शिवस्थानत्वेन मेरूरूपा-द्राङ्गुष्ठ एव दिवसो दाक्षिणो हस्तइत्यस्य न्यूनभवनादवतरत् संजाघटीति । भरतक्षेत्रस्यापि मेरोर्दक्षिणदिगवष्टम्भात् ज्योतिःशास्त्रेऽपि पुरीरक्षरतां देव-कन्याथकान्तीसितः पर्वतः पर्यलीवत्सगुल्मं पुरीचोज्जयिन्याह्वया गर्गराटं कुरु क्षेत्रमेरूभूवो मध्यरेखेति ब्रह्मतूल्यवचनात्, दक्षिणादिश एवमध्यरेखारम्भ-स्ततोऽत्रापि गोलरेखाया याम्यदिशएवप्रादुर्भाव इति । शिवायां तु राशि त्रयस्याधिपानामनवस्थानादङ्गुलीपतेः शुक्रस्यापि अनवस्थितत्वात् क्रमागत-राशिचक्रबलाद्राशित्रयं चटत् बोध्यम् । राशिचक्रे मकरस्य राशेस्तर्जन्या-मूलत्र्यंशे व्यवस्थानात् उत्तराषाढानक्षत्रसंभवेन तज्जन्मा अरुणो मालवभा इति वचनात् पूर्वदिग् मालवदेशोद्भूतोमङ्गलस्तर्जनीशीर्षे शत्रुहननेऽधिकृत-त्वात्तस्या इति नवम्याः स्थानप्रत्यासत्या नवार्चिमान् पृथ्वी तत् स्थानात्

पृथ्वीजन्माप्ययमनेनैव हेतुना तत एव ताम्रमुद्रापरिधानं तर्जन्यामेव शक्ति पूजा च तथा नृपो राजाङ्गूष्ठस्तदासनं तन्मूलं तत्र सूर्यप्रत्यासन्नो बुधः राजसून् राजासने तिष्ठतीतिन्यायात् सुश्रुत वैद्यग्रन्थोक्तमङ्गूष्ठसन्धिद्वयभावादेव अस्पष्टः। लक्ष्म्यां मध्याङ्गुल्यां गुरुर्धनुराशिशोयोगात् मध्ये सूरासूराचार्याविति वाक्यान्मध्याश्रय एवायं रवीन्दु भौमगुरव इति मित्रस्य भौमस्य प्रत्यासत्तिरपि नक्षत्रचक्रे मध्याया अधस्तलस्योत्तरदिशि उत्तरफाल्गुनी जन्मनक्षत्रमपि गुरोरूत्पत्तिदेशः। सिन्धुः कणयरुइसमदिठी वारसकिरणो य सिंधु देशभवो इति वचनात् सचापि उत्तरस्यां सैन्धवा-अश्वा इति प्रतीतेः। त्रयोदशमासान् यावदेकराशिस्थिति ज्ञापिकापि त्रयोदशी तिथिर्मध्याग्रे तेन तत्र मध्यात्रिसप्त भास्करा इति मताश्रयेण द्वादशार्चि गुरुः सावित्र्यां कविशुक्रः कवेरमित्रेन्दुर्भित्रेज्ञार्कौ समावुभाविति। आरम्भसिद्धेस्तथाज्ञशुक्रशनिराहवः, इति भूवनदीपकस्य वचनात् बुधस्यगृहं कन्याराशिस्तस्य शिवाग्रे स्थानात् ताराग्रे शनेः प्रसङ्गश्च नक्षत्रं ज्येष्ठासोऽपि तत्रैव अत एव दक्षिणाशापतिः शुक्र इति प्रागुक्तम्। किञ्च रजः कविज्ञाविति क्षत्रियायां गौर्यां रजोरूपः कविरेव युक्तः पादरूपायां तस्यां शुक्रस्यापि द्विपदतया भणनात्। कनिष्टायां शनिर्मन्दस्तेजस्त्वात् पश्चिमाधिपतित्वाच्च। नपुंसकत्वेन स्वल्पबलः स्वमित्रस्य बुधस्य राहोर्वा भवनाय मिथुनायोचितः हस्तपृष्ठे राहुकेतू तत्रापि मध्यामध्यपर्यायवद्राहोराधिपत्यं परतोऽङ्गूष्ठमध्यपर्वयावत्। केतोरिति विभागः अनयोः पृष्ठस्थितिर्नवग्रहध्यानायेत्युक्तं प्राक् तत एव यन्त्रन्यासे करतलद्रष्टिभ्यां नम इति सार्थकं तत्रापि देवाधिष्ठानात्। हस्तपृष्ठे शुभलक्षणे अष्टोत्तरी दशाचक्रे राहुदशायां विंशोत्तरीदशाचक्रे राहुकेत्वोर्दशायामपि शुभमिति परिज्ञानाय लभ्यादि ज्ञानाय च एवं वाराः सप्तेव रात्रौवाराणामनुपयोगान्नवारदोषाः प्रभवन्ति। रात्राविति वाक्यात् दिनरूपे हस्ततल एव तथा ग्रहानव अग्रे वक्ष्यमाणभावचक्ररुपराशिचक्रेषु तदुपयोगात्। एवं च मेषादि त्रयस्य स्वामी शनिः कर्कादि त्रयस्य कृष्णपक्षे शुक्रः शुक्ले चन्द्रस्तुलादित्रयस्य गुरुर्मकरादि त्रयस्य मङ्गलः तारायाः पतिः

शनिः साविन्याः कविः मध्याया गुरुः प्रदेशिन्या मङ्गलः अङ्गूष्ठस्य स्वामी चन्द्रः एकस्याः कलायाः शिवार्पितत्वेन पञ्चदशाकलापूर्णत्वख्यापक पञ्चदशी तिथिस्थानात् । शनिना मित्राय राहवे वृषभस्थानं दत्तं तेनवृषे राहुः श्रेष्ठस्तत्रस्थोदशमं कुम्भस्थानं मङ्गलेन स्वमित्राय भानवेदत्तं पूर्णदृष्ट्या पश्यति ततो राहुरव्योः परं वैरम् । गुरोः शुक्रस्य च मध्यानामिकयोः सीम्ना देवदानवगुरुत्वेन वैरम् । राहोर्भक्ष्यमिन्दुः स्वस्वस्थानातीयपर्वणि कर्कराशेरिन्दोः पूर्णदृष्टत्वात् । मङ्गलोऽपि भक्ष्यमेकादशस्थानत्वादेकादशतुभवनं सर्वे पश्यन्ति खेचराःसम्यक् । पूज्यवर्गौ-गुरुसितौ शुक्रस्य दानवगुरुत्वात् गुरोश्च पूज्यत्वं दानवानामपि पूर्वदेवत्वात् । देवत्वमदेवत्वमुभयमपि, असुराणामागमेऽपिसिद्धं 'देवा चउव्विहा' इति तथादेवोपकरेइ असुरोपकरेइति भगवत्यां तथोक्तेः हिमांशुबुधयोः सूर्यादुच्चाधः स्थानात् वैरं विवस्वन्मन्दयोः पूर्वापरादिशोः स्वामित्वेन वैरं कुजार्कयोः स्थानसङ्गादातिमैत्री । सितज्ञयोरपि शिवायां कन्यास्थानदाना चन्द्रस्यार्क बुधौमित्रोऽपि एकाङ्गुलस्थायित्वात्, कुजगुर्वादयः समाः प्रत्येकमङ्गुलिस्थानान्मन्दस्यज्ञसितौ मित्रेर्गुरुर्मध्यः परेऽरयःइतिचन्द्रेण वैरं प्रान्तेत्विन्दुशनीश्वराविति वचनात्, इतोऽङ्गूष्ठे चन्द्र इतः प्रान्ते शनिरिति । अङ्गूष्ठप्रदेशिनी च देवैरुद्धाशिवा तारा च दानवैर्गुरुस्तुमध्यस्थ एव मध्यायां दानवस्य राहोरपि पूज्यत्वेनोक्तत्वात्, सुरासुराचार्ययोराशिमध्ये फलदायित्वान्मध्यस्थानं तत्र गुरोर्गुरुस्थितिकत्वात् गुर्वाअङ्गुलिः स्थानं शुक्रसमासस्थितिकत्वेन लघुगौरी स्थानं रवेः शुक्रशनी शत्रू इति स्वस्थानाद्दूरेस्थितौ ज्ञः समः इति स्वस्याधः कुजजीवशनिभिः स्वतएव सूर्यराशेरनपेक्षं राशि भोगात् स्वतोऽङ्गुलिस्थानानि लब्धानि सूर्येन्दुभ्यां महाग्रहेन्द्रत्वेन स्थानप्राप्तावपि राशिचिन्तायां पराश्रयत्वं स्वीकृतं ज्योतिशास्त्रेऽन्येषां गृहद्वयसद्भावे सूर्येन्द्वोः प्रत्येकमेकं गृहं कर्काख्ये सिंहश्च तद्वदत्रापि स्थानचिन्तायां तयोरेकमेव स्थानमङ्गूष्ठः प्रतिमा संयोगात् तत्रापि चन्द्रस्य पश्चिमायां प्रतिमासमुदयप्रतीतेस्तारोनुसारस्ततो नक्षत्रचक्रे ताराद्यभागे चित्रा

तज्जन्मनक्षत्रमपि व्यक्तं तथा प्रत्यग् मुखौ शनिसोमावित्युक्तेः शनेस्तद्दिशः स्वामित्वेन चन्द्रस्य वामहस्त प्रत्यासत्त्या तत्त्वमपि तेन चन्द्रस्य यवनदेशोद्भवत्वेन वामेहस्ते वामरीत्यैवायुर्लेखादि चलनात्तत्प्रधान्यं पश्चिमाधिकाराद् यवनानां वामहस्ते मुख्यतापि वस्तुतस्तु राजभावात् सर्वत्रेन्दुः कुजः सव्ये इतिवचनाच्चन्द्रस्य सर्वत्रस्थानं सर्वनक्षत्रप्रियत्वात् नवांशचक्रेऽपयोगादङ्गूष्ठोऽपि तत् स्थानं तच्चक्रं त्वेवं नवांशा अजैण कुलकर्कादय एव तत्तदंगुली मूलस्थानात् परम् ।

मेपस्याधिपतिः शक्रः सिंहस्याधिपतिर्यमः ।
वरुणोमकराधिश स्तुलाया धनदः प्रभुः ॥ १ ॥

शेषेष्वङ्गुलीनाथा एव शुक्लपक्षे कर्ककन्ययोः स्वामी शशी कृष्णे शुक्रोद्वयोरपि जलचरत्वात् कुम्भमीनयोर्मङ्गलः वृषमिथुनयोः शनिवृश्चिक धनुषोगुरुरिति नवांशचक्रं सामुद्रिक भूषणे सूर्यस्य पुनराङ्गूष्ठमध्यं नियतं स्थानं तत एव सर्वतोभद्रेऽङ्गूष्ठाग्रे पञ्चविंशत्यं कस्तत् प्रमाणघटी दिनमानसूचकः राशिविमर्शे आद्या द्वितीय भागोरवेः स्थानंनियतं स्थैर्यात् अन्यथा प्रागुक्तमेव, नन्वेवं रविचन्द्र जीवबुधाः स्वस्वराशिस्थाना एवात्र ज्योतिर्वत् भौमादीनामपि तथैव किं नेष्यत इति चेन्न **दैवतं त्वङ्गुलीमुखे इति विद्वद्वाक्यात्** भौमस्य मित्रंगुरुः शुक्रस्यमित्रं बुधः शनेरविच राहोः शुक्र इति मित्रस्थानस्यापिस्वस्थानाच्च । एवं रविबुधराहूणां प्रत्येकङ्गूलीस्थानं कथं नेत्यपि नचिन्त्यं रवेर्दक्षिण हस्ते स्वरूपेणैव व्यवस्थानात् चन्द्रादीनां तत्तेजसैव तेजोमयत्वेन शशिवत् साधयेत् सूर्यं सूर्यवत् सकला ग्रहा इत्युक्तेस्तस्यैवाधिपत्यात् बुधस्य नपुंसकत्वेन ः स्थानालाभाल्लाभेऽपि ज्योतिःशास्त्रे राहूणारुद्धत्ववदत्रापि . शनि शुक्राभ्यांरोधात् राहोः पृष्ठस्थानात् नभिन्नमङ्गूलिस्थानं शनेस्तु क्लीवत्वेऽपि चिरस्थिकत्वात् ताराङ्गुलिस्थान लाभोह्यावश्यकः शुक्रस्यापि चतुःपञ्चाशदुत्तराद्विशत द्विवसान प्राच्यां षट् पन्चाशदुत्तर द्विशत द्विवसान् प्रती-

१ चन्द्रचक्रे अश्विन्यादीनां नक्षत्राणा कनिष्ठादित एवव्यवस्था ।

च्यां चौदयिकत्वेन चस्थानलाभौचित्यात् । यद्येवं तर्हि जीवादिवत्कथं राशिचक्रे तन्यास इति चेच्चलस्वभावात्कन्यायां शुक्रप्रसङ्गात्नीचत्वव्यवहाराच्च सूर्यापेक्ष यैव तन्न्यासो बुधवत् शुक्रस्य प्राङ् मुखत्वात् तत एव शीवायाः कौमार्थं सत्यपिस्वामिनि तस्य नास्याः प्रसङ्गात् । एवं भौमस्य शेषादक्षिणतो मुखा इत्युक्तेर्दक्षिणभागेङ्गूष्ठाग्रे व्योमत दर्शित्वं बुधस्य कन्दस्थस्य तिर्यग् दृष्टित्वात् उदङ् मुखत्वं गुरुस्तूदग् मुख उत्तरापतित्वात् इत्यादिज्योतिःशास्त्रानुसारेण दृढीकृतो ग्रहन्यासः स्थानस्य शुभाशुभज्ञानाया ननु यद्येते नखरूपाग्रहास्तर्हि वामे नखाः कथं भाव्या इति चेन्न; राशिकुण्डालिका भावनात्तत एव ज्योतिश्चक्रे चन्द्रादि सर्व ज्योतिर्देवद्वयामित्युक्तं प्राक् पादनखानां प्रतिफलेन समाधिर्येद्वा हस्तयोर्देवाः पादयोर्देव्यस्तेषामर्हत्पर्षत्सु द्वयोर्योग इवात्रापि तदभावादत एव तासां निचैरेव स्थानं जिन प्रतिमायामधः शक्तिमूर्ति व्यवस्थानवत् ॥ २ ॥

अथ पृच्छायामङ्गूष्ठादिस्पर्शेणकार्यवेलाकथनं प्रासङ्गिकमप्याह—

**दिनोदयः स्मृतोऽङ्गुष्ठे मध्याह्ने मध्यमाङ्गुलौ ।**
**सन्ध्यातारा ततो रात्रिर्हस्तपृष्ठे व्यवस्थिता ॥ ३ ॥**

दिनोदय इति । सूर्यस्य तलपार्श्वे मेरौमध्यभाग चक्रादिस्थानात् दिनमुखं नचैवं नखचन्द्राद्रत्रिमुखामित्यपि दाक्षिणे तदप्राधान्यात् तथात्वेऽपि नखानां पृष्ठभागस्थत्वात् अत एव पृष्ठे रेखाभिमृत्युर्जन्मद्वयं निशीत्यग्रे वक्ष्यते मध्यामध्याह्न एव अति गुरुत्वेन तदुपरि छायाभावात् तारुण्यस्थाने न तापाधिक्यात् यद्यपि प्रभातमिन्दुजगुरु इत्युक्ते गुरुस्थानात् प्रभातत्त्वं युज्यते तथापि त्रयोदशीतिथि स्थानत्वेन तावद् घटिकामानसम्भवान्न तत् प्रतिपदातिथि गणनं दिनमानापेक्षं दिनमानमपीदं जघन्य दिनमान विमर्शन तत एव त्रयोदशांकोमध्याह्नसूचको मध्यायां गुरोः प्रभातत्वं सर्वाङ्गुली स्वामित्वाद्घटिकालये तृतीयास्थानान्मूलांशेन चरितार्थं लक्ष्म्याः प्रभाताधिकारात् सन्ध्या कनिष्ठा ताराख्या अन्वर्थात् मन्दभुजङ्गमयो र्ज्योतिषेऽपिसन्ध्यारूपभणनाच्च अत्र द्वितीय प्रहररूपः पूर्वाह्णस्तृतीय प्रहररूपोऽपराह्णस्तर्जन्या

गौर्यां चार्थोद्गम्यः अपराह्णौ भार्गवेद्रू इति वचनात् शुक्राधिष्ठानात् तत एव मध्याह्नो रविभूमिजाविति द्वितीय प्रहरस्यां तस्य मध्याह्नरूपत्वात् आदीवा-दित्यमङ्गलाविति चाष्टधाङ्गुल्यां तर्जन्यां तयोरवस्थितिश्च रात्रिर्हस्तपृष्ठे नख-रूपाणां ग्रहाणां स्पष्टप्रकाशात् अधोलोके चावहस्ते इति वक्ष्यमाण मतान्तरे अस्य प्रयोजनमिति ॥ ३ ॥

एतदेव स्पष्टयति ॥

दिनं हस्ततलं बोध्यमवहस्तस्तमस्विनी ।
दिवसो दाक्षिणो हस्तो रात्रिर्वामो मतान्तरे ॥ ४ ॥

दिनमिति । दाहिण हत्थंगुठ्या मझेयजवेण दिवस जम्मं सेइति प्रकरण-कार वाक्याद्दिनप्रतीतेः । मतान्तरे अभिप्राय विशेषे घटीदर्शनविमर्शेऽङ्गुष्ठ-यवाद्यपेक्षयावातन्मतस्यापि प्रामाण्यात् ॥ ४ ॥

वक्ष्यमाण भावचक्रादौ राहुस्थिति हेतुमाह—

छाया सुतःशनिर्लोके छायारुपो विधुन्तुदः
तद्राशिचारे ताराया द्वितीय त्र्यंशके ध्रुवः ॥ ५ ॥

छायेति । छायासुतोऽसितः शौरिरिति कोषवचनात् तेने सुत २५ मदन ७ नवां ९ त्ये १२ पूर्णद्रष्टिश्च राहोर्दशम १० युग्मत्सराशौ दृष्टिपादत्रयं स्यात् अरि ६ सहज ३ धनर्क्षे २ बन्धुगे ४ चार्द्धदृष्टिर्निजभुवन १ मुपात्यं तत्र जन्मान्धतैव ॥ १ ॥ इति ज्योतिः शास्त्रोक्तं पञ्चमे कन्यास्था-नादिनास्थितम् ॥ ५ ॥

तस्मात्सप्तमगः केतुरितिमध्याङ्गुलिर्भवेत् ।
द्वितीय भागिनियतः प्रोक्तो लाक्षणिकैर्बुधैः ॥ ६ ॥

तस्मादिति । द्वितीयभागोऽत्र त्र्यंशरूपः ॥ ६ ॥

वारस्योदयमाह—

हस्ते क्षणदिनेवारः प्रातस्तस्योदयक्रमात् ।
समयेः हस्त वीक्षायाः यःप्राप्तोऽस्याङ्गुलीस्मृतः ॥ ७ ॥

हस्तेक्षणेति ॥ ७ ॥

वारमानमाह—

एको यामश्चतुः स्त्रिंशत् पलान्यथाक्षराणिच ।
भूत्याष्टि माने सज्ञेयो वारभोगो विचक्षणैः ॥ ८ ॥

एकोयाम इति । वारभोगोक्तिः कथमौदयिक एव वारः सर्वस्मिन् वासरे विमृश्य इति नाशङ्कयं दिनस्वर चक्रादौ—

तिथ्यादौ घटिकाः पञ्च पलानि सप्तविंशतिः ।
अन्तरोदय-उक्तोऽसौ दिनस्वरस्य सूरिभिः ।

इत्यादिना नरपतिग्रन्थेप्यन्तरोदयदर्शनात् ॥ ८ ॥

वारचक्रफलमाह—

तद्वारस्य तदङ्गुल्याः स्वरुपेण शुभाशुभे ।
स्वराशिनाथमैत्र्यादि ज्योतिः शास्त्रविमर्शनात् ॥ ९ ॥

तद्वारस्येति । योवारस्तद्वसरेप्राप्तः सचेत् निजराशीशस्तदा तदङ्गुल्यां शुभलक्षणे पूर्णफलं स्वराशीशवैरिणोङ्गुल्यां पादमात्रं साम्येत्वर्द्धं शुभग्रह दृष्टाङ्गुलिस्थाने पादोन मित्येवमशुभलक्षणेऽपि वाच्यम् ।

ज्योतिरिति । मैत्रीरवेः शुक्रशनीशत्रू इत्यादिकाजातकोक्ता । आदि शब्दाद्दृष्टिरुच्चनीचत्वेनच ज्योतिः शास्त्रादेव वेधे उच्चस्थे च बलं पूर्णनी- चांशस्थे दलं बलमिति नरपतिग्रन्थोक्तत्वादत्रापि तदुच्यते रवेरङ्गूष्ठ मध्य- भागस्थानाद्गणनानुक्रमेण तृतीयं स्थानं कनिष्ठा मूलपर्व तत्रमेशराशित्वात्स एव उच्चाश्रयाः । एवं चन्द्रास्याङ्गुष्ठमूर्द्धभागात्तृतीयं ताराद्वितीयं पर्वतत्र वृषत्वादुच्चत्वं तयोः सदाऋजुगातित्वात् मङ्गलस्यवक्रत्वात् पृष्ठगत्यातृतीयं पर्वमकरस्थलं तत्र उच्चत्वं बुधस्य स्थानाभावात् स्वगृह एवोच्चत्वं गुरोर्मध्या- ग्रभागात् नीचावताररूप मकरस्थानं तत्र नीचत्वं शुक्रस्य सूर्यापेक्षाचारात् प्रागमुखत्वेन तर्जन्याद्वितीयभागस्थ सूर्यापेक्षया उच्चं मीनस्थानं तत्रोउच्चत्वं शनेः स्वस्थानात्पृष्ट तृतीय पर्वणिशेषराशिस्तत्र नीचत्वं राहोः स्वस्थानादुच्चं मिथुनमिति उच्चात्सप्तमं निचं निचात्सप्तमुच्च- मिति विमृश्यफलं वाच्यम् ॥ ९ ॥

चक्रान्तरमाह—

यद्वाहस्ते क्षणे वारः सविष्णोरूर्ध्वं लोकगः ।
शेषास्तले मर्त्यलोके तर्जन्याद्यास्तुदिग्गताः ॥ १० ॥
अधो हस्ते च पाताले फलमेषामिहोदितम् ।
यत्र स्वराशेर्नाथः स्यात् सम्पूर्णंतद्भवं फलम् ॥ ११ ॥

यद्वेति । अध इति । यत्र स्वराशीशस्य स्थानं तत्र शुभलक्षणे पूर्णफलं तद्वैरिस्थाने पादमात्रं साम्येत्वर्द्धं समाङ्गुल्यादौप्राय स्थानदोषेऽपि शुभलक्षणे स्वराशीश मैत्र्यां पादोनं फलमिति भावः ॥ ११ ॥

इति श्रीहस्तसञ्जीवन व्याख्यायां सामुद्रिकलहर्याख्यायां वारदर्शनम् ॥

---

## अथ नक्षत्रचक्रं प्राह—

त्रीणि त्रीणि तले दिक्षु मध्ये नक्षत्रमश्विनी ।
तारादिपञ्चशाखासु प्रत्येकं स्यात् त्रयं त्रयम् ॥ १२॥

द्वादशश्लोकस्य पञ्चदशश्लोकपर्य्यन्तमिदं—स्थापना—

| | | | | |
|---|---|---|---|---|
| वि | मू | ऽ | श | रे |
| स्वा | जे | उ | ध | उ |
| चि | ऽ | पू | श्र | पू |
| | पू | उ | ह | |
| म | अ | | | भ |
| अ | | | | कृ |
| पू | पू | आ | मृ | रो |

त्रीणीति । अत्र अश्विनीति । अग्रेबहुप्रयोगार्थं दक्षिणहस्तस्य दाक्षिणायनत्वात् दक्षिणद्वारिकत्वादश्विन्यास्तदादिर्नक्षत्रन्यासोऽत एव पुष्योऽपरद्वारिक स्तत्रैवअभिजितादित्वात् श्रवणादिश्वपूर्वस्यां तेन नमस्कारस्तोत्रेऽपि—'तहयधणि

ठाइपंचयं सिद्धाचित्ता साईसाहुं इति पूर्वानुसाराद्व्यवस्थितो न्यासः सामान्येन अत्र मूलस्य गौर्य्यां न्यासात् ' बहिर्मूलोभिंतरे अभि ईति ' सिद्धान्तेऽपि मूलं दक्षिणस्यां चरतीति सावित्री दक्षिणाभिजिन्न्यासादुत्तरामध्यायुक्तैव ॥ १२ ॥

तद्विशेषमप्याह—

वीक्ष्यते यत्र नक्षत्रे हस्तस्तद्गर्भकस्थितम् ।
प्राग् दक्षिणकरं तेषु तारा त्रयत्रयं भवेत् ॥ १३ ॥
काञ्चन्यादेः पञ्चदशभानि यत्रात्मनामभम् ।
तत् फलं प्रष्टुरादेश्यं स्थानरेखादि योगतः ॥ १४ ॥

वीक्ष्यत इति । यन्नक्षत्रे हस्तस्य वीक्षणं तद् हस्ततलमध्ये देयं तत आरभ्यः प्राग् दक्षिणादिक्रमः न चैवं हस्तनक्षत्र एव तन्नियमात् यस्य तदेवात्मनं तस्य दिग् ज्ञानं कृत इति शङ्क्यं, पञ्चशाखत्वेन प्राक् पञ्चनक्षत्राणां व्याख्यानात् । क्रमोऽयं सृष्टिरूपो दक्षिणकरे तथैवन्यासात् सर्वत्रनक्षत्रत्रयं त्रिपर्वण्या एव नियतत्त्वात् स्वरोदयेऽपि प्रतिपदादित्र्यह योयो वात्सायनेऽपि पक्षानि दीर्घे हेमन्ते नित्यमन्यर्तुषु त्र्यहादेवं व्यवस्थानं अङ्गुल्यः पञ्चहस्ततलेऽपि चतस्रोदिशः पञ्चमं मध्यस्थानमिति पञ्चधाव्यवस्थया सर्वं पञ्चविधं प्रमेयमत्र ज्ञेयतयावतरतीति सूचयति । तेनाकरादिस्वराः पञ्चब्रह्माद्याः पञ्चदेवतः । निवृत्याद्याः कलाः पञ्चइच्छाद्यं शक्तिपञ्चकम् ॥ १ ॥

रुद्राद्याश्चक्र भेदाश्च धराद्यंभूतपञ्चकम् ।
गन्धादिविषयास्ते च कामबाणा इतीरिताः ॥ २ ॥

इत्यादि नरपतिग्रन्थोदितं सकलं ज्ञेयम् । अग्रे अ इ उ ए ओ इति स्वराणां यन्त्रस्य च वक्ष्यमाणत्वात् । स्थानेति धातुमूलादिरूपमेषादिराशिरूपपर्क्ष संबन्धात् रेखासम्बन्धाच्च आदिशब्दात् ग्रहादियोगोऽपि ग्राह्यः ॥ १४ ॥

सामान्यात करदर्शयितुर्वर्ज्यनक्षत्राण्याह—

करजांत्रागताधिष्ण्यं तले याम्यातले स्थितम् ।
तत्र स्थितं शुभं न स्यात् शेपस्थाने शुभं स्मृतम् ॥ १५ ॥

करोति । अङ्गुल्यान्तर्गतं नक्षत्रशुभकर्माणि नादरणीयं अङ्गुल्यग्रेजापवत् फलदायित्वाभावात् । तले नक्षत्रं उच्चाटनकृतपाश्चिमानक्षत्रं क्लेशजालेन कार्यकरं याम्यभं रोगकारकमिति न शुभम् ॥ १५ ॥

**इति श्रीहस्तसञ्जीवनवनव्याख्यायां सामुद्रिकलहर्य्याख्यायां नक्षत्रदर्शनम्**

---

अथ प्रथमं वर्षेषु शुभाशुभज्ञानाय ग्रहस्पष्टीकरणेन भावचक्ररूपं मेषादि राशिचक्रदर्शनम् ॥

**जागर्ति येन नाम्नायस्तद्राशिर्यत्र पर्वणि ।**
**तारादिर्मेष राश्यादि स्तत आरभ्य गण्यते ॥ १६ ॥**
**ज्ञेया स्तन्वादयो भावास्ततो द्वादश लग्नजाः ।**
**तेषूर्ध्वरेखा सशुभो ग्रहः क्रूरस्तथान्यथा ॥ १७ ॥**

जागर्तीति । ज्ञेया इति १६–१७ श्लोकद्वयसंयुक्तार्थम् । यस्य जन्मपत्रिका नस्यात् तस्य तन्वादिभावज्ञानं सामान्येन इत्थं परिज्ञेयम् । जन्मर्क्षमृक्षमित्याहुर्मृर्क्षं चात्रदण्डवत् यस्य जन्म नजानीयात् तस्य नाम्ना विधियत इति कथनात् राशिमेव पुरस्कृत्य भावाविचार्याः । लग्नादिवराशे रपि तदवबोधात् जन्मज्ञानेनामराशेरवौचित्यं अन्यथापि गृहे च नगरे ग्रामे वाणिज्ये स्वामिसेवने नामराशिप्रधानत्वं जन्मराशिं न चिन्तयेत्, इत्यादिना नरपतिग्रन्थादौ तत् प्राधान्यदर्शनात् ताराया आदिर्मूलपर्व तस्मात्, अग्नितच्चस्थानतया अल्पभोगतया लग्नेषु तथा गूह्यभागप्रत्यासत्त्या सन्ध्यारूपेण रात्रौ रागाधिक्याच्चारुणवर्णमेषप्रभृतिगणनं प्रागुक्तमेव तेन यस्य वृषराशिस्तस्य ताराद्वितीय भागात् प्रारभ्यगणनं मिथुनराशेस्तृतीयांशादिति तेषु भावेषु यत्र ऊर्ध्वरेखाशुभोग्रहः । आयतादीर्घरेखासत्वशुभस्तद्भावविनाशात् ऊर्ध्वरेखायाः शुभलक्षणता आयताया निषेधाङ्कत्वेनाशुभत्वं च लोकप्रतीतमेव पूर्णदृष्टिरपिग्रह तुल्यैव यदुक्तं विरुद्धपूर्णदृशापश्यतस्मादेवफलं ग्रहः विदधात्यन्यथाज्ञेयं फलं दृष्टयमनुमानतः । इति नरपतिग्रन्थे मेषराशि-

---

१ अङ्गुष्ठतलयो रेकरूपतयाकाशस्थानात् ।

कस्य मध्यामूलांशे स्त्रीसंस्थासुखादिविचार्यं एवं सर्वे भावाः न चैवं रेखा वैयर्थ्यं तासामेव फलस्पष्टीकरणात् ॥ १६ ॥

भावमात्रं स्पष्टीकृत्य ग्रहस्पष्टीकरणार्थमादौ चन्द्रचक्रमाह—राशिचक्रे तस्यैव मुख्यत्वात् ।

अश्विन्यादीनिऋक्षाणि प्रत्येकं सप्त योजयेत् ।
कनीनिकातः प्रारभ्य यत्र हस्ते क्षणस्यभम् ॥ १८ ॥

अश्विन्यादीति । इष्ट नाड्योहताधिक्यैः षष्ठिभागाप्त शेषके अश्विन्यादी न्दुभुक्ते न युक्ते तत्कालचन्द्रमाः ॥ १ ॥

इति नरपतौ प्रस्तारचक्रे तत् कालचन्द्रे अश्विन्यादि नक्षत्रगणनात् अत्रापि तदादिक्रमः । तत एव तारायां नियोग मुद्रापरिधानं चन्द्रचिन्हं प्रत्येकं संयोजयेत् । अङ्गुल्या मूलपर्वणि नक्षत्रद्वयं मध्यभागे नक्षत्रत्रयं मूर्द्धांशे नक्षत्रद्वयमेव सप्तनक्षत्राणि स्थूलापेक्षया भावयेत् सूक्ष्मविचारे तु प्रतिपर्वचत्वारिंशदुत्तरशतघट्यो योज्या । नक्षत्राणां न्यूनत्वेऽधिकत्वे वा तदपेक्षयैव । एवं च चन्द्रन्यासः प्रायस्तिथि पत्रापेक्षयैव जायते । भङ्ग्यन्तरेण चन्द्रचक्रकथनं सामुद्रिकस्य निमित्तान्तरत्वात् तत एवकृत्तिकायाविंशघटिका यावन्मेषे चन्द्रोदयो ज्योतिः शास्त्रे तु पञ्चदशघटिकाया वदिति विशेषः । इयदन्तरं तु नक्षत्रदृष्ट्या मूखेनापूर्यम् ॥ १८ ॥

एतदेवाह—

प्राप्तं प्रष्टुःसराशिस्यान्मेषादिर्त्र्यंशकः क्रमात् ।
चन्द्रस्तत्रैव विन्यस्य चतसष्वङ्गुलिष्वपि ॥ १९ ॥

प्राप्तमिति । न चैवं जन्मराशिनाम राशिहस्तदर्शनादिनराशिश्चेति राशित्रयसाङ्कर्यमिति शङ्क्यं, नामराशेरेवाधिकारात् स एव राशिः । अत्र तु राशिशब्देन चन्द्रस्थानमेवोच्यते । एवं च दिनचन्द्र एव हस्तदर्शने विचार्य इत्यायातं शुभाशुभविचारे दिनचन्द्रस्यैव मुख्यतया फलदायित्वात् । अन्यथा शोभने हस्तनक्षत्रे इत्यादिना नक्षत्रप्राधान्योक्तिर्व्यर्थास्यादिति ।

यथा कश्चिद्विवाहादिमाङ्गल्यकार्ये जन्मराशिप्राधान्यं तस्मिन् ज्ञाते ऽपि देशाद्यर्थे नामराशिर्विचार्यते । तथा हस्तेक्षणे चन्द्रःकस्मिन् भवने इति ज्ञेये दिननक्षत्रस्थानमेव राशिव्यपदेशार्हं न चैवं चन्द्रत्रयसाङ्कर्यं नरपत्यादौ राशिचन्द्र १ उदय चन्द्र २ मासचन्द्र ३ पक्षचन्द्र ४ दिनचन्द्र ५ घटिकाचन्द्र ६ तत्कालचन्द्रा ७ दिभेदैः सप्तधा चन्द्रस्थान विमर्शविदस्याप्पदोषात् । अत्र अश्विन्यादि सप्तनक्षत्र व्यवस्था जैनसिद्धान्तमताद् यदुक्तं— समवायाङ्गवृत्तौ— अश्विन्यादीनि दक्षिण द्वारिकाणि पुष्पानीन्यपर द्वारीकाणिस्वात्यादीन्युत्तरद्वारिकाणि अभिजिदादीनि सप्तनक्षत्राणि पूर्वद्वारिकाणीति नरपतिग्रन्थेऽपि अश्विन्यादीन्दुभुक्तानि भानिषष्टिहतानिच स्वभुक्तनाडि संयुक्तं द्विघ्नं २ नन्दा हतं त्रिधा ३।। दिनेन्दुभुक्तभागादिर्जायते चेष्टकालिक उदयादिष्ट नाडयस्तुषड्गुणास्तत्र योजयेत् । त्रिंशद्भागाप्तराश्यादिश्चन्द्रस्तत्कालसम्भवत्रः । शशाङ्कवत्सर्वखेटान् कुर्यात्तत्कालसंभवान् ॥ ३ ॥ इत्यश्विन्यादेर्लाभः ॥ १९ ॥

शेषग्रहन्यासदर्शनमाह—

**जागरूको जनो येन राशिना जायते सदा ।**
**ताराद्यंशांच्चमेषादेर्यत्र तन्मूर्तिमालिखेत् ॥ २० ॥**

जागरूक इति । जागर्तीत्यादिप्रागुक्तस्थानुवादमूलमेतन्मेषादिभावचक्रेषु वक्ष्यमाणेषु जन्मराशिग्रहणभ्रमव्यवच्छेदनाय । तारेति । राशिचक्रानुवाद एषः मूर्त लग्नं मुख्य न्तदेव भावयेत् । नतु सत्यपि जन्मपत्रलग्नज्ञाने जन्मलग्नमिति भावः ॥ २० ॥

न चेत् खेचराः स्थापिते किञ्च चक्रे इत्युक्ते ग्रहव्यासमाह—

**तत्र ग्रहास्तु प्रागुक्त स्थानस्थाः स्वमनीषया**
**स्थाप्या संहार मार्गेण विचार्य तच्छभाशुभम् ॥ २१ ॥**

तत्रेति । संहारमार्गेणेति रवीन्दुभौमगुरुवोज्ञशुक्रशनिराहव इत्येवमङ्गुल्यग्रे तथैव न्यासात् ॥ २१ ॥

रा २ | १ चं. | १२
३ श | | ११
४ | मे. | १०
५ | ७ | ९
६ | | ८

श. ३ | २ | १ चं.
४ | | १२ शु. मं.
५ | वृ. | ११ सू.
६ | के. | १० बु.
७ | ८ | ९ गु.

४ | ३ श. | २
५ | | १ शु. चं.
६ | मि. | १२ बु. मं.
७ | ९ गु. | ११ सू.
८ के. | | १०

५ | ४ | ३ श.
६ | | २ रा.
७ | क. | १ चं.
८ के. | १० | मं. १२
९ | | ११ सू. बु. शु.

६ | ५ | ४
७ | | ३ श.
८ के. | सिं. | २ रा.
९ गु. | ११ सू. | १ चं.
१० शु. बु. | | मं. १२

७ | ६ | ५
८ के. | | ४
९ गु. | कं. | ३ श.
१० | शु बु. १२ | २ रा.
११ सू. | | १ चं.

| | | |
|---|---|---|
| के. ८ / गु. ९ | ७ | ६ / ५ |
| १० | तु. | ४ |
| ११ शु. बु.मं. / १२ मं. | १ चं. | २ रा. / ३ श. |

| | | |
|---|---|---|
| ९ गु. / १०बु. | ८ के. | ७ / ६ |
| ११ सू. | वृ. | ५ |
| मं.शु. १२ / १ चं. | २ रा. | ३ श. / ४ |

| | | |
|---|---|---|
| १० / सू. ११ | ९ बृ. | ८ के. / ७ |
| १२ शु. मं. | ध. | ६ |
| १ चं. / २ रा. | ३ श. | ४ / ५ |

| | | |
|---|---|---|
| ११ बु. शु.सू. / १२मं. | १० | ९ गु. / ८ के. |
| १ चं. | म. | ७ |
| रा.२ / ३ श. | ४ | ५ / ६ |

| | | |
|---|---|---|
| मं.१२ / १ बृ. | ११ सू. | १० / ९ |
| २ रा. | कुं. | ८ के. |
| ३ चं. / ४ | ५ | ६ / ७ |

| | | |
|---|---|---|
| १चं. / २ रा. | १२ मं.बु. | ११ सू. / शु.१० |
| ३ श. | मी. | ९ गु. |
| ४ / ५ | ६ | ७ / ८ |

अत्रेति भाष्यम्—

सर्वं प्राञ्जलमेव । यत इति उक्तमेतत् सामुद्रिक भूषणे तन्नास्ति, यत्र हस्तेऽस्मिन् विज्ञानं हि चराचरं हस्तज्ञानं बुधैः प्रोक्तं—तत् सामुद्रिक भूषण-मित्यादिके शतश्लोक प्रमाणे आद्याद्वितीय भागस्थं न त्वनामिका द्वितीय-भागे सिंहराशिं राशिक्रमाद्विमृश्येति । भावशुक्रस्य रविरिपोस्तत् स्थानात् । आद्याङ्गुली मित्रस्यमङ्गलस्य स्थानं पूर्वदिग् बद्धाच्च राशिरपि तत्र कुम्भ एव सूर्यस्य प्रवर्द्धमानतेजः कारणं सिंहा-दिमकरान्तं सूर्यस्य कुम्भादिकर्कान्तं चन्द्रस्यक्षेत्रमित्युक्त्या राशि-षट्के सिंहवन्मुख्य सिंहस्थेगुरौ तीर्थ मेलकवत्तत्रापि तन्मेलकात् प्रशस्तं तत्रैव सूर्यं न्यस्य लग्नभावविमर्शः कार्य इति । तर्जनी मेरुमादायेत्वादौ मेरुसम्ब-न्धात् ताम्रमुद्राश्रयाच्च तथापित्तं प्रभाकरक्ष्माजावित्यादिना प्रायः सूर्यकुजयो-स्तुल्यप्रकृतिकत्वादित्युक्तं. प्राक् आद्याद्वितीयां शस्तु बाहुल्यात् तेनामा-वश्यां तृतीयभागेऽपि दर्शे सूर्येन्दुसङ्गम इति सूत्रणात्, न चैवं कदाचिन्मूल-भागेऽपि तच्चिन्ता अङ्गुष्ठे वस्तुतो भागद्वयात् रवेः स्थैर्यात् व्योमदर्शित्वात्त-दनुरोधेन तर्जन्या अपि मूलांश निषेध एव । बुधस्त्व इति मिथुनस्य ज्योति-षाभिप्रायेण राहुणा सामुद्रिकपेक्षया शनिनारुद्धत्वात् कन्याया अपि ज्योतिर्मते राहुस्थानात् सामुद्रिके क्लीबस्य न कन्यानुराग इति तस्य स्थाना-भावाद्रवेरनुसरणं स्वल्पप्रकाशादिति । तत एव नमस्कारस्तवे बुद्धो सिद्धाये-त्युक्तिः पूर्वं तु रविमङ्गलासिद्धगुरु बुहाखुरीति । शुक्रोऽपीति प्रागेवतद्धेतो-रुक्तेः सूर्यापेक्षचार एवायम् । अथैषां परावर्तविधि पताका यन्त्रानुसारादाह—

रविः कुजो गुरुर्मन्दो राहुश्चैते ध्रुवाग्रहाः ।
शशिशशिसुतः शुक्रश्चलादेया विस्मृश्यते ॥ २२ ॥

रविरिति स्पष्टं ॥ २२ ॥

वर्षद्वादशके चारी ध्रुवाणामपि जायते ।
मूलाग्र राशौ ते देया राहुर्मूलाश्च पृष्ठतः ॥ २३ ॥

वर्षेति ॥ २३ ॥

तत्रापि विशेषमाह.

नष्टजातकानुसारः शुक्रबुधयोर्व्यवस्थायां अत्र लग्नपतिर्यदि लग्ने इत्यादि श्रीभद्रबाहु परमगुरुप्रणितसंहिताशास्त्रांत भावविमर्शस्तदभावेऽन्यतीर्थाय सभायां यवनजातकात्तथा वर्ष शुभाशुभ ज्ञानायास्य चक्रस्योपयोगात् पद्मकोषात् ताजिकग्रन्थात् कार्यः ।

भावा इति । ग्रहाणां स्वस्वस्थान स्पष्टस्थित्याभात्रकुण्डलिकारूपत्वाच्चक्राणामिति । एतद्भाव फलज्ञानेनैव हस्ततलास्थित गोत्रधनादिरेखाणां जन्मपत्रस्थानीयानां फलव्यवस्थिति । अत्र सूलोक्तराशिचक्राणि वृत्तावपि लेख्यानि । एकत्वादि सूर्यस्य कुम्भराशिगतत्वेन कूजस्य मीनास्थितत्वेनेत्यादि सर्वत्र ऐक्यं भावेषु पुनर्भेदः प्रकट एव । यद्यपि सर्वत्र धनुराशौ गुरोः सद्भावात् मेषराशिकस्य भाग्यस्थानेन त्रिकोणगतादित्वेन च बलवत्वमेव तथापि दक्षिणहस्ते मध्यातृतीयभागे चक्रादिरेखया पूर्णफलत्वं शुक्त्यादिरेखया न्यूनफलत्वं च सामुद्रिकाधिकारात् वाच्यम् । एवं सर्व ग्रहस्थानादिषु बलाबलं विचार्यम् ।

अत एव मतान्तरं द्वितीयं पुरः प्राह—

कस्मिन् वर्षे शुभं कस्मिन् न शुभं वा भवेन्मम् ।
इति ज्ञेये पञ्चदशभागाः पञ्चाङ्गुलीभवः ॥ २४ ॥

कस्मिन्निति । पञ्चदशतीथीनां स्थानानि पञ्चदशभागाः तत्तद्राशि मनुष्याणां तत्तत् स्थानादेव वर्षगणना न चैवं कर्कराशिवतां गौर्या आद्यांशाद्वर्षगणना यद्वा अङ्गूष्ठाग्रभागादिति संशयापातिः कृष्णपक्षे हस्तेक्षणे गौर्या आद्यांशात् शुक्लपक्षेऽङ्गूष्ठाग्रादिति विवेचनात् । तत्राङ्गूष्ठाग्रे प्रथमं वर्षं द्वितीयं कनिष्ठाद्यपर्वणि तृतीयं तत् द्वितीयांशे चतुर्थं तत्तृतीयांश इति पुंस्त्वेन पञ्चदशवर्षाणां दक्षिणकर एव नियमनात् तथैवानन्तरं भणितिरपि ॥ २४ ॥

वर्षाणां शुभाशुभव्यञ्जक लक्षणोक्तिमाह—

वीक्ष्या तेषु च या रेखा ऊर्ध्वचक्रं यवोऽथवा ।
तस्मिन् वर्षे शुभं लक्ष्मीपुत्राद्याप्तिः यशः सुखम् ॥ २५ ॥
तेषु यत्रागता रेखाछिन्नभिन्ना चभेदयुक्
शुक्तिश्चतुष्किका विन्दु स्तद्वर्षं दुःखदायकम ॥२६॥

वीक्ष्या इति । २५ तेष्विति । निगदसिद्धम् ॥ २५ । २६ ॥

वर्षाणामादिमाह—

व्यवस्थाप्यादिमं वर्षकनिनीकादिपर्वसु ।
विचार्यन्ते पञ्चदशवर्षाणि दक्षिणेकरेः ॥ २७ ॥

व्यवस्थाप्येति । कनिष्टाद्यङ्गुलीनां सर्वासां त्रिष्वपि भागेषु तत्तद्राश्य पेक्षया तत्तत्स्थानेषु आदिमं वर्षं व्यवस्थाप्य कनिष्टामूले जन्मस्थानात् तस्या एव क्रमात् पञ्चदशवर्षाणि दक्षिणेहस्ते विचार्याणीत्यर्थ ॥ २७ ॥

विशेषमात्राह—

ततो वामे पञ्चदश पुनर्दक्षिणवामयोः ।
स्त्रिया वामेपसव्ये च विमृश्यन्तेऽत्र तत् क्रमात् ॥ २८ ॥

तत इति । वामहस्ताङ्गुली पञ्चदशभागेषु षोडशादीनि त्रिंशत्पर्यन्तानि वर्षाणि विमृश्यानि स्वरोदये नाडीपरावर्तवदत्रापि तत्त्वान्नार्या विपर्ययाद्गणना । अत्र जागर्तीत्यादि श्लोकद्वयोक्तं भावचक्रं प्रागुक्तम् । कस्मिन्नित्यादि प्रस्तुतं वर्षचक्रं पुराण सामुद्रिकशास्त्रेषु विवृतं परं तत् सामान्यापेक्षमेव स्थानमात्रलाभात् जागरूके इत्यादिभावचक्रं सामुद्रिक भूषणे श्री समुद्रसुरिपादैः प्रपंचित तद्विशिष्टमेव स्थानग्रहयोर्लाभात् तत एव वर्षं द्वादशकेन ग्रहचार विशेषात् न वामे वर्षाणि विचार्याणि दक्षिण एव करे तत्रैयत्यव त्र चैवं वामाङ्गुली त्रिभागेरेखावैयर्थ्ये वामहस्तस्य राशिकुण्डलिकारूपतया मेषादिराशिवतां द्वादशभाव चक्रेषु तद्दिन चन्द्रस्थानमेव वामाङ्गुलि त्र्यंशेषु दत्वा तद्भावविमर्शनात् । यथा ज्योतिःशास्त्रे लग्नाद्भावास्तथा चन्द्रादपि जायन्ते ।

१ लग्नानिशाकरा द्वायत्नवमं भवनं भाग्यमिति । सारावलीवाक्यात् ।

तत एव सार्वत्रिकं जन्मलग्नकुण्डलिका राशिकुण्डलिका चेति द्वयं, तथा त्रापि दक्षिणहस्तो जन्मलग्नस्थानं तदङ्गुली तद्भावे चक्रं वामहस्तो राशिकूण्डलिका-स्थानं तदङ्गुलीषु चन्द्रादिक मेव भावचक्रं ज्ञेयम् । तन्न्यासविधि स्थापना यथा तत्रमेषराशिकनरस्य यल्लग्नभावचक्रं तदेव राशिभावचक्रं तद्दिने मेष एव चन्द्रात् स्थापना—तथा तत्र प्रथमं यन्त्रं मेष राशिकनरस्य मेष एव चन्द्रे साहिति हस्तवीक्षणे द्वितीयं यन्त्रं वृषराशिकस्य मेषे चन्द्रे तृतीयं मिथुन-राशिकस्य मेषचन्द्रे चतुर्थं कर्कराशिकस्य मेषेचन्द्रे सति हस्तनिरीक्षणे एवं सर्व राशिषु चन्द्रराशिभावचक्राणि ज्ञेयानि । परं वामहस्तरेखादिविचारणया पूर्णमपूर्णं वा फलं वाच्यम् । वृषराशिकनरस्य मेषचन्द्रदिने हस्तेक्षणे राशिभावचक्रे कनिष्ठा द्वितीयांशे वृषस्थानत्त्वात्तत्र चन्द्रराशिं मेषं दत्वा ग्रहन्यासस्त्वेवं दशमे रविः, एकादशो मङ्गलः, द्वितीय शनिः, राहुमूर्तौ बुद्धो द्वितीयांशत्वात् पृष्टे नवमः, अष्टमे गुरुः शुक्रो विषमाङ्गुली द्वितीयांश-त्वात् सूर्यादग्रे एकादश इति ननु एतद्राशिभावचक्रस्य किंफलं वर्षाणां सर्वे-षां शुभाशुभ ज्ञानस्य दाक्षिणकर एव निर्णयात् इति चेत् रात्रौ घट्यादि-विचारे तथोत्तरायणे मासविमर्शे तथास्पर्शपृच्छायां प्रभवादिवर्षज्ञाने च तदु-पयोगात् एवाग्रे यत्पक्षे दर्शयेद्धस्तं स मुख्योऽन्यस्तदन्यथेति वक्ष्यति । अत्र अश्विन्याश्चन्द्रचक्रे नक्षत्रचक्रे वा प्राधान्यात् मेषचन्द्रगहणमुदाहरणदिङ्मात्र-साधनार्थं न चेत् प्राङ्नक्षत्रनियमादेव हस्ते क्षणे मेषचन्द्रस्यासम्भव एव ॥ २८ ॥

| | | |
|---|---|---|
| श. ३ / रा. २ | १ चं. | मं. १२ / र.बु.शु. ११ |
| ४ | श्रीसिद्ध जीव | १० |
| ५ / ६ | ७ | ८ के. / ९ गु. |

| | | |
|---|---|---|
| ३ / २ श. | चं.रा. १ | १२ / मं.शु. ११ |
| ४ | श्रीसिद्ध जीव | १० र. |
| ५ / ६ | ७ के. | ८ बु. / ९ गु. |

१ दक्षिणहस्ते भावचक्रे ग्रहन्यासे भावभेदा नतुराशिभेदः । वामेपुनर्ग्रहाणां राशिभेदो न पुनर्भावभेदस्तेनग्रहाणां राशिकलान्येव वक्तव्यानि पुनर्भावफलानिवभावात्

| | | | |
|---|---|---|---|
| ३ / २ | चं.श.१ | रा.१२ / ११शु. | |
| ४ | श्रीसिद्ध जीव | १० बु.मं. | |
| ५ / ६ के. | ७ गु. | ९र. / ८ | |

| | | | |
|---|---|---|---|
| ३ / २ | चं.१ | १२ श. / ११रा. | |
| ४ | श्रीसिद्ध जीव | १० | |
| के. ५ / ६ गु. | ७ | ९ मं. / ८ र.शु.बु. | |

अथ जागरुकेत्यादिभावचक्राणि राशिवत्त्वेन सामान्यानीति प्रत्येकं नरस्य तद्विशुद्धये विशेषमाह—

यद्वाहस्ते क्षणे जन्मलग्नद्वादशभावतः ।
शुभाशुभानिवर्षाणि विज्ञेयानि पुनः पुनः ॥ २९ ॥

यद्वेति । कस्मिन्नित्यादिमतेऽपि कस्य चिद्रेखाद्यस्पष्टतायां स्पष्टत्वेऽपि पूर्णापूर्णफलज्ञानार्थं प्रतिपुरुषमेतच्चक्रस्यावश्यकत्वम् ॥ २९ ॥

अथ तत्करणमाह—

प्रत्येकं जन्मलग्नस्य निर्णयार्थं करेक्षणे ।
स्वराशिवर्णसंयुक्तं कृत्वार्क्यै १२ र्विभाजयेत् ॥ ३० ॥
यच्छेषं स्थानकात्तस्मात् निज राश्यादिकः क्रमः ।
स्थाप्य स्तत्रग्रहाद्देयाः प्रागुक्ता स्थानयुक्तितः ॥ ३१ ॥

प्रत्येकमिति । सामुद्रिकमते जन्मलग्नमेतच्चक्रेण निर्णेयं यस्य ज्योतिः शास्त्रानुसारिजन्मपत्रं न स्यात्तस्याप्यनेन शुभाशुभपरिज्ञानात् जन्मेति कथनात् प्राप्ताग्रहा यथा एतस्मिन् चक्रे यावज्जीव फलदानपुनः प्रागुक्तमेषादिचक्रेषु द्वादशकापेक्षया परावर्तनेति भावः । अत एवात्र चन्द्रोपि टिप्पनकापेक्षः । अत्र ज्योतिर्विकृतजन्मलग्नापेक्षया लग्नग्रहादि विसं-

वादेऽपि न फलविसंवादः सर्वनिमित्तानां शुभाशुभादिज्ञाने एकमार्गविषयात् । लग्नादिविसंवादस्तु निमित्तान्तरत्वात् सौरपक्षाद्ब्रह्मपक्षे एकस्मिन्नेव निमित्तेतिथ्याद्यन्तरवत् स्वराशिमिति । अत्र वयो राशिः स्वनक्षत्रं मीलयित्वात्रिधा पुनः द्वित्रिचतुर्भिर्गुणितं रससप्ताष्टभाजितम् ॥ १ ॥

आदिशून्ये भवेद्दुःखी मध्यशून्ये दरिद्रता ।
अन्त्यशून्ये भवेद्व्याधिः सर्वशून्येमृतिर्भवेत् ॥ २ ॥

इति सर्वाङ्कयोगेन सामान्तो वर्षज्ञाने राशिवयोनक्षत्राणां ग्रहणादत्रापि साहचर्यान्नक्षत्राक्षेपः कार्यः तेन वयसाराशिना च द्वयोः पुरुषयोः साम्येऽपि लग्नेविशेषः प्राप्यः एवं राश्यादि त्रयसाम्येऽपि दैवात् प्राप्ते नामाक्षरक्षेपोपि ततः सूर्यैः द्वादशविभागः । अत्र चैवमिष्टोपदेशः ।

जन्मजे[1] जन्मसंक्रान्ति ज्ञेयास्पर्शे निजात् करात् ।
तिथिर्वारश्चतेनैव नक्षत्रं चन्द्रचक्रतः ॥ १ ॥
पुरुषस्या सितेपक्षे पूर्वत्रं च सितेऽपरम् ।
स्त्रियाविपयाद् ग्राह्यं मध्यभागे पुनस्त्विदन् ॥ २ ॥
नक्षत्रं तिथिपत्रे यत् तद्रत्नैभाजियेत्तदा ।
योभागःस्पर्शवेलायां तत् सख्यं जन्मभं स्मृतम् ॥३॥
तिथिं वारं च नक्षत्रं निजराशिंविलग्नकम् ।
संयोज्यभाजयेत् सूर्यैयच्छेषं तद्विलग्नकम् ॥४॥

तिथ्याद्यस्तु हस्तेक्षणवेला प्राप्ता एव मन्तव्या न पुनरौदाय काइति । अत्र राशिकथनानान्नामाक्षरग्रहइति कश्चित्—अङ्गविद्यायां तिथिवारनक्षत्रं पृच्छकाक्षरमिति । तमिति प्रागभणनात् कश्चित् पुनराह—नामाक्षराणि

---

१ जन्म इति अस्यार्थः जन्मनिजातं जन्मजं लग्नं तस्मिन् ज्ञेयेयद्भागं हस्ते क्षणवेलाया स्तिथिस्तद्भागस्य राशिना निजात् कराज्जन्मसंक्रान्तिर्ज्ञेया सूर्यस्तद्राशाविति भावः। स्पर्शशब्देन तिथिस्पर्शस्तस्मिन् प्राप्ते इति शेषः । यद्वासर्वतोभद्रचक्रंलिखित्वा अङ्गुलिभागस्पर्शः कार्यः । । तेनैव भागेन तिथिवारश्च ज्ञेयः तद्भागस्थाननक्षत्रं जन्मनक्षत्रं ज्ञेयम् । चन्द्रचक्रानुसारतः । तत्रापि मूलभागे शिरोभागे च लक्षत्रद्वयसद्भावात् नरस्य कृष्णपक्षे पूर्वं नक्षत्रं शुक्ले उत्तरो स्त्रिया शुक्ले पूर्वं कृष्णे तूत्तरमिति ।

तत्तध्रुवाङ्करित्याक्षेप्याणि ध्रुवाङ्कास्त्वेवम् । अ १ आ २ इ ३ ई ४ उ ५ ऊ ६ ऋ ७ ॠ ८ ऌ ९ ॡ १० ए ११ ऐ १२ ओ १३ औ १४ अं अः इति नात्र योज्यम् । क १ का २ कि ३ की ४ कु ५ कू ६ के ७ कै ८ को ९ कौ १० कं ११ कः १२ इतिमात्रासु तद् ग्रहणात् अत्रस्वराणां चतुर्दशैव ध्रुवाङ्काः संगीतादौ सप्तस्वराणां सज्जैण लहइ विग्घमित्यादिना निमित्ततया वक्ष्यमाणानां तथा ऌकारस्य ऋवर्णान्तभावस्त स्यापि ' उरण्रपर , इति सूत्रात् त्रिष्वेवान्तर्भावः तदंशस्य रेकस्यापि उकारादेशात् तत अ इ उ ए ऐ ओ औ इति शास्त्रान्तरोक्तपञ्चाङ्गुलिहस्ततलपृष्ठन्यासयोग्यसप्तस्वराणां वामावामहस्तस्थानत्वेन द्वेधागणने चतुर्दशसंख्याकत्वनियमात्, अत एव चतुर्दशस्वरा इति कुमाराव्याकरणसूत्रं यत्तुनरपतिग्रन्थे शोडशोकार वर्ग इत्युक्तं तत् ' विसर्गानुस्वारयोः ' स्वरत्वप्रतीत्या-तयोः स्वरव्यञ्जनसन्धिस्थत्वेन स्वरत्वे व्यञ्जनत्वे च गणनेऽप्यदोषात्, अत एव अत्रापि प्राक्षोडशस्वरन्यासः ननु यदा दीर्घभेदाः अपि संगृह्यते तदा-ऌ्लुतानामप्यनुषङ्गान्न; चतुर्दशत्वानियम इति चेन्नऌ्लुतानां स्वल्पत्वेन संधानेऽयोग्यत्वेन तदनादरात् तत एव मातृकापाठे द्वापञ्चाशद्वर्णसंख्याया भेदे न गणनं ऌ्लुतस्य प्रसिद्धं त्रिमात्रत्वेनध्वानिरूपे तत् पातात् । 'कादिव्यञ्जनानां ' स्वसंख्यैव ध्रुवाङ्काःवर्णानुक्रमसंख्येति वक्ष्यमाणत्वात् क १ ख २ ग ३ घ ४ च ५ छ ६ ज ७ झ ८ ट ९ ठ १० ड ११ ढ १२ त १३ थ १४ द १५ ध १६ न १७ प १८ फ १९ ब २० भ २१ म २२ य २३ र २४ ल २५ व २६ श २७ ष २८ स २९ ह ३० इति एवं शतुर्दशस्वरास्त्रिंशव्यञ्जनानि सकलसंयोगग्राहि क्ष युक्तानि ततो नमस्कार स्तोत्ते ' वन्नपणयाला ' इति तथा नमस्कारकल्पे ॐ ह्रीं पूर्वैपञ्च-

१ मध्यभागेऽङ्गुल्यानक्षत्रत्रयं चन्द्रचक्रेऽस्ति तत्र स्पर्शेसति तिथिपत्रेवर्तमानटिप्पनके यन्नक्षत्रं भवति तात्रिभागी क्रियते ततः स्पर्शवेलायां यष्टिप्पनकवर्तमाननक्षत्रस्य भागस्तत् संख्याकं त्रिषु नक्षत्रेषु जन्मनक्षत्रं ज्ञेयम् । एवं मध्यभागेऽपि नक्षत्र त्रयमध्ये एकनक्षत्रनिर्णयः ॥

पदैः पञ्चचत्वारिंशदक्षराविधेति कथनाद्धस्ते पञ्चदशाङ्गुलीभागेषु वर्ण लयन्यासात्तावन्त एव वर्णा, अत्र ङ ञ णा न गणनीया नामाक्षरेषु तदसंभवात् आर्द्रा क घ ङ छा पुन इत्युक्तेः क्वापि तत् सम्भवेऽपि गजभेषु तदन्तर्भावः यदुक्तं कादिहान्तान् लिखेद्वर्णान् स्वराधो ङ ञ णोज्झितान् तिर्यक् पङ्क्तिक्रमेणैव पञ्चत्रिंशत्वप्रकोष्टके ॥१॥ न प्रोक्ताङ ञणावर्णा नामादौ सन्ति ते नहि चेद्भवन्ति तदाज्ञेया गजडास्ते यथाक्रममिति नरपतिजयचर्यायां यद्यपि ऋ ॠ ॢ ॣ इति चतुष्टयं न नाममध्येसंभवन्ति। तथापि ककारादि दकारान्ताः पञ्चह स्वस्वरास्तथा बलिनः स्युः सितेपक्षे शेषाः सर्वे सितेतरे इति नरपपि ग्रन्थवाक्यात् तद्ग्रहणं चूडाणिशास्त्रानुसारेण नष्ट जन्माध्यायादावपि दोतिन्नि पंच अठय पंच अठाय दोतिन्नि चउरिक्कि सत्त छक्का सत्तय छकाय च उरिक्का १ अ २ आ ३ इ ५ ई ८ उ ५ ऊ ८ ऋ २ ॠ ३ ॢ ४ ॣ १ ए ७ ऐ ६ ओ ७ औ ६ अं ४ अः एवं कखप्रमुखा ङ ञ ण वर्जादकारान्त पुनर्धकाराद्याः सह क्ष प्रान्ताः वर्णा दोतिन्नि इति गाथाक्रमेण ज्ञेया इति तद्गणनात् कश्चित्तु नामाक्षरकथनेन फलनामाक्षराण्येव गणयति तद्विस्तरस्तु चूडामणिशास्त्रादेववेद्यः तच्चेदं—अक्खरमत्तपमाणं रय ३२ वेयं ४ समाहयं ससोलधुयं सिहि ३ विसय ५ जुत्तं हरियं स एणसंवच्छरं होइ ॥ १[१] मासाइगुण ३ चंद्र १ सतरस १७ इसु ५ भुवण १४ गुण ३ सिहि ३ जुतं ते रस १३ चउगुण ५२ सेगं ५३ अग इसु ५ जुत्तेसु पतपमुहम् ॥ २ ॥ गुण ३ इसु ५ दीवे सु ५ पलपमुहमित्यापिपाठः तत्र गुण इसु ५३ इत्यर्थः लग्गाई गहठाणेसुगुण ३ नव ९ नव ९ तिन्नि ३ चंद १ दुग २ चंद्रावग्गपमाणविहत्तं। हवंति सव्वेवि जम्मगहा ॥ ३ ॥ अत्रापि वसुनियमाणविहत्ता अयमपि पाठः। वारेतु पृच्छकदिक् प्रश्नाक्षर यामसंयुक्तं वसुहृतशेषं वारादौ तात्कालिक गृहोदयेः। प्रथमप्रश्नाक्षर ग्रहणम् प्रश्नः सुक्ष्माक्षरैर्गोह्योवर्गानुक्रमसंख्यया एकत्रानुकृतो राशिः सर्वमात्रानु—

---

१ ४३२ एतद्गुणं कृत्वा १६ ध्रुवाङ्ककक्षेपः ॥ २५३ क्षेपेशपेद्यतेन भागे संवत्सर प्राप्तिः २ मास।

मीलितः ॥ ४ ॥ अ १ आ २ इ ३ ई ४ उ ५ ऊ ६ ए ७ ऐ ८ ओ ९ औ १० अं ११ अः १२ क ३ ख ४ ग ५ घ ६ ङ ७ च ४ छ ५ ज ६ झ ७ ञ ८ ट ५ ठ ६ ड ७ ढ ८ ण ९ त ६ थ ७ द ८ ध ९ न १० प ७ फ ८ ब ९ भ १० म ११ य ८ र ९ ल १० व ११ ळं १२ श ९ ष १० स ११ ह १२ क्ष १३ अखरमत्तामणं इति सुक्ष्माक्षरा राशौकार्या। कचित् अ ८ आ १६ इ २४ ई ३२ उ ४० ऊ ४८ ए ५६ ऐ ६४ ओ १२ औ ८० अं ८८ अः ९६ क ७ ख १४ ग २१ घ २८ ङ ३५ च ६ छ १२ ज १८ झ २४ ञ ३० ट ५ ठ १० ड १५ ढ २० ण २५ त ४ थ ८ द १२ ध १६ न २० प ३ फ ६ ब ९ भ १२ म १५ य २ र ४ ल ६ व ८ श १ ष २ स ३ ह ४ इतिध्रुवाङ्काः। अथ उदाहरणं—

| | | | | | |
|---|---|---|---|---|---|
| वी | ज | उ | र | उं | ७ |
| २ | १ | १ | १ | २ | |

फलाद्व्यनामग्रहेणन जातोमात्रपिण्डस्वराश्चत्वारस्तदन्तका १ ७ततो

| | | | | |
|---|---|---|---|---|
| १० | इ | अ | उ | ए |
| | ४ | १ | ५ | ७ |

दातव्यं प्रश्नवर्णेषु रुपंरुपं स्वरंप्रति दलितं कारयेद्वर्गम्

| | | |
|---|---|---|
| के | २ | ३ |
| २ | १ | १० |

एकहीनं यशादिके इति वचनात तुचर्षुस्वरेषु प्रतिस्वरं एकं एकं इति जाताः ४ ततः ४ मीलने ३१ ततोदलितं कारयेद्वर्गमिति वचनात अर्द्धकरणे जातं ९ ततो यकार गणस्थोरेकः तस्य अङ्कः कः ९ एकहीनत्वे

| | | | |
|---|---|---|---|
| व | ज | क | १८ |
| ९ | ६ | ३ | |

यशादिकत्वात जातं ततः १०।११ ४।९।८। एतदङ्क मीलने जाम्

बीज उरउं अस्य माला ७ केरमात्रा ३ तद्योगे १० मात्रास्वराङ्का १७ प्रतिस्वरं ४ वर्गाङ्क १९ तदर्द्धे ९ रेकस्य ८ एवं ४८। अत्र प्रत्यन्तरे एकमेव फलनाम वीज उरउं इति बकारे ९ जकारे ७ मीलने १६ एते वर्गाङ्काः रकारे १० यशादिकेदश इकारे ४ प्रथमे ६ द्वितीये ८ उकारे ६ अंकारे ११ एवं स्वराङ्काः २७ प्रतिस्वरं रूप १ दाने ४ तन्मीलने जाता ३१ इति ततः करणं स्वररूपं प्रदातव्यं—हीने कार्यं यशादिके

१ तरेचउगुणा ५२ एकयोगे ५३ तत्रघटिकार्यं ५३ पलार्थं सैकं ५३ इत्यर्थः।

दलितं कारयेद्वर्गं सूक्ष्मराशिस्ततो भवेत् ॥ १ ॥ इतिवचनात् ९ । ७ वर्गाङ्काः ४ । ६ । ६ । ११ । ४ एवं ३१ रेकस्य ९ वर्गे दलिते ८ ततः सर्वमात्रा योगे ४८ एवं दृश्यते—

| | | | |
|---|---|---|---|
| व | ज | क | १८ |
| ९ | ६ | ३ | |

१ ९ ८ ७ २

अभिधूंमिते वर्णद्वयं पात्यंततो जातं ४६ एता अक्षरमालाः ततोरदा ३२ वेदा ४ अङ्कानां वामतोगतिः । ४३२ तेन ४६ गुण्यते जातं १९८७२ ससोलमिति षोडशक्षेप्याज्जातं १९८८८ अयं ध्रुवः ध्रुवाङ्क-राशिः पृथक्स्थाप्यः द्वितीय स्थाने ध्रुवाङ्कमण्डयित्वा तन्मध्ये लयः पञ्चाशत् योज्याः ततोशतेन भागः । शेष ४१ भक्तभोग्यन्यायेन आदोतौ व त्संवत्सरः । १३४२ एतस्मात् १३५ पातने शेषः काकः १२०७ अत्रवर्गाणां प्रथमे तृतीयाश्च वर्णा उत्तराः द्वितीयाश्चतुर्थाश्च वर्णा अधराः वर्गपञ्चमा— अधराधराः—अ इ ए ओ आलिङ्गिता, आ ऐ आ अभिघूमिताः उ ऊ अं अः दग्धाः अचतय वर्गा उत्तराः कटपशवर्गा अधराः ह्स्वस्वरा उत्तरा दीर्घस्वर अधराः । क कि के को आलिङ्गिताः का की कै कौ अभिधु-मिताः कु कू । कं कः दग्धमात्रा आलिङ्गितादिनं अभिधूमिता रात्रिः दग्धा अधिकमासः । तूर्यावर्ग्यः प्रथमं द्वितीयं तृतीयं च अभिधूमयति द्वितीयस्तुर्यमत्पञ्च–पञ्चमोवर्जः पूर्वांश्चतुरोऽपि दहाति अन्त्यः प्रथमस्तृती-याभ्यां विनाशः । वर्गाक्षरेषु प्रथमः पृथ्वी द्वितीयी वायु तृतीयो जलं तूर्या

१ प्रथमं तृतीय वर्णं द्वितयि आलिङ्गयति प्रथमोद्वितीय तृतीयश्च तृतीयस्तुर्यं तुर्यं पञ्चमितया लिङ्गितव्यवस्था क्षिः भगनमा दग्धा एव प्रथमस्तुर्यमप्यालियपतीतिकश्चित् ॥ २ ॥ चूडामणिशास्त्रे अ आ इ ई उ ऊ ए ऐ ओ औ अं अः । तत्र आद्याषट् उत्तरा-परेऽधराः यद्वा ह्स्वाषट् अ इ उ ए ओ अं उत्तरा परेऽधराः कग । चज । टड । तद । पव । यलाशसाएते ह्स्व स्वरयुता लघवा ह्स्वा उत्तराः शेषा दीर्घा गुरव अधराश्च गुरवो ह्स्व स्वरयुता अंशेन उत्तराः वीज उरमित्यत्र ईकारात् अभिघूमितत्त्वम् ।

नभः पञ्चमोऽग्नि सामान्य योगे आलिङ्गिते एकं अभिघूमिते द्वयं पातयेत् दग्धेत्रयं पात्यमिति । प्रथम गाथार्थः । मासा इति मूल ध्रुव राशौ १९८८८ मासार्धं गुणास्त्रयः क्षेप्याजातं १९८९१ तत्र द्वादशभागे शेषं ७ भुक्तामासा अष्टमो भोग्यो लब्धश्चैत्रात् कार्तिकमासः पूनर्मूले पक्षार्थं १ क्षेपे १ जातं १९८८९ द्वाभ्यां भागे शेषं १ सपक्षः शुक्लीभुक्तः भोग्यो-वदि पक्षः पूनर्मूले १७ क्षेपेजातं १९९०५ । तत्र पञ्चदशभिर्भागे शेषं शून्यं भुक्तं भोग्याप्रतिपात्तिथिः पुनर्मूले वारकार्याय इषु क्षेपे १९८९३ सप्तभिर्भागे शेषं ६ भुक्ताः वाराः भोग्यः सप्तमः शनिर्वारः । पुनर्मूले भुवन १४ क्षेपे १९९०२ सप्तविंश त्याभागे शेषं ३ भुक्तानि भोग्यं चतुर्थं क्षेत्रमश्विनी तो रोहिणी पुनर्मूले ३ क्षेपे १९८९१ भागः सप्तविंश त्या शेषं १९ भुक्तायोगाः भोग्ये विष्कम्भादिर्विंशः शिवनामायोगः पुनर्मूले करणार्थं ३ क्षेपे १९८९१ सप्तभिर्भागे शेषं ४ भुक्तं भोग्यं वात्रज्ञेयं पुनर्मूले पललाभाय ५३ क्षेपे जातं १९९४१ षष्ट्याभागे लब्धं ३३२ शेषं २१ भुक्तानि पलानि भोग्यं २२ पलं पुनर्मूले घटिका लाभाय ५२ क्षेपे १९९४० षष्ट्याभागे लब्धं ३३२ शेषं २० भुक्त भोग्यतया २१ घटिकाः पूनर्मूले लग्नार्थं ७ क्षेपे १९८९५ द्वादशभिर्भागे शेषं ११ भुक्तानि लग्नानि भोग्यं मनिलग्नं पुनर्नवांश लाभाय ५ क्षेपे १९८९३ नवभिर्भाग शेषं ३ भुक्ता अंशाः भोग्यस्तयोर्यः इति द्वितीय गाथार्थः ॥

लग्गा इति मूलध्रुवके ३ क्षेपे १९८९१ द्वादशभिर्भागे शेषं ७ भुक्ता-राशयः भोग्येऽष्टमे वृश्चिके रविः पुनर्मूले ९ क्षेपे द्वादशभिर्भागे शेषं १ भुक्तं भोग्योवृषराशिस्तत्रचंद्रः पुनर्मूले ९ क्षेपे द्वादशभागे तथैव शेषं १ भुक्तं भोग्ये द्वितीये वृषे राशौ मङ्गलः । पुनर्मूले ३ क्षेपे द्वादशभिर्भागे शेषं ७

---

१ एकादशाभिर्भागे शेषः २ भुक्तं भोग्यं तुर्यं तद्दिनो द्वितिया प्रवेशात् । वेदहीनकरण-मपि कचिदुक्तमस्ति प्रातिपदि तूर्यकरणस्य सम्भवात् द्वितियं तु सम्भेवदपि प्रातिपदः स्वल्प त्वादिना विंशघाटिका समये द्वितीयातु प्रवंशे तृतीयमपि वेदहीनत्वेवकरमं तु सिद्धमेव ॥

भुक्तं भोग्येऽष्टमे वृश्चिके बुधः । पुनर्मूले १ क्षेपे द्वादशभागे शेषं ५ तथैव कन्यायां गुरुः । कचिद्गुरोक्षेपाः ५३ प्रत्यन्तरे गुरोः ९ क्षेपाः पुनर्मूले २ क्षेपे द्वादशभागे शेषं ६ तथैव भोग्ये तुलाराशौशुक्रः पुनर्मूले १ क्षेपे द्वादशभागे शेषं ५ तथैव भुक्तभोग्य न्यायेन कन्यायां शनिः पुनर्मूले ८ क्षेपे द्वादशभिर्भागे शेषं भुक्ताद्द्वादशराशयः भोग्यो मेषराशिस्तत्रराहुरिति । एवंच यथा गुरुपदेशं राश्यादियोगे सूर्यैर्भागे न लब्धे न प्रयोजनं किन्तु शेषेण इत्याह—यथेच्छमिति । निजेति हस्तदर्शयितुर्योराशिस्तमेव शेषाङ्कप्रमितां स्थाने व्यवस्थाप्य गणयेत् केचित्तु निजोराशिचक्रे तारादेर्मेषादिव्यवस्थाप्य स्थानस्य स्वीयोराशिस्तद्व्यवस्थापूर्वकः क्रम इत्याहुः ॥ ३१ ॥

भाष्ये पञ्चवर्ष इति उदाहरणा दिग्मात्रमिदं न पुनः पञ्चवर्षस्य करवीक्षणोचितं रेखाणामप्राकट्यात् एतेन पञ्चसप्ततिर्वर्षेभ्यः परतो पुंसां नव्यारेखा जायन्ते वृद्धत्वात्ता अपि न लक्षणं तारुण्येव यथायोगं न व्याधि काचित् भाविभाव सूचिकेति स्याद्वाद एव न्याय्यः । स्वराशिं मेषं व्यवस्थाप्य मतान्तरे कन्यास्थानत्वात्कन्यालग्नं व्यवस्थाप्य गण्यते । लग्नाधिकारात् श्रेष्ठमेतन्मतं तथाच चन्द्रोऽपि तुलायामवाप्नोति परं प्राच्यैराशेरेव नाम्नः प्राधान्यात् न्यासः प्रोक्तः । सर्वत्र बलवान् राशिर्नाम्नि यो यस्य भण्यते वर्षमासादि गणने तस्माद्रेखापि लक्षणम् ॥ १ ॥ इति सामुद्रिक भूषणे—तथैव दर्शनात् एतस्मिन् चक्रे पुनर्पुनर्जन्म पत्रवद्दक्षिणकराङ्गुली त्रिभागरेखादि लक्षणै रेव द्वादशक परावर्तते । वर्षशुभाशुभज्ञानं न पुनर्वामहस्ते तद्विमर्शः स्त्रियास्तु वामहस्त एव पुनर्दक्षिणे इति नरस्य राशिचक्रं वामे स्त्रियास्तु दक्षिणे विपर्यादितो दक्षिणकरेऽपि अङ्गूष्ठे नखश्चन्द्र इति

राशिभासितविलासविकाशिवर्षदर्शनमवादिविमृश्य ।
दृश्यमस्यसरहस्यमवश्यं पश्यतात् सुजनोऽसुजनो वा ॥ १ ॥

अथमासपरिज्ञानमाह—

श्रावणो हस्ततालस्यादङ्गूष्ठो भाद्रपन्मतः ।
मासस्तर्जनिमध्या कार्तिकं श्रीविधानतः ॥ ३२ ॥

के. ३ | २ चं | १ | १२ | ४बृ. | ५ | श्री. | ११ | र.शु.बु ६ | १० श. | मं.७ | ८ | ९ रा.

इदं मेष राशिकस्य जन्मलग्न राशिचक्रम्

चं.२ | १ | १२ | ११ | ३ के. | ४ बृ | श्रीसिद्ध जीव. | १० श. | ५ | ७मं.बु. | ९ रा. | र.६ | ८

इदं मेष राशिकस्यजन्मलग्नम्

**मार्गशीर्षोऽनामिकायां कनिष्टायान्तु पौषकः ।**
**दक्षिणायनमेवं स्याद्दक्षिणो सिंहवाहने ॥ ३२ ॥**

श्रावण इति । हस्ततले अकर्मकठिनं पाणितलंमध्ये तदुक्तं इत्यादि चक्ष्यमाणे शुभलक्षणे श्रावणसुखकारी अन्यादुःखकृत एवमङ्गूष्ठोदरमध्यस्थो यवो यस्यविराजते । उत्पन्नभक्ष्यभोगी च स नरः सुखमेधते ॥ १ ॥ इत्याचङ्गूष्ठादौज्ञेयं श्रावणो हस्ततलं तच्चिन्हं त्रिवेण्याः प्रवाहात् अङ्गूष्ठो भाद्रपात सिंहेसूर्यश्रयात् तत्र अ इ उ ए ओ इति स्वरेषु अस्वरोदयाच्च नभस्यमार्गविशाखेश्वस्वरस्योदयो भवेदिति । नरपति ग्रन्थे तथैवोक्तिरपि । कुमार नामा आश्विनस्तर्जन्यां रक्ताधिकारात् अत एव तन्मूले मृत्युरेखापि अश्विनश्रावणाषाढेष्वाधिकारो नायकः स्मृतः इति वचनात् इकारोऽस्य स्वाम्यपि तत्रैवा कार्तिकोमध्यायांश्रियाः । स्वस्थानात् हिमाशिवा इति वक्ष्यमाणत्वात् हिमोदयेन सावित्र्यां मार्गशिराः दिनस्य लघुत्वादवहस्तरूपरात्रि प्रत्यासत्त्या नक्षत्र चक्रेऽपि पुष्पस्य पश्चिमा नक्षत्रत्वे न पश्चिमादिग् लक्षण कनिष्टायां पौषः । दक्षिणेति दक्षिणायनं दक्षिणहस्ते तत् षण्मासाश्च ज्ञेयाः श्रावणादि मासानां जैनशास्त्रे प्रतीतेः । अत एव रविस्थानमङ्गूष्ठो दक्षिणभागस्थः । सिंहवाहने हस्ते इत्यर्थः । सिंहस्यासिंहराशेर्वाहनमिव पूर्वदिशि तदवस्थानात् ॥ ३२ ॥

**वामेमाघःकनिष्टायां फाल्गुनोऽनामिका मता ।**

मध्याचैत्रै प्रदेशिन्यां माधवोऽङ्गुष्ठकेऽपरः ॥ ३४ ॥
आषाढो भूतले प्राप्तः स्यादेवमुत्तरायणम् ।
वर्तमानोहि यो मासः प्रातः स पञ्चनाडिकाः ॥ ३५ ॥

वामे माघ इति । नक्षत्र चक्रे मघायाः कनिष्ठा मूले स्थानात् ॐकारः उदयं याति माघफाल्गुनमासयोरिति । नरपति ग्रंथवचनाच्चतारायां माघमास आम्ला कनिष्ठा इति वक्ष्यमाणत्वेन शिशिरे चामलकर समिति वैद्यशास्त्र-वचनात् । शिवायां कृष्णपक्षादित्त्वाच्छिवरात्रिपर्वपुण्यः फाल्गुनः तन्मूले पूर्वाफाल्गुन्याःस्थानात् तथा मध्यायां चैत्रः उकारश्चैत्रे पौषेस्यादिति उकार स्वराश्रयात् तत एव स्निग्धामध्या इति वक्ष्यमाणत्वात् घृतं वरान्ते इति वैद्यक ग्रंथे चैत्रेस्निग्धाहारः । आद्यसंक्रान्ति हेतुर्वैशाख आद्याङ्गुल्या वङ्साहो मगा-मास सिद्धाय इतिवचनात । ज्येष्ठः सर्वाङ्गुलीषु प्रधानत्वात् अङ्गुष्ठे ज्ञेयः सूर्यस्थानं चायमेव ; पुनराषाढो वामे हस्ततले नदीप्रवाहात् उत्तरायणं माघादित्येन प्रकारात् सूर्यस्यापि अङ्गुली नखतेजो वृद्धिहेतुः किरणवर्द्धनात् यदुक्तं शतानिद्वादशमघौ त्रयोदशस्तु माधवे चतुर्दश पुनर्ज्येष्ठे नभोनभस्यो स्तथा ॥ १ ॥ पञ्चदश वत्याषाढे षोडशैव तथाश्विने कार्तिकेत्वेकादश च इतोन्येवं तपस्यति ॥ २ ॥ मार्गे च दशमास्तर्द्धानि शतान्येवं च फाल्गुने पौष एव परेमासि सहस्रंकिरणा रवेरिति ॥ रंविरूपाङ्गुष्ठो यद्दिग् भागस्थस्तेन माघादिजातस्य जन्मज्ञाने हस्तवीक्षणे वामहस्तस्य प्राधान्यमित्यर्थादयन चक्रंमासचक्रान्तर्भूतमेव ।

तदेवं व्यवस्थायां मासस्य हस्ते क्षणवेलायां भोगलाभाय करणमाह—

वर्तमान इति । ननु यथा स्थानं व्यवस्थितैर्मासैरेव लक्षणानुसारात् शुभा-शुभज्ञानं संपन्नमेव किं तर्हि भोगमानचिन्तयोति चेत्; उच्यते लक्षणविचार-स्यातिगहनत्वात् जातिदिग् द्रव्यादिलाभज्ञाने मासनिर्णयार्थं स्पर्शपृच्छभय वा शीघ्रफलकथनेस्थानत आन्तर्यं बलीय इति न्यायात् स्थानानां शुभाशुभज्ञान स्यात्रोपयोगित्वं स्थाने प्राप्तेऽपि यदि रेखादि लक्षणं शुभं तदा विशिष्टमेव फलं न चेत् शुभस्थानेऽप्यायत रेखायामशुभफले न्यूनता अशुभे स्थाने

तयार्द्धे रेखया अपि शुभफले हीनत्वमित्यावश्यकमेवस्थान ज्ञानम् ॥३५॥

तदेवाह—

**ततो हस्ते क्षणघटी मासस्तस्य शुभाशुभम् ।**
**रेखा कामदुघारूपाद्वाच्यं लक्षणशिक्षितैः ॥ ३६ ॥**

तत इति । कामदुघा अङ्गुली तत् स्वरुपमपि जातिदिग् द्रव्यराश्यादि लक्षणं तिथिवार नक्षत्र प्राप्ति लक्षणं वावर्णादि निश्चितं वा तस्मात् शुभसहितमशुभं शुभमपि स्थानं कार्य विशेषापेक्षया अशुभ तथा शुभेतरदपि कार्यविशेषापेक्षया शुभमित्यासहं—

**तर्जन्याश्च कनिष्टायां प्राप्तो मासस्तु नो शुभम्**
**शेषस्थाने शुभोऽङ्गुष्ठे रणपश्चेति सङ्गदः ॥ ३७ ॥**
**तर्जन्यांजयदःसोऽपि तातस्यः क्वापिनाङ्गुत्रेः ।**
**लक्ष्मी स्थितो धनकरो मरुस्थपदद्वायकः ॥ ३८ ॥**

तर्जन्यमिति । पद्यद्वयं व्यक्तम् । स्थान द्रव्यादियोगे नेत्याद्यग्रे वक्ष्यतेऽपि कूर्मोन्नतत्वं नखानां श्रेष्ठं तदपिकूर्मोन्नतेङ्गुष्ठनखेनरस्याद्भाग्य वर्जित इति स्थान योगात् ‘ पुंसो दक्षिणभागे स्त्रिया वामे’ इति द्रव्य योगात् ‘विप्पाणं वेयकरिं इत्यादि जाति योगात् ‘तिलो हस्ततले राज्ञां निन्द्यः सवणिजां शुभं’ इत्यादि व्यवसाययोगात् स्वर्णशकस्य नरस्येति भावयोगात् ‘अहवामेतोपच्छा’ इति तथा ‘वालत्तणंमि जाणसु’ इति कालयोगात् उडुपाभङ्गिनीपोतस्थातुलाग्रमघवावज्ञमित्यादि तथा ‘परदेशे मरणं’ इत्यादिक्षेत्रयोगात् भोजनावसरे दुःखमित्याद्यवसरयोगात् शुभाशुभव्यक्तिरप्येवं मन्तव्या ॥३८॥

अथैकास्मिन्नेव हस्ते मासचक्रमाह—

**यद्वा माघादयो मासाः द्वादशापि लघोःक्रमात् ।**
**दिनोदयाद् पञ्चघटी मानाः पाणिक्षणावधिः ॥ ३९ ॥**

यद्वेति । माघादयोऽत्र मासास्तन्नक्षत्रचक्रे कनिष्ठा मूले मघानक्षत्रस्थानात् किञ्चमासेपु मुख्यत्वं माघस्यैव प्रभावादीनामद्धानां सम्भवहेतुत्वात्—यदुक्तं—

तपसि खलु यदा सावुद्रमं याति मासिं ।
प्रथमलवगतस्सन् वासवेत्रा सवेङ्यः ॥
निखिलजनहितार्थं वर्षवृन्दे वरिष्टः ।
प्रभव इति सनाम्ना जायतेऽद्धस्तदानीम् ॥ १ ॥

इति रत्नमालायां दिनलग्नेऽपि वक्ष्यमाणे तेनैवमकरादिक्रमः ॥३९॥

योे मासः प्राप्यते तस्य स्थानलक्षणवीक्षणात् ।
मासे शुभाशुभं वाच्यमित्युक्तं ज्ञानिभिः पुराः ॥ ४० ॥

यो मास इति । यथा राशिचक्रे राशिलभ्यं स्थानलक्षणात्तथाऽत्रापि वाच्यं सर्वसामान्यापेक्षमेतत्, अन्यथा यस्य जन्म मासो ज्ञायते तमेव तारा-मूले निधाय द्वादशमासान् गणयेत् वर्षस्थाने प्राप्ते तत एव द्वादशमासाइत्यपि विशेषापेक्षया मासचक्रं ज्ञेयम् ॥४०॥

अथ पक्षचक्रं शुक्ले हस्तेक्षणे पञ्चदशी तिथिप्राप्तौ तिथिचक्रे पूर्णिमा-ग्राह्या कृष्णेत्वमावसीति भेद ज्ञानाय प्राह—

कृष्णपक्षो दक्षिणः स्यात् करस्तदितरः सितः ।
यत्पक्षे दर्शयेद्धस्तं सम्मुखोऽन्यस्तदन्यथा ॥ ४१ ॥

कृष्ण इति । सूर्यप्राधान्यात् स्वरोदयानुसारेण तस्य पुंस्त्वाद्दाक्षिणः करः कृष्णपक्षो वामस्तु चन्द्रप्राधान्यात् शुक्ल इति यत्पक्ष इति कृष्णपक्षे जातस्य दक्षिणो मुख्यः शुक्ले लब्धजन्मनो वामः करस्तद्ज्ञानाभावे यस्मिन् पक्षे हस्तं दर्शयेत् समुख्यो जन्मकुण्डलिका स्थानीयो दक्षिणः करो राशिकुण्डलिकास्थानीयो वाम इति अत एव प्रत्याख्यानसमये हस्तद्वय वीक्षणं मन्त्रन्यासेऽपि 'अङ्गूष्ठाभ्यां नमः' इत्यादौ द्विवचनग्रहणं च स्पष्टम् । एवं रात्रिजातस्य वामप्राधान्यं; दिनजातस्य दक्षिण प्राधान्यं; तथा दक्षिणायने जातस्य दक्षिणः; उत्तरायणे जातस्य वामः तथा पुरुषस्या-युषः पूर्वार्द्धे कूर्चश्मश्रुप्रादुर्भावे सति दाक्षिणः; पश्चार्द्धे वामः; स्त्रियाः पूर्वार्द्धे वामः पश्चार्द्धे दक्षिणः प्रधान इत्यपि विचार्यं 'अहवामेतो पृच्छा' इति प्रकरणकारभणनात् अज्ञाने तु सर्वत्र हस्तेक्षणपक्षस्यैव प्राधान्यं ज्ञेयं

तेन पूर्णायां हस्ते क्षणे वामाङ्गुष्टे यवादि शुभलक्षणे सति दक्षिणहस्ते-ङ्गूष्ठ यवेऽपि रात्रिजन्मरूपं शुभंफलं कृष्णपक्षे दक्षिणाङ्गूष्ठ लक्षणेन वाच्यम् । तदेवं विवेकविलासोक्तं—शुक्लपक्षे तदा जन्म दक्षिणाङ्गूष्ठ गैश्चतैरित्यपि समर्थितं कृष्णपक्षे हस्तदर्शनात् तथा च उभयत्र यवोदये यत्पक्षे हस्तेक्षणं तत् प्राधान्यात् तत् फलव्यक्तिरिति वक्ष्यतेऽपि, नन्वेवं गोत्रधनायुरादिविमर्शो य एव दक्षिणे स एव वामेपि स्यादिति संपन्ने तथा च वामावामयो रेखा साम्यापत्तिः न चैतादिष्टं सर्वत्र प्रत्यक्ष विरोधात् किञ्च वक्ष्यमाणः श्वश्रूर्वामे मातृरेखा श्वसुरः पितृरेखया इत्यादि रेखाविमर्श भेदोऽपि न संगच्छते एकस्यैव गोत्रादेः प्रमेयभावस्य वामावामयोरेखाभिर्ल-क्षणीयत्वात् एकत्र रेखायाश्चरितार्थतेव । अपि च किं मुख्यत्वं किं चान्यत् यो भावो दक्षिण हस्तरेखया लक्ष्यते । स एव चेद्वाम हस्ते तथैव लक्ष्यते तदापौनरुक्त्यं अन्यश्चेल्लक्ष्यस्तदा किं मुख्यामुख्य वितर्केण अथ स एव भावो विशिष्ट तया। लक्ष्यते यथा कृष्ण हस्तदर्शने वामावामयो-र्जीवितरेखा साम्येऽपि पुरुषस्यायुराधिकं वाच्यम् । शुक्ले तु नार्या आयुः एवं भाग्यधनरेखादिष्वपि भाग्यं कृष्णे सन्तानरेखाभिर्दक्षिणकरभे पुत्रापुत्र्यश्च प्रधानरूपाः प्रियाश्च शुक्ले ताभिरेव प्राधान्येन प्रेमपात्र तया वा वणिक् पुत्र सेवका लक्षणीया इति चेन्न; एवं सन्ततिरेखाभिः करभेवामे वणिक-पुत्राश्च सेवका इत्यादि वक्ष्यमाणग्रन्थ वैयर्थ्यात् अन्योन्यं रेखाणां प्रतिवन्ध कतापत्तेश्च । तेन भिन्न एव वामावामयोर्भावरेखाभिर्लक्ष्यः दक्षिणे विद्या-रेखयापठनपाठनरूपाविद्याभावो वामतयैव विज्ञानामित्यादिवत् । परं दक्षिणे पुरुषस्य स्वगोत्रधनायुषां वैशिष्ट्यं कृष्णपक्षे हस्तदर्शने वाच्यम् । शुक्ले तु स्त्रीसवन्ध गोत्रादीनामिति न चैवं पुरुषस्य वामहस्तरेखा समर्थ-नेऽपि स्त्रिया वामहस्तरेखा वैयर्थ्यं तदवस्थमेव स्त्रिया गोत्रादेः पुरुष वाम-हस्तादेव प्रतीतेरिति वाच्यं स्त्रीपाक्षिक गोत्रधनादेः पुरुषोपभोग्यत्वेन तत् सुखमात्रस्यैव नरवामकररेखाभिर्लक्षणीयत्वात् स्त्रिया उपभोग्यानां धना-दीनां स्त्रीवामहस्तरेखा एव लक्षणमिति । विवेकाच्च अत एव

स्त्रिया आयुर्ज्ञानं स्त्रीवामहस्तादेव । तस्याः पुनः सुखं पुरुषस्य लक्षणीयं चेत्तदा पुरुषस्य वामहस्तरेखया तस्याः स्वभावः प्रतिप्रसंगप्रेमादि कोपि तथैव वेद्यः स्वारसिकस्वभावस्तु स्त्रिया वामहस्तरेखा स्वरूपादेवेति न कश्चिद्विरोधः, स्त्रीत्रोर्जन्मलग्नराशिकुण्डलिका चतुष्टयस्यैवप्रमेयावगमे स्व स्व विषये स्त्रीत्रोः करचतुष्कस्य सामर्थ्यादिति । अत एव द्वित्रिचतुष्पञ्चादि बहुस्त्रीपतेर्नरस्य स्त्रीपाक्षिकसुखासुखादि वामहस्तरेखाभिर्वेद्य मन्यथा कस्याः कस्याः स्त्रिया आयुरादिनद्रेखाभिर्लक्षणीयामित्य समंजसं स्यात् तेन मुख्यामुख्यत्वे तत्तद्रेखा प्रतिनियत फलोपभोगजन्य सुखापेक्ष एव अपल्लवा नविछिन्ना वामायू रेखिका यदा तदा स्त्रिया समं प्रीतिः प्राधान्यं स्वगृहे भवेत् इत्याद्यग्रे स्पष्टम् । रेखावैकल्य प्रसंग इत्यत्रापि गोत्रधन विद्यादिरेखाणां भिन्नविषयत्वान्नवैफल्यं लग्न पत्रराशिगतयोर्भावानां ताद्रूप्येऽपि फलविशेष एव निर्वेद्यो न चेदेकतरस्य विकलत्वं स्यात्; तथात्रापि वामावामयोरिति परं एकसुशीलस्त्री भर्तुः सामान्यगृहपतेर्लोकस्य सर्वाः सन्तान रेखाविकलाः स्युस्तदपत्यानां स्त्रीवामहस्तकरभरेखाभिरेव प्रतिपत्तेः स्त्रीपुंसयोः संतानस्य लक्ष्यस्यैक्यात् न चास्याः परपुरुषोत्पन्नं सन्तानापेक्षया लक्ष्यभेदः शक्यः प्रतिव्रतात्वात् नापि पुरुषस्यान्य स्त्रियां जातसन्तानापेक्षया लक्ष्यभेद—एकनारीकत्वात् एवं वामाङ्गुष्ठयवरेखायामपि निष्फलत्व[1] प्रसंगोऽपि बोध्यो न च तत्र स्त्रीपक्षविषयः पुरुषस्यैव निशाजन्मलक्षणात् तदुपलब्धिस्तु दक्षिणाङ्गुष्ठयवाभावे न सुबोधैवेति—अत्र बहुवक्तव्यं तथापि ग्रन्थविस्तार भयादुपरम्यते प्रत्यूहकारकाः सर्वत्र सर्वदासन्तः प्रभाभिर्विकसन्तः प्रसाद पात्रं विजयं त एव । तत एव स्वयमपि प्राह इदं सामान्यत इति किं आपातमात्र चिन्तनया विशेषस्तु पुंस्त्र्यादिकृत इति सचात्र भावित एव ॥४१॥ इति पक्षचक्रदर्शनम् ॥

अग्रे स्वर्गोदयभावनें सोपयोगं व्यक्त्या, अथ के दिनाकिदृशा इति ज्ञानाय दिनदर्शनमाह—

---

१ निष्फलत्वमित्यपि पाठः ।

**यद्दिने वीक्ष्यते हस्तस्तत्तिथेः स्थानकान्निजात् ।**
**आरभ्य गणने वाच्या दिनाः सर्वे शुभाशुभाः ॥ ४२ ॥**

यद्दिन इति । तिथिस्थानकं निजं यद्दिनमानापेक्षं प्रागुक्तं प्रतिपत् षष्ठ्यादिकं अङ्गूष्ठादौ विजानीयादित्यादिकं वक्ष्यमाणं यद्वा एकः १ पञ्चदशै १५ र्वाराः १० षट् ६ द्वये २ कादश ११ षोडश १६ त्रि ३ सप्त ७ द्वादश १२ त्यष्टि १७ वेदा ४ अष्ट ८ त्रयोदश १३ ॥ १ ॥ अङ्गूष्ठादेः पञ्च ५ नव ९ तारान्तेस्युश्चतुर्दश १४ पूर्वेपरे गतात् शेषात् दिनमानस्य निर्णयः ॥ २ ॥ इति सामुद्रिकभूषणोक्तं वाज्ञेयं न चैवं त्रेधा दिनमानदर्शनात् न तिथिस्थाननिर्णयः क्वचित्त्रयोदशी स्थानं मध्याशिरः पर्वक्वचित्सावित्री शिरः पर्वेति कुतो दिना गण्यन्त इति वाच्यं तारादि प्रतिपत्प्रभृतिकं लघुदिनमानापेक्षं यावन्मेषे तुलायां वा सूर्यः तदाङ्गूष्ठादाविति समदिनरात्र्यपेक्षं एकः पञ्चदशेत्यादिकं तूत्कृष्टदिनमानापेक्षमिति विवेकात् तेन यदा यद्दिनमानं तदा तथैव तिथिव्यवस्था, अत्र ग्रन्थे पुरुषाङ्गत्वे न दक्षिणहस्तप्राधान्याद्दक्षिणायने दिनलघुतापेक्षयाबाहुल्येन प्रतिपत् षष्ठ्यादिकमेव दिनमानं संदृब्धं तेन तदपेक्षयैव तिथिव्यवस्था । ततः कृष्णपक्षे हस्ते क्षणे त्रयोदशी तिथिः प्राप्ताचेत्तदा मध्याशिरः पर्वणः १४।०।१।२।३।४। प्रारभ्य तिथिप्वङ्कगण्यते तदनु वामहस्ते त्रयोदशीस्थानादारभ्य पञ्चम्यादिगणनं ततोऽङ्गूष्ठपर्य्यन्तं गणयित्वा वामहस्ते शेषास्तिथीः प्रपूर्य्य पुनर्दक्षिण हस्ते दिनाः पुरणीयाः इति दिनफलं तत्र यद्दिनस्थाने शुभरेखालक्षणं स्वराशिनाथस्तन्मित्रस्थानं तद्दिनं यावज्जीवं शुभं ज्ञेयम् । तदितरत्—अशुभं मित्रगृहत्वेऽपि अङ्गुल्यन्तर्गतत्वान्मिश्रं सामान्यतोऽपि मिश्राणामपि स्वराशिनाथवैरे अशुभं तत्रापि स्वराशीशोदयास्तत्क्रूराक्रान्तं क्रूरदृष्ट्यादि विमृश्यफलं वाच्यम् । एवं शुक्लपक्षे हस्ते क्षणे वामतस्तत्तत्तिथिस्थानात् प्रारभ्य क्रमाद्दक्षिणेऽपि दिनपूरणं कार्यं एवं सकलतिथीनां शुभाशुभादि निर्णयः ॥ ४२ ॥

दिनानां स्थानमाह—

अङ्गुल्यान्तर्गता दुष्ट रेखा स्थानास्थिता अपि ।
दुष्टाश्रेष्टादिनाश्चान्ये मिश्राप्रदेशिनी दिनाः ॥ ४३ ॥

अङ्गुल्यन्तेति ॥ ४३ ॥

रणार्थे तेऽपि च शुभाः अङ्गुष्ठस्थास्तुमङ्गदाः ।
धर्मार्थेष्वपि च शुभाःऽकनिष्ठास्थास्तदा शुभा ॥ ४४ ॥

रणार्थ इति । धर्मार्थे अङ्गुष्ठादिनाः श्रेष्ठाः पञ्चमे शून्यतैव स्यादथवा धर्मवासनेति विवेकविलासे व्योमतत्त्वस्थानात् ॥ ४४ ॥

रोगप्रश्ने शान्तिकादौ श्रेष्टा अनामिकादिना ।
मध्यादिना धनकराः लाभसाम्राज्यदायकाः ॥ ४५ ॥

रोगेति । स्पष्टं सर्वम् । यत्तु दूतस्य अनामिकाङ्गुलिस्पर्शो रोगिण उपचरणे वाग्भटे निषिद्धस्तत्र शकुनान्वेषणमात्रम् । अत्र तु मम रोगस्य कदा शान्तिस्तदाहस्ते क्षणे दिनान्निर्णायिये दिनाः सावित्रीस्थानास्तेषु रोगोपशान्तिर्वाच्या इति तात्पर्यभेदात् श्रेष्टा इत्युक्तं—यद्वा कुमारं शीताभिरद्भिराश्वास्य योनियन्त्रमूर्छितं जातकर्मणिकृते मधुसर्पिर्दुर्वान्ता ब्राह्मीरसेन सुवर्ण चूर्णमिश्रमङ्गल्यानामिकया लेहयेत् इति सुश्रुते शारीरे तस्या माङ्गल्योक्तेः ॥ ४५ ॥

इति दिनदर्शनचक्रम् ॥

अथ घटीका चक्रमाह—

का घटी किद्दशीमे स्यादिति ज्ञेये करे क्षणे ।
या तिथिस्तां निजे स्थाने दत्वा सर्वं विलोकयेत् ॥ ४६ ॥

का घटीति ॥ ४६ ॥

प्रातस्त्यं घटिका युग्मं तिथिस्थाने नियोजयेत् ।
तदनुक्रमतः पञ्चदशभान्विचारयेत् ॥ ४७ ॥

प्रातस्त्यमिति । यातिथिः प्राप्ता तस्मात् स्थानात् प्रारभ्य अङ्गुष्ठं यावत् गणयित्वा तदनु दक्षिण एवकरे तारादि भागैर्दिन घटिकाः प्रपूर्या

नतुवामे तद्गणनं रात्रिघटिनामेववामेति निर्णयात्, इदमेव मुहूर्त चक्रम् । अयं तु एकस्मिन्नेव दिने घटीनिर्णयः तत्रापि कृष्णपक्षे प्रथमा घटी सूर्यस्य द्वितीया चन्द्रस्य शुक्ले प्रथमा चन्द्रस्य परासूर्यस्येति अथ षष्ट्या हस्ते क्षणे तथा ज्ञाते सातमी घटिकानां कथं शुभाशुभ ज्ञप्तिरिति चे दुच्यते सामान्यतो दक्षिण एवकरे सप्तमी स्थानाद् दिनं मुखमारभ्य तद्गणन शुभमशुभंवानिर्णेयं विशिष्य पुनर्वर्षमासातिथिनिर्णयात् ॥ ४१ ॥

तत्रापि घटीयुग्मस्थापनं स्थूलदृष्ट्येत्याह—

तुल्ये नक्तं दिने ह्येपः क्रमो मेषतुलारवौ ।
न्यूनोधिके घटीयुग्मेपलैर्ज्ञेयाधिको नत ॥ ४८ ॥

तुल्येति ॥ ४८ ॥

उपसंहारमाह—

घटीनां फलमित्येवं दिवसस्य निवेद्यते ।
रात्रौ घट्यःपुनर्वाच्या वामहस्त विलोकनात् ॥ ४९ ॥

घटीति । रात्रौ वामंगुठजवेणय इति प्राक् प्रकरणकारमतेन वामहस्ते घटिकावाच्या ॥ ४९ ॥

## इति घटिकादर्शन चक्रम् ।

अथ दशाचक्रमाह—

आश्विन्यादिक्रमाद्यत्र ताराद्यङ्गुलिपञ्चके ।
दिनभं हस्तवीक्षायाः प्रातस्तद्ग्रहजादशा ॥ ५० ॥

अश्विन्यादीति । गृहदानदिनेषु अश्विन्यादिक्रमात् यदुक्तं—
रविः१ सौम्यो २ भृगुः ३ शौरिः ४ चन्द्रा ५ गारौ ६ बृहस्पति ७ राहु ८ केतुः ९ क्रमाद्दानमश्विन्यादि त्रिकेत्रिके ॥१॥

तेनायामत्र क्रमश्चन्द्र चक्रानुसारी ज्योतिर्मार्गेऽपि—

आर्द्राद्येभ चतुष्टये रविदशा चन्द्रे मघादि त्रये,
कौजी हस्त चतुष्टये बुधदशा मैत्रात्रिभे कीर्तिता ।
शौरीपूष चतुष्टये ज लभतो जीवे धनिष्ठा त्रये,

आहिर्बुध्नचतुष्टये तमदशाशेषा भृगोः कीर्तिता ॥ १ ॥

इति तथा दर्शनात् ॥ ५० ॥

नक्षत्रव्यवस्थामाह—

अङ्गूष्ठेऽपि कनिष्ठायां षड्ऋक्षाणिनियोजयेत् ।
शेषास्तु पञ्चऋक्षाणि दशाचक्रमितीरितम् ॥ ५१ ॥

अङ्गूष्ठ इति । चन्द्रचक्रे प्रत्यङ्गुलिसतनक्षत्रनियमात् कथमत्र वैषम्यमिति न शङ्क्यम् ।

अकारे सप्त ऋक्षाणि रेवत्यादि क्रमेण च ।
पञ्च पञ्च इकारादा-वेवं ऋक्षस्वरोदयः ॥ १ ॥

इति नरपतिग्रन्थेऽपि व्यवस्था वैषम्यात् ॥

तिथिवारादिभोगवद्दशा भोगमाह—

सार्धसप्त घटीमान दशानुक्रमतः करः ।
यदात्रीक्ष्येत सा ज्ञेया प्रष्टुर्जन्मदशा बुधैः ॥ ५२ ॥

सार्द्धेति । स्पष्टम् । प्रष्टुर्हस्तदर्शयितुरित्यर्थः ॥ ५२ ॥

दशा चक्रमाह—

आर्चं भौबुशजी राशुक्रमेणासां प्रचारणा ।
स्थानयोगाद्ग्रहयोगाच्छुभाशुभमिहेष्यते ॥ २ ॥

आचमिति । अष्टोत्तर्याः प्राधान्यात् स्थानेति स्थानयोगात् ग्रहन्यादिति जन्मराशिभावचक्रादौ सर्वत्र ज्ञेयम् ।

अश्विनीत्रितये राहो ब्राह्म्यादि त्रयके शनिः ।
श्रुतिद्वये बुधदशा वारुणद्वितये रवेः ॥ १ ॥
उभद्वये चन्द्रदशा शुक्रस्यादित्य पञ्चके ।
जीवस्यार्यमतः पन्च स्वारस्य परपञ्चके ॥ २ ॥

अत्र दशाया उदाहरणे सम्वत् १७३७ वर्षे आषाढसितद्वितीयायां सप्तमघटीसमये हस्तवीक्षणे प्रयोगो यथा तद्दिनभं पुष्पनक्षत्रं तदानामिका नक्षत्र पञ्चके तेन दिनोदये शुक्रदशा हस्तवीक्षापि तस्यामेव दशायां

सार्द्धसप्तघटी यावत्तस्यां अवस्थितेः तेन गौर्यां यदिशुभोर्द्धरेखादिस्थानं तर्हि शुक्रदशा शुभा अन्यथा अशुभास्वराशीश मित्रामित्रत्वादिकमप्य-त्रान्वेषं एवं हस्तेक्षा प्राप्ये जन्मलाभे यदि शुक्रः शुभमित्रादिराशिस्थस्तदा तद्दशापि शुभेति मन्तव्या एतदनुसारेण ज्योतिः शास्त्रदशापि हस्तलक्षणात् शुभाऽशुभावा ज्ञेया ॥५३॥

॥ इति दशाचक्रदर्शनम् ॥

अथ दिनलग्नदर्शनमाह--

पाणियद्वासरेवीक्ष्यस्तत्संक्रान्ति दिनोदये ।
देयान्होमान योगेन तदनुक्रमतः पुनः ॥ ५४ ॥

पाणिरिति । अह्न इति अह्नोवमानं शुभसंक्रान्त्य पेक्षयेति । ज्योतिः शास्त्रानुसारेण यदाग्रहादीयं ते अन्यथा अह्नोमानं-उत्कृष्टजघन्यादि तदेव सामुद्रिकैर्विचार्यम् यद्वास्थूलनयापेक्षयैव यथायोगं दिनमानानुसारेण यल्ल-ग्नमानं प्राप्तं तत् संक्रान्ति प्रथमदिनादारभ्य संक्रान्ति प्रान्तं यावत् ज्ञेयम् ॥५४ ॥

लग्नप्राप्तिविधानमाह---

शक्तिशालीक्षणे प्राप्ते लग्नंसम्यग् विचार्यते ।
स्थानयोगाद् ग्रहन्यासात्तत्र वाच्यं शुभाशुभम् ॥ ५५ ॥

शक्ती इति । शक्तिशालीहस्त ति तद्वीक्षणे समये आगतं लग्नं विचार्यं स्थानेति ननु तारादि यदेवस्थानं तत्र शन्यादिर्नियत एवेति किं स्थानग्रह-योर्द्वयोरादानमिति चेन्न; क्वचिद्विरोधेन द्वयोरप्यावश्यकविमर्शात् अत एवाङ्गुष्ठमध्यांशे मूलस्थानेऽपि सूर्यस्यान्यत्र । नवकाशान्मूलबाधेन मध्ये ताम्रं रविस्थितेरित्युक्तं स्थानाद्ग्रहस्य बलवत्त्वात् ग्रहाणां चोरणस्थानाऽनियमाच्च ॥ ५५ ॥

संक्रान्तिक्रममाह---

कनिष्ठाद्यात्रिभागाच्च मृगादिरविसंक्रमम् ।
प्रारभ्यदिनसंक्रान्तिर्यत्र लग्नक्रमस्ततः ॥ ५६ ॥

कनिष्ठाद्येति । मृगोमकरस्तं प्रारभ्य रविसङ्क्रान्त यो गण्या इदं चेष्टोपदेशात् युक्तमपि माघादि मासस्थापनात् मकरसंक्रान्तौ रसद्विनाड्यो २६ के १२ पलामृगेस्युरिति वचनात् दिनमानस्याल्पत्वेन कनिष्ठाद्य भाग एव तद्व्यवस्थापनम् । यस्मिन् भागे दिनसंक्रान्तिरायाति तत एव त्र्यंशा लग्न गणना कार्या ॥ ५६ ॥

लग्नभोगमाह——

लग्नप्रमाणमुत्कृष्टे दिने सार्धेषु नाडिकाः ।
घस्रश्चतस्रो विंशति पलानि दिवसेऽल्पके ॥ ५७ ॥

लग्नेति । कर्के त्रिरामाः ३३ सपलाष्टवेदा ४८ इत्यारम्भसिद्धिग्रन्थे ततस्त्रयस्त्रिंशद् घटिकाः अष्टचत्वारिंशत्पलान्युत्कृष्टं दिनमानं तत्र षण्णां-चतुर्लग्नानां प्रवेशेन तावानेव प्रत्येकं सार्द्धपञ्चनाडी प्रमाणोभोगो अष्टचत्वरिंशत् पलानि पुनः सप्तमलग्न भोगेऽन्तर्भाव्यन्तेऽस्तरूपत्वात्तस्य सर्वेषामिह लग्नानां तुल्यभोगः सामुद्रिकमतत्त्वात्, अल्पेदिन मानेऽपि चतस्रोघट्यः पष्ट्यां चतुर्गुणेन चतुर्विंशतिप्राप्तेः शेषघटी द्वयपलानि विंशोत्तरं शतं तत्र षड्भिर्भागे विंशतिपललाभ एव शेषे द्वादशपलानि सप्तमलग्नस्य भोग इति ॥ ५७ ॥

भाष्यम्——

सर्वं प्रकटमेव केषाञ्चिदित्यत्र स्वमते स्वारसिका भावख्यापनाय ननाम ग्रहणं बहुवचनं तु बहूनां तथा प्रतिपत्तेः ।

ननु हस्त दर्शयितुर्जन्मपत्रं प्रागुक्तं वर्षपरिज्ञानाय भावचक्राणि नत्तन्नाम-राशेर्लग्न्यानि सराशिपलकाण्यपि भणितानि दिनलग्नदर्शनं किमर्थमिति चेत्; उच्यते ॥

ज्योतिशास्त्रवत्सामुद्रिकशास्त्रस्यापि निमित्तान्तरतया आवश्यकस्ततोऽपि प्रश्नबोधस्तदर्थं ज्योतिषलग्नेषु पृथिव्यादि तच्च पञ्चकभेदेसत्यपि स्वरोदयशास्त्रे प्रश्नार्थं तच्च दर्शनवत् तेन ज्योतिर्मतेन प्रश्नलग्ने प्राप्तेऽपि प्रष्टुः पुंसो दक्षिणे हस्ते स्त्रिया वामे तत्तल्लग्नग्रहादिफलं तत्तस्थानेरेखादिविचारणया पूर्णापूर्ण--

तया ज्ञेयम्। न चेदेक नक्षत्रपाद जातानामेकस्मिन्नेव लग्ने विवाहादि कुर्वतां फले विशेषा भाव प्रसङ्गः।

यथाहि एक सार्थे एक मुहूर्तेऽपि प्रचलतां शकुनादिदर्शन भेदान्नाशिका स्वरभेदाद्वा फलभेदस्तथात्रापि यदुक्तं—वसन्तराजशकुनग्रन्थे—

एकत्र सार्थे व्रजतां बहूनां यो यादृशं पश्यति दैवयोगात्।
श्यामादिकानां शकुनं स तादृक्फलं नरोविन्दति निर्विकल्पम् ॥१॥
तुल्येपि जाते शकुने जनानामा-लोक्यते यत्र फलस्य भेदः।
स प्राण संचारकृतो विशेषस्तत्प्राणगत्या शकुनो गवेष्यः ॥२॥

अत एवात्रोच्यते। स्थानयोगादिति, अथ यदर्थं पृच्छयते सपुत्रारी वा चादूरे तदाकृतः प्रश्नवोध इति चेत् दूतस्य नैमित्तिकस्य वा करवक्षिणात् यं संकल्प्ययत् क्रियते तत्तस्मिन्नेवोपतिष्टते सौधर्मदेवलोकस्य शक्रकृतजिन प्रणामवत् ईशानस्थ तदिन्द्रकृतबलि चञ्चाकोपेक्षणवत् देवोपयाचितकवत् सर्वदृष्टान्तरायात दूते मन्त्रित जलपानादि वद्वेति अत्रापि राशिचक्रदिनलग्न चक्रयोः स्थानपना यथा—

२
३
१
श.१२
११रा.
४
श्रीसिद्ध जीव
१० चं.
५के.
६ वृ.
७
८ र.बु.शु.
९मं.

दिनलग्नचक्रम्

११रा.
१२श.
चं. १०
९ मं.
८ र.बु.शु.
१
श्रीसिद्ध जीव
७
२
३
४
५के.
६ वृ.

दिनलग्नराशिचक्रम्

राशिचक्रे प्रष्टुर्वामहस्तरेखादि विचारणया पूर्णमपूर्णवाफलं ज्ञेयम्। अस्मिन्निति सप्तमभवनस्यस्त्रीरूपत्वेन वामहस्ताधिकारात् तस्यैव सामुद्रिके नियमात्।

१ पड् विंशति नाडी पूर्णतया तदधिकानि अर्कपला मृगेस्युरिति वचनात्।

॥ इति दिनलग्नचक्रदर्शनम् ॥

अथ हस्तेऽङ्गुष्ठस्य प्राधान्येन, तत्रापि ग्रहत्रयव्यवस्थानात् नक्षत्र चक्रे तलादि भागेषु अङ्गुलीषु नक्षत्र लयस्यैव पर्वत्रयेण नियमात् द्रेष्काण चक्रमाह—

लग्नञ्चेत्प्रथमे त्र्यंशेद्रेष्काणः प्रथमस्तदा ।
द्वितीयश्चद्वितीयांशे तृतीयस्तु तृतीयके ॥ ५८ ॥

लग्नमिति । प्रागुक्त भावचक्रेषु दिनलग्ने वा यन्मूर्तं तदङ्गुल्या आद्य त्र्यंशे तदालग्नस्य प्रथमद्रेष्काण इत्यादि सुबोधं न चैवं लग्नवेलायास्त्रयोभागा नप्राप्यास्तदा द्रेष्काणैस्तस्कराःस्मृता इत्यादिप्रश्नेषु अविमर्शः भावचक्रेष्वपि मेषराशिवतः प्रथम द्रेष्काण एव वृषस्य द्वितीय एवेत्यादि सर्वस्य नियमश्च प्रसज्येतेति वाच्यम् । हस्ते क्षणसमये लग्नमिति कोऽर्थः दिनलग्नं विचार्थं तच्चेत् प्रथमे अङ्गुलित्र्यंशे तदा मेषराशिवतो भावचक्रे 'जागरूक' इत्यादिना प्रबन्धेन प्रायुक्तेऽपि प्रथमोद्रेष्काणः । द्वितीयेत्रिभागे दिनलग्नस्थितौ द्वितीयः, एवं तृतीये तृतीय इत्यर्थसमर्थनात् इदमेव च सामुद्रिके दिनलग्नप्रयोजनं ज्ञेयम् । एवं सामुद्रिकमताल्लब्धम्। दिनलग्नमपि यदि ज्योतिर्मार्गप्राप्तस्य लग्नस्य प्रथमे त्रिभागे तदा प्रथमो द्रेष्काण इत्यादिबोध्यम् । तिथिवारादीनामौदायिका नामेव ज्योतिर्मार्गप्राप्तानां हस्तेक्षणदिने प्रातरादौ गणनारम्भेण तन्मार्गस्यापि प्रामाण्यात्, एवं नवांशा अपि द्रेष्काणे लब्धे प्रतिद्रेष्काणमंशत्रयसंख्यया सुलभा एव त्रिष्वपि नवांशेषु कतमो नवांश इति निर्णतव्ये दिनलग्नं चेच्चिरं तदा प्रथमोऽशः स्थिरं चेद् द्वितीयोंऽशः द्विस्वभावं चेत्तृतीयोंऽश इतिवाच्यम् । तत्र राशिलग्नभावचक्रेषु दिनलग्नेऽपि अंशानामजैणतुलकर्कादित्वं ज्योतिमार्गवदेव अङ्गुलिचतुष्टये तथैव राशिचक्रे मूलपर्वणि मेषादिव्यवस्थानात्, अंशस्वामिनस्तु प्रागेवोक्ताः, सामुद्रिकभूषणोक्ताः न पुनर्ज्योतिः शास्त्रानुगा इति नवांशचक्रं तथा पुंसां दक्षिणकरे वि-

१ समुद्दिश्यकृतः प्रश्नः फलं तस्यैव जायते इति नरपति ग्रन्थे ।

षमप्राधान्यात् अर्केन्द्वोः स्त्रिया वामहस्ते समरुपत्वात् इन्द्वर्कयोर्होरेति तत् चक्रं अनुक्तमपि द्रेष्काणचक्रस्य उपलक्षक्षादत्रबोध्यम् ॥५८॥

अथ योगचक्रमाह—

नक्षत्र चक्रक्रमतोऽभिमतं योग चक्रकम् ।
भूतले दिनयोगस्य स्थापनात् सर्वमीक्षते ॥५९॥
यो योगो दुष्टभागस्थः सवर्ज्यः शुभकर्मसु ।
अशुभे समुपादेयो मायारूपविचिन्तनात् ॥६०॥

नक्षत्रमिति । व्यक्तम् । नवरमङ्गुष्ठे नक्षत्रचक्रे नक्षत्र त्रयं एतच्चक्रे योगद्वयं सुश्रुतमते तत्र भागद्वयात् योगासप्तविंशति संख्या एव ॥६०॥

दिग् चक्रमाह—

दिशि कस्यां मया लभ्यामितिज्ञेये करे क्षणे ।
यत्रात्मभं भवेदक्ष चक्रानुक्रमतो दिशि ॥६१॥

दिशीति । करे क्षणे हस्तदर्शनसमये कस्यां दिशि मया इति मम विशेषात् लभ्यं—प्राप्तव्यामिति । ज्ञातव्ये नक्षत्रं चक्रंविलोक्यं यत्र यस्यां दिशि आत्मभं स्वीयं नामनक्षत्रं तत्र सुलक्षणे ऊर्द्ध्वरेखादिके पूर्णं लभ्यं राशीशर्वोरस्थाने पञ्चविंशोपका. आयतरेखादिविरुद्धलक्षणे न लभ्यं राशीश समग्रहस्थाने दशविंशोपकाः स्थानदोषेऽपि स्वराशिमित्रगृहस्थानत्वात् शुभ-लक्षणाद्वा पादोनं फलमित्यादिभावनीयम् ॥६१॥

एतदेव विस्तरेणाह—

मध्यमेऽङ्गुष्ठमेस्वीये ग्रामे सौख्यं विनिर्दिशेत् ।
ऋक्षत्रयेङ्गुलीनां तु प्रागुक्तां तद्दिशं दिशेत् ॥६२॥

मध्यइति । मेरुर्मध्यदेश इति वचनात्—अङ्गुष्ठे नक्षत्रे स्वग्रामे सौख्यं—नक्षत्रस्य अङ्गुल्यन्तर्गतत्वे तदङ्गुलीस्वामी मैत्र्यादि भावनापि कार्या तिथि चक्रात्तादृक् तिथिप्राप्त्या स्वग्रामेऽपि तत्तद्दिशस्ततद्राशिवतः पुरुषात् पण्या-द्वालभ्यपपिनिवेद्यम् ॥६२॥

दिग्भागेऽपि विशेषमाह—

**राजाद्ययोरन्तरेऽब्धिराद्याद्ये मे व्यवस्थितः ।**
**राज्ञो मूले स्वदेश्याद्रि ग्रामोवक्त्रेतु पल्लिका ॥६३॥**

राजेति । अङ्गूष्ठप्रदेशिन्योर्मध्ये पूर्वसमुद्रस्तस्मात् समागतपण्याल्लाभः । आद्यायाः प्रदेशिन्या नक्षत्र त्रयमध्ये—आद्ये प्रथमनक्षत्रे समुद्रो व्यवस्थितः । अङ्गूष्ठमूले स्वनामनक्षत्रे प्राप्ते स्वस्यात्मनः जन्मापेक्षया यो देशस्तत्र भवः अद्रिग्रामः पर्वतवासिलोकसन्निवेशो वाच्यः । अर्थात्ततो लभ्यमिति भावः । वक्रे करभे पल्लिका भिल्लस्थानम् ॥६३॥

**पर्यन्तपर्वता देशो मेरुः करभसीमनि ।**
**गुर्जराच सुराष्ट्रा चास्ताद्रि रत्नाकरान्तरे ॥ ६४ ॥**

पर्यन्तेति । तथा करभेदेशसीमापर्वतास्तथा मरुदेशः ततो लभ्यं ज्ञेयम् । अस्ताद्रिः करभः रत्नाकरो मणिबन्धस्तयोरन्तरे गुर्जरा सुराष्ट्रादेशस्ताभ्यां लभ्यम् ॥ ६४ ॥

सर्वदेशापेक्षया मध्यदेशमाह—

**अङ्गूष्ठमूलेऽक्षयतीर्थमेतत् आद्यं प्रपाः पारणके वटोऽयम् ।**
**यो मध्यदेशस्तत एव चक्रांदिशां विबोध्यं विदिशांच विज्ञैः॥६५॥**

अङ्गूष्ठेति । श्रीऋषभप्रभुतपः पारणास्थानेऽक्षयवटोऽद्यापि प्रयागतीर्थे प्रतीतः; समध्यदेशः सर्वदेशमध्यं अंशे अंशिनोपचारात्, तस्मादेव दिग्-विदिक् चक्रं विचार्यमन्यथा स्वजन्मापेक्षयैव मध्यदेशः सामुद्रिकेऽक्षयवट-ग्रहणमङ्गूष्ठ प्राधान्येन त्रिवेणी स्थानात् ॥ ६५ ॥

विदिग् भागमाह—

**दिग्भागेयत्तृतीयं भं तद्विदिगधिश्नमुच्यते ।**
**यद्वास्वजन्मलग्नेन दिग्विदिग्वाविमृश्यते ॥ ६६ ॥**

दिगिति । अश्विन्याद्यपेक्षया तृतीयं पूर्वस्यां नक्षत्रं रोहिणी दक्षिणस्यां पुनर्वसू पश्चिमायां मघा—उत्तरस्यां हस्त इत्ति चत्वारिविदिग् धिष्ण्यानि शेषाण्यष्टदिग् नक्षत्राणि तद्विमर्शाल्लभ्याविमर्शः । नक्षत्रव्यवस्थाया तिथिव्य-वस्थया वा लक्षणैर्लभ्यकथनाद्राशिमेलक एव लभ्ये परमबीजमित्यावेदितम् ।

अत्रार्थे मतान्तरमाह—

यद्वेति । प्रागुक्तराशिलग्नभावचक्रात् जन्मलग्नाद्वा दिग्विदिशोर्ग्रहदृष्ट्या लभ्यालभ्यव्यक्तिर्ज्ञेया ॥ ६६ ॥

अथ देहचक्राविवक्षया पूर्वमङ्गपञ्चकं व्यवस्थापयन् अङ्गुलिषु भूतपञ्चकं तच्च पञ्चकं च दर्शयति ।

**अङ्गूष्ठाद्याः पञ्चवर्णाः सीतपीता रुणा हरित् ।**
**श्यामश्वेत्यद्यभूतानां तत्वानां पञ्चकं यथा ॥ ६७ ॥**

अङ्गूष्ठाद्या इति । इदंवर्णपञ्चकं यद्यपि अङ्गुलि स्वरूपचक्रे वाच्यम् । अङ्गूष्ठपञ्चवर्णः स्यादिति वक्ष्यतेऽपि तथाऽपि भूतपञ्चकतः स्थानमिति नष्टवस्तु पृच्छायां वक्ष्यमाणत्वात् प्रासंगिकं गतवस्तुवर्णकथनम् । तत्र अङ्गूष्ठाद्या अङ्गुलयः क्रमात् पञ्चवर्ण १ सीत २ पीत ३ अरुण ४ हरित् ५ रूपाः पृष्टं श्यामरूपमिति ज्ञेयं तेन वर्णाः पञ्च अङ्गूष्ठके वाच्याः । तत्र गौरकान्तिः सूर्यः मन्दार्कस्य पुष्प्येण समद्युतिश्चन्द्रः शुकपिच्छसमः सौम्य इति भुवनदीपकोक्त्या ग्रहत्रयस्थानत्वेन वर्ण-संकरः सीता उज्वला तर्जनी पूर्वदिग् भागत्वात् पीतालक्ष्मीः बृहस्पते-स्तस्या :स्वामित्वात् उदग् भागरूपतया एकपिंगापरनाम घनदाधिष्ठि-तत्वाच्च, अत एव तुलाराशिस्तत्रस्थस्तस्य नवांशेषु धनदः स्वामीति सावित्री अरुणाक्षत्रियत्वात्, ताराहरिद्वर्णा अरुणासितहरितपाटलेत्यादिना लघुजात-कोक्त्या हरितवर्णमिथुनाश्रितत्वात् नीलश्यामयोरैक्येन शनिराहोस्थानाच्च, पृष्टं श्यामवहस्तस्तमस्विनीति प्राग् वचनात् । न च तत् स्पर्शाद्वर्णज्ञानं तत्र पृष्टे स्पर्शे सम्भवात्, किमत्र तदुपादनमिति वाच्यम् । नष्ट वस्तुज्ञाने नक्षत्र चक्रस्य प्राधान्यात् तत्तदङ्गुलिनक्षैत्रैरेव तत्तद्वस्तुवर्णबोधात्, अत एवास्य दर्शनाधिकारे संग्रहः ॥ पृष्टनक्षत्राणि तु तले पश्चिमदिग् भागगतान्येव ज्ञेयानि रात्रिप्रत्यासत्या । राहोस्ताराद्वितीय पर्वस्थानवत्, न चैवं तलनक्ष-त्रेषु को वर्ण; इत्याशङ्क्यं दिनं हस्ततलं बोध्यमित्युक्तेराद्याङ्गुलीवर्णस्यैव सामान्यतः श्वेतस्य व्यवस्थानात् विशेषतस्तु तलदिग् भागेषु

त्तद्दिक्स्वरूपाङ्गुलिवर्णस्यैव वर्णस्य प्रतिपत्तिः तेन ताराया हरिद्वर्णत्वेन तलस्य पश्चिमदिग् भागस्थ नक्षत्राणां पृष्ठरूपतया श्यामत्वयोगेऽपि न विरोधः, एतेन दिग् लभ्यवत्तत्तद्वर्णवस्तुनो लभ्यमित्यपि बोध्यम् । कश्चित्तु अङ्गूष्ठाद्याः पञ्चवर्णाः ज्ञेयास्ते केत्याह—सितः अङ्गूष्ठः शिवरूपत्वेन उज्वलत्वात् तर्जनीपीता पृथिवी तच्चस्थानात् पृथिव्याः पीतत्वं आपः श्वेताः क्षितिः पीता इति स्वरोदये मध्या अरुणा अरुणो चाल सन्ध्याभ इति कोशकारवचनात् पीतरक्तवर्ण श्लेषरूपवर्णवती । तत एव धीषणः कनकद्युतिस्तस्याः स्वामी वृश्चिको धन्वी चेति उभयराश्योः पिशंगयोस्तत्र व्यवस्था राशिचक्रेऽपि सौभाग्यरूपत्वाद्वाममध्याया रक्तत्वम् । तथाशिवानीलवर्णावायु तच्च स्वाश्रयात्, श्यामाकनीनिका—'कालंगुलीइ रेहा पएसिणी लंघिरुण जस्य गया' इत्यग्रे प्रकरणकारवचनेन आयुषो रेखायाः कालरूपत्वेन यमुना स्वरूपाया मूलत्वात्, इत्यपि सूत्रं व्याख्याति ।

अथेत्यान्तर्थे भूतानां तत्त्वानां पञ्चकं विचार्यं यथेत्यग्रे वाक्योपन्यासार्थम् ॥ ६७ ॥

तदेवाह—

**तर्जनी पृथिवी मध्या जलं वायुरनामिका ।**
**कनिष्ठातेज इत्युक्तमङ्गूष्ठे व्योममूर्द्धगम् ॥ ६८ ॥**

तर्जनीति । अत्र एकैकस्य कलाः पञ्चक्रमेणैवो दयन्ति च पृथ्वी आपस्ततस्तेजो वायुराकाशमेव चेति नरपतिग्रन्थे तथा भणनात्, आद्यं तत्त्वं भूराद्याङ्गुल्या प्रदेशविद्यतेऽस्यामिति प्रदेशिनीत्यन्वर्थान्मङ्गलाधिष्ठितत्वाच्च मध्याजलं तदनुक्रमाद्गुरुत्वाच्च मध्याया ह्रस्वत्वात्तारा या गुरुत्वाच्च शिवावायुस्ततएव तस्या जापप्रारम्भः शिवाया लघुत्वात्, काञ्चनस्य वह्निर्बीजस्याश्रयात्नक्षत्रचक्रे विशाखेन्द्राग्निदैवता व्यवस्थानात् तारा—अग्निः ।

---

१ उत्तरस्यां मानसमरो भावादागमे जलाधिक्यात् ।

द्वादशाङ्गुलं माहेन्द्रं षोडशाङ्गुलं वारुणम् ।
अष्टाङ्गुलं वहेद्वायुरनलश्चतुरङ्गुलः ॥ १ ॥

इति स्वरोदये दीर्घ-ह्रस्वपरिमाण भणनात्, तथा अहं तत्त्वोत्पत्तिं नानामीति वाग्मात्रश्रवणात्तज्जातरोषो रुद्रस्तीक्ष्णया स्वकनिष्ठानखशिखया-प्रजापतेः पञ्चमंशिरश्छिदेति वह्नि रूपराजस गुणस्थानाच्च, अत्रापि तथात्वम् । परिशेषात् सूर्याचन्द्रमसोरेवस्थानाच्च. अष्टङ्गुष्ठे मूर्द्धभागे व्योमेति भूतपञ्चव्यव्यवस्था; तच्चान्येप्येवमेवकश्चिद्विशेषस्तदीयोऽग्रेवक्ष्यते ॥६८॥

अथ देहे जीवभावयोरुभयोरवस्थानात् तत् स्वरुपज्ञानाय विभागमाह——

मायाश्वतस्रोऽप्यङ्गूल्यांजीवोऽङ्गुष्ठो बुधैः स्मृतः ।
तन्मूलनाड्यां हंसोऽयं यत्करोति गतागतम् ॥६९॥

मायाइति । स्पष्टमेव सहेतुकं तद्व्यवस्थापनात् तन्मूलेति मणिबन्धस्थाने देहसुस्थःदुःस्थता ज्ञानहेतुर्वैद्यशास्त्र प्रसिद्धया नाडी तस्यां जीवस्य गतागतं वातपित्तश्लेष्मप्रकृतिव्यञ्जकं प्रतीतमेव, अत एवोक्तं विवेकविलासे, पादाङ्गुष्ठेन तत् पष्ठे गुल्फे जानुनि लिङ्गके, नाभौ हृदि कुचे कण्ठे नासाटक् श्रुतिषु भ्रुवोः ॥१॥

शङ्खे मूर्ध्दि क्रमात्तिष्ठेत् पीयुषस्यकलान्वहम् ।
शुक्लप्रतिपदः पूर्वं कृष्णपक्षे विपर्ययात् ॥२॥
सुधाकलास्मरोजीव स्त्रयाणामेकवासिताम् ।
पुंसो दक्षिणभागे स्याद्वामभागे तु योषितः ॥३॥

---

१ सावित्र्याः पुत्युर्मारणे रजो वहुलत्वात् पवनरुपं रजोरुप शुक्राश्रयाद्वा। २ नचात्र पृथिव्यापस्तथा तेजोवायु राकाशमेवेत्यादि क्रमभङ्ग इतिवाच्यम् । क्रमस्या तन्त्रत्वात्, अतएव सुश्रुते तेभ्यो भूतानि व्योमानिलानलजलोर्व्य इतिक्रमः यथोत्तरपरिवृद्धिहेतुकः विवेकविलासेऽपि वायो वेहेरपां पृथ्व्याव्योम्नस्तत्वं वहेत् क्रमात् इतिवायोरुत्तरोऽग्निः । ३ सच वहुलमाकाशं रजोवहुलो वायुः, सच रजोवहुतमोऽग्नि, सच तमो वहुला आपः, तमो वहुला पृथ्वीति सुश्रुते । ४ व्योमसर्वेगं वहते पुनरिति विवेक विलासवचनादङगुष्टस्य सर्वाङ्गुलिमिलनम् ।

मायेति शव्दान्वार्थात् क्षेत्रवास्तुहिरण्यधनधान्यादिवस्तुपुत्रपुत्र्यादि परिकरो हस्त्याश्वादिवाहनं चेति वाह्योऽपि भवः सर्वः सचाङ्गुलीनां लक्षणैर्लक्ष्यः स्त्रीत्रोरङ्गुलयः श्रियेइत्युक्तेः जीवस्वभावः सुकृतदुष्कृताचरणादिरूपाः सर्वोऽङ्गूष्ठ लक्षणैर्वाच्य इत्यर्थः ॥६९॥

अथव्यक्ती भवन्ति मासेऽस्य तृतीये गात्रपञ्चकं मुर्द्धाद्धि सक्थिनी बाहु इति वाग्भाट शारीर वचनात्, पूर्वगर्भे पञ्चारसम्भवादङ्गपञ्चकं प्राह—

मूर्द्धाङ्गूष्ठे भूजा युग्मं तर्जनी मध्यमापिच ।
पादावनामिका तारा प्राणीनामङ्गपञ्चकम् ॥ ७० ॥

मूर्द्धेति । उर्द्धीकृतवितस्तिरूपे पुरुषाकारेऽङ्गूष्ठो मस्तकं सूर्याचन्द्रमसो भगवन्नेत्रपद्योस्तत्रावस्थानात् भुजौद्वौ तर्जनीमध्यमा च तयोर्वामा वामत्वं प्रागुक्तम् । अनामिका ताराच पादौ मेषवृषयोश्चतुष्पदराशयोर्मिथुनस्य द्विपदस्य तारायां तथा गोर्यां सिंहस्य चतुष्पदराशेः कन्यायाः द्विपदे राशे र्व्यवस्थिते ॥७०॥

अथशीर्ष मुख्यबाहुकण्ठोदराणि कटिवहास्तिगुह्य संज्ञानि ऊरुजानूजङ्घे चरणाविति राशयोऽजाद्या इतिज्योतिः शास्त्रे भणनात्, अत्रापि द्वादशदेहावयवानाह—

शिरो मुखं तथा कण्ठोऽङ्गुष्ठे भाग त्रयं स्मृतम् ।
जठरं च कटिर्गुह्यं २ तालिकायां त्रयं स्थितम् ॥७१॥

शिरइति । सर्वस्य त्रिभागरूपत्त्वात् पत्यङ्गमालापि भागत्रयं बोध्यम् ॥ ७१ ॥

हस्तयोः पादयोरपि त्रिभागत्वं विशेष ज्ञानार्थमादिशति—

मध्यायांच गवेषण्यां स्कन्धोवाहूश्चकूर्परम् ।
उरूजङ्घे च चरणौ त्रयं गौरी कनिष्ठयोः ॥७२॥

मध्यायामिति ॥ ७२ ॥

एतत् प्रयोजनं—व्याचष्टे—

हस्तरूप स्वकायस्य क्रमादवयवा अमी ॥
शुभाशुभं नृणां चिन्हं घातादिर्येषु लक्ष्यते ॥१४॥

हस्तेति । सर्वोऽपि पुंसः स्त्रिया वा देहः हस्त एव एवदृश्यः तदवयवेषु शुभलक्षणैः शुभमशुभैर्घातपात छेद भङ्गाद्य शुभं विचार्यं शिरसि अङ्गूष्ठाग्र-भागे चक्राव्यवरूप शुभ लक्षणे राज्यं मुखेङ्गूष्ठमध्यपर्वणि विद्यायशः प्रभृति कण्ठे सुस्वर सौभाग्यादिति जठरे भागे पितृरेखा धनरेखयोर्मध्यरूपे धनधान्य सम्पत्तिः कटिभागे धनरेखायूरेखयोरन्तराले भोगः जीवितरेखायाः प्रारभ्य अङ्गुलीनां मूलं यावत् गुह्यभागे स्त्रीसन्तानादिलभ्यं अङ्गुल्याः प्रथम त्रिभागे स्कन्धेवीर्थे भ्रातृलभ्यं बाहुभागे त्रिपुरामध्यपर्वणि स्वजनवणिक् पुत्रादिपरिकिरलभ्यं कूर्परे मणिबन्धान्ते तृतीयपर्वणि व्यवसायलभ्यम् । ऊर्वो-वाहनलभ्यं जंघयोर्ग्रामान्तरलभ्यं चरणयोर्दासीदाससेवकादिलभ्यं वाच्यम् । विरुद्धलक्षणेऽशुभं तत्तद्वस्तु हान्यादि ज्ञेयम् । एषु भागेषु तादृग्लक्षणाऽपरिस्फूर्तौ शिरः प्रभृतिपञ्चाङ्गुलीनां पञ्चदश सुभागेषुशुभोर्ध्वं रेखादिना शुभं अशुभेतद्भागे घातादिविचार्यम् ।तालिका भागत्रयावयवेषु तत्तद्भागस्थरेखाभिरेव शुभाशुभ ज्ञप्तिर्मणिबन्ध करभयोरन्तरे नितम्ब भाग इतीष्टोपदेशान्तस्य शुभाशुभे तत्तलक्षणरेखाभिरिति ॥ ७३ ॥

इति देहचक्रदर्शनम् ॥

अथ देहावयवेषु शुभेऽशुभेवा ज्ञाते भाव चक्रादिना वर्षनिर्णये तत्त-द्वर्षस्थानादङ्गुलिपर्वगणनान्मासनिर्णये दिनचक्रं मन्दधियां दुर्बोधमिति सुखावबोधाय विशेषज्ञा न कारणं हस्त चन्द्र चक्रमाह—

मस्तके त्रयमास्येव कण्ठे भानां त्रयं त्रयम् ।
जठरे च त्रयं देयं शेषाङ्गे द्वौ कटौ चभूः ॥ ७४ ॥

मस्तक इति । त्रयं भानां नक्षत्राणां व्यवस्थाप्यं, उक्ताङ्गादन्यस्मिन् शेषाङ्गे द्वेनक्षत्रे देयं कटौ कटिस्थाने भूरित्येक संज्ञा एकनक्षत्रं धार्यमित्यर्थः ॥ ७८ ॥

स्थानलाभमाह—

आत्मभादिनभं यत्रतत्फलं प्रष्टुरादिशेत् ।
शीर्षे मुखे तथा कण्ठे राज्यं भोज्यं सुखं भवेत् ॥ ७५ ॥

आत्मभादिति । प्रष्टुः करदर्शयितुः श्रद्धावृद्धयर्थं सद्यःप्रत्ययं फलं शुभाशुभरूपं वाच्यम् ॥ ७५ ॥

जठरे गुप्त चिन्तास्याद्गुह्ये भोगो नृपाद्धनम् ।
स्कन्धे जयोऽथ शेपाङ्गे क्लेशो हानिर्भयं भवेत् ॥ ७६ ॥

जठर इति । व्यक्तम् ॥ ७६ ॥

इति देहचन्द्रो ज्योतिर्मार्गे तद्रीत्यैव हस्तचन्द्र चक्रदर्शनम् ।

अथ वर्णादिना करशाखास्वरूपकथनचक्रं निरुपयति ।

अङ्गूष्ठः पञ्चवर्णः स्यात् रक्तपीत सितासितः ।
शत्रुहाद्या हरित्पीते रक्ते पिङ्गःसितेऽरुणः ॥ ७७ ॥

अङ्गूष्ठ इति । पूर्णातिथेराश्रयेण कलापूर्ण चन्द्राश्रयेग चतुः प्रियनाम्नोऽन्वर्थाद्विरङ्गूष्ठस्य पञ्चवर्णत्वं प्रदेशिन्याः शत्रुहननव्यापार्थत्वेन कुजाश्रयाद्वारक्तत्वं मध्यायाः पीतत्वं तत्र हेतुः प्रागुक्त गौर्याशुक्लत्वं कर्कराशिः पाटलः सिंहःपाण्डुरिति राश्योः कविरत्यन्तधवल इत्युक्तः कवेश्चाधिष्ठानात् से आरुणपीय पीयंगुवन्नकसिणा इति नमस्कार स्तवनवचनान्नीलत्वमिश्रमेव शुक्लत्वं समाङ्गुलित्वेन वर्णद्वयात् । तारायाः श्यामत्वं प्रागेव निश्चितं शुत्रुहाद्यास्तर्जनी प्रमुखारक्तादयो वर्णाःस्युः वर्णसाङ्कर्यमाह—हरिद्वर्णपीते पिङ्गवर्णोरक्ते अरुणःसितेन्तर्भवति, एवं यथा योगं वाजिसन्ध्यावस्त्र शालिसुवर्णादिवर्णत्वेन सर्वान् वर्णान् निवेदयेत्, एते वर्णा मुष्टिचिन्तादिवु भाव्या पूर्वं वर्णोक्तिर्भिन्नविषया तन्न पुनरुक्तिः ॥७७

अथेन्द्रियव्यवस्थामाह—

मध्यमा नासिका जिह्वा सावित्री च गवेषणी ।
स्पर्शनं नयनं तारा श्रोत्रमङ्गुलकोमतः ॥ ७८ ॥

---

१ श्रुत्योरङ्गूष्ठकौ मध्याङ्गुल्यौ नाशापुटद्वये इतिविवेकविलासोक्तिस्तच्च लाभाय ॥

मध्यमेति । इन्द्रियेषु आदौ प्राप्यत्वात् तर्जनीत्वगिन्द्रियं नेत्रयोर्मध्यस्थत्या पर्याप्ति लाभे तृतीया नासिका इन्द्रियं मध्या, ब्रह्मपुत्र्याः—सरस्वत्याः प्रसङ्गेन सावित्री जिह्वा तारा कनीनिका नयनेन्द्रियं नामसाधर्म्याच्च तुर्येन्द्रियत्वाच्च, श्रोत्रं स्वमते पञ्चमेन्द्रियत्वात् परमते आकाशरूपत्वात्, अङ्गूष्ठे व्योममूर्द्धगमिति सामुद्रिकमतेऽपि नभः प्रत्यासत्त्याङ्गूष्ठः प्रतिपत्तव्यः अनिन्द्रियं मनस्तदपि सर्वज्ञानाश्रयत्वेन जीवसाधर्म्यादङ्गूष्ठ एव न चैकत्र द्वयं समान जातीयं नोपपद्यते, इति वाच्यम् । मनसः सर्वेन्द्रिय विषयग्राहकत्वेन अनिन्द्रियत्वात् कार्यान्तरे विप्रौ शुक्रगुरू—इत्युक्त्यागुरोर्विप्रत्वेऽपि वणिग् गुरुः कविर्वैश्य इति जातिद्वय कथनेऽपि विरोधाच्च ॥७८

रसानाह—

**अङ्गूष्ठो मधुरो मध्यातिक्ताः कटुप्रदेशिनी ।**
**कषायाऽनामिका चाम्ला कनिष्ठा रसपञ्चकम् ॥ ७९ ॥**

अङ्गूष्ठ इति । अङ्गूष्ठो मधुरः शर्करावत् तत् पाना द्बाल्ये जिनानां योगलिकानां वा वृद्धेरक्षीण लब्धिस्थानाच्च तत एव चन्द्रोऽप्यमृतद्युतिस्तत्रैव । अन्यथा हरीतकीवत्सर्वरसात्मकः । मध्यातिक्ता कोशात् केत्वादिवत्, तदग्रे गुरोर्माधुर्येऽपि केतोः स्थानात् वृश्चिकराशे स्तथा स्वभाव्याच्च प्रदेशिन्याः कटुता कुजार्कौ कटुकाविति भुवनदीपकोक्त्या तत् स्थानात् कटुत्वं शुण्ठ्यादिवत् अनामिका कषायरसा अपक्व कपिच्छादिवत् क्षाराम्लौ चन्द्रभृगुजावित्युक्तेः शुक्रस्थानात्. आम्ला, आम्लवेतसादिवत् कनिष्ठा लघुत्वेन आम्रफलवत् नमस्कारस्तवने—भत्तिभरेत्यादिके अंबिल महुत्तित्त कसायकडुय परमिठिणो वंदे, इत्यंङ्गूष्ठादिन्यासाद्रसाः पञ्चदृश्यन्ते । पाठान्तरे आद्या कटुर्मधुर्मध्या क्षाराम्लानामिका परां तीक्ष्णोङ्गूष्ठः सर्वरस इत्येवं रसपञ्चकम् ॥ १ ॥

परं भूषणकारस्य मतं प्राच्यमेव ॥ ७९ ॥

गन्धव्यवस्था यथा—

---

अतःएव उभयात्मकं मनः ज्ञानक्रियेन्द्रियत्वात्, इति सुश्रुते ।

दुर्गन्धा तर्जनी शुद्धः सुगन्धोऽङ्गुष्ठ ईरितः ।
सुगन्धानामिका किञ्चित् निर्गन्धा मध्यमा लघुः ॥ ८० ॥

दुर्गन्धेति । तर्जनी दुर्गन्धा— अपावित्र्यात्, अत एव पवित्रिका मुद्राया चरणात्तत् पावित्र्य करणमुपन्नम् । अङ्गुष्ठः सुगन्धो भोगिरूपत्वेन विष्णु-लक्षणात्, गन्धा अनामिका, किञ्चित् पूजा करणौचित्यात् भगवत्याः स्वरूपेण गुग्गुलादि सौरभ्यात् किञ्चिदित्युक्तं मध्यमायां निर्गन्धत्वं तद-ङ्गुष्ठकापेक्षं निर्द्धनस्य गृहमित्यादिवत्, अन्यथा वर्तुलाधरत्वेन वैश्यजाति त्वाद्गन्ध सद्भावेऽपि न तद्ग्रहणरवश्यमिति । लघुस्तु शुभ गन्धापेक्षया निर्गन्धा अन्यथाम्लेच्छरूप शनिराहु स्थानात् विरसगन्धितापि ॥ ८० ॥

स्पर्शनाह—

कठोरोऽङ्गुष्ठको गुर्वी मध्यारूक्षोष्णकादिमा ।
कनिष्ठा कोमलालघ्वी लक्ष्मी स्निग्धाहिमाशिवा ॥ ८१ ॥

कठोर इति । अङ्गुष्ठः कठोरोऽङ्गुलीवन्नमनाभावात् रवेः स्थिररूपस्य स्थानाच्च गुर्वी मध्या अध्यक्षासिध्यैव । तर्जनी रूक्षा तन्मूले मृगराशेः रूक्षरूपस्य सद्भावात्

वृषकन्या मृगारुक्षा उष्णाशीताश्चवातुलाः ।
एषां स्वामी दिने शुक्रो रात्रौ चन्द्रः सदाकुजः ॥ १ ॥

इतिश्री हेमप्रभसूरिकृते त्रैलोक्यदीपके ज्योतिः शास्त्रे उष्णत्वमपि तत एव प्रत्येयं दग्धस्थानं कुजे प्रोक्तमिति वचनात् रुक्षोष्णत्वे द्वेऽपि कुजा-श्रयाद्बोध्ये कनिष्ठा कोमलालघुस्पर्शाच्च प्रत्यक्षैव नक्षत्रचक्रे मृदुरूपायाश्चि-त्रायास्थानात् लक्ष्मीः स्निग्धाजल तत्त्वस्थानात् तुला वृश्चिक मकर कुम्भ मीन कर्क वृषाः सजला--आर्द्रा स्निग्धा इति त्रैलोक्य दीपिकोक्त्या तुला वृश्चिकयोराश्रयाच्च शिवाहिमा मार्गशीर्षाश्रयात् वामहस्ते तु चन्द्रप्राधान्येन शुक्रस्य शिवा स्वामित्वेन उभयोर्जल चारित्वाच्च ॥ ८१ ॥

अत्रापि मतान्तरे भोजकृत सामुद्रिके तच्छ्लोकमेवाह—

अङ्गुलोऽत्र गुरुर्लघुः कनिष्ठादिर्लघुर्मृदुः ।
गुरुः खरापुनरुष्णा शीतास्निग्धाति रुक्षका ॥ ८२ ॥

अङ्गुल इति । अत्र शास्त्रे अङ्गुष्ठः अगुरु लघुः सूर्याचन्द्रमसोः स्थिरचररूपयोरवस्थानात् मुर्ध्नि नमो भावात् जीवप्राधान्याच्च कनिष्ठादिरिति । क्रमसूचा तारा लघुः प्रत्यक्षैव सावित्री मृदुः लघुः सुरेज्यो भृगुजो मृदुश्चेति रत्नमाला वचनात् मृदुरूपशुक्राश्रयात् मध्यागुरुः प्रत्यक्षैव गुरोरधिष्ठानात् तर्जनी खराभूतत्त्वात् पुनः कनिष्ठा उष्णा तेजस्तत्त्वात् युग्मं घटस्तुला उष्णा इति त्रिलोकदीपकोक्त्या मिथुन राशेस्तन्मूर्ध्नि सद्भावाच्च शिवाशीता प्रागेव तद्धेतुक्तेः, एवं मध्यास्निग्धा तर्जन्यातिरूक्षा पूर्वमतानुसारा द्वेधा कठोरः स्पर्शः पाषाणादिवत् मृदुर्हंसरूतादिवत् गुरुर्वज्रादिवत् लघुरर्क तुलादिवत् शीतोमृणादिवत् उष्णो वन्ह्यादिवत् सिग्धोघृतादिवत् रुक्षो भस्मादिवत् इति प्रज्ञापनावृत्तौ ॥ ८२ ॥

आकारव्यवस्थामाह—

अङ्गुष्ठो वर्तुलस्त्र्यस्त्राकाञ्चनी च प्रदेशिनी ।
चतुरस्त्राति दीर्घास्या ज्ज्येष्ठा ह्रस्वा शिवा मता ॥ ८३ ॥

अङ्गुष्ठं इति । वर्तुलः वर्तुलौ सौम्यधिषणाविति भूवनदीपकोक्त्या बुधाश्रयात्

मांसलो वर्तुलस्तुङ्गो भुजङ्गमफणोपमः ।
अङ्गुष्ठस्वामिनो वक्ष इव श्रीवत्सलाञ्छितः ॥ १ ॥

इति योगशास्त्रवृत्तौ तथोक्तेश्च तत एव चन्द्रकालानलं चक्रं व्योमाकारं लिखेद्बुधः, इति नरपतिग्रन्थे वर्तुलाकारत्वादङ्गुष्ठे व्योमरूपं विवेकविलासेऽपि स्त्रियाः पादाङ्गुष्ठे दोषायथा अलपवृत्ते नवक्रेण शुष्केण लघुतापि च चिप्पटे नाति रिक्तेन पादाङ्गुष्ठेन दूषितेति । काञ्चनो त्रिकोणा वह्नितत्वात् तर्जनी चतुष्कोणा चतुरस्रौ कुजोष्णग इति तयो स्थानात्. भूतत्व स्थानेन

---

१ 'नमो अरिहंताणं' इति न्यासात् वहकला अरिहंता इति स्तोत्रे ।

भुवोमण्डलस्य चतुरस्राकारत्वात् च । चतुरस्रेणवज्रांक क्षितित्वेन प्रतिष्ठित-मिति तथा एवं भूमण्डले ध्यायेत् सद्वज्रैश्चतुरास्रिते इति चिन्तामण्यादि मन्त्र स्तोत्रे प्रतीतमिदम् । मध्या अति दीर्घा नक्षत्र चक्रेऽश्विन्यादिके पूर्वाषाढाया-शय्या समाना कारायां मध्या मूलपर्वण्यवस्थानात्, तदधस्तलोदग् भाग-नक्षत्रमपि पर्य्यङ्करूपं तादृशमेव । शिवा ह्रस्वा नक्षत्र चक्रे शिवाग्रपर्वणि मूलनक्षत्रस्य क्रुध्यत्केसरिविक्रमतुल्यस्य सद्भावेन गात्रसंकोच लक्षणस्य ह्रस्वत्व स्य प्रतीय मानत्वात् कर्क कन्ययोस्तथा शुक्रेन्दोः स्त्रीग्रहरुपत्वेन पुंसा पेक्षया ह्रस्वत्वस्यौचित्यात् यदुक्तं वाग्भटे शारीरे—' पूर्णा षोडश वर्षा स्त्री पूर्णविंशेण संयुता शुद्धे गर्भाशये मार्गे रक्ते शुक्रे नीलेहृदि ॥ १ ॥ वीर्यवन्तं सुतं सूते तयोर्न्युनाद्व्योः पुनः रोग्यल्पायुरधन्योवा गर्भो भवति नैव वा ॥ २ ॥ सिद्धान्तेऽपि मरुदेव्याः न सपादपञ्चशत धनुर्देहमाने मोक्षगतिस्तेन पुरुषा न्यूनदेह सम्भावनया सांगुलमेति प्राचां ग्रन्थेऽभिहितं तथा प्रज्ञापना वृत्तौः चान्तर द्वीपे स्त्रियः पुरुषेभ्यः किञ्चिदूनोच्छ्राया इति । उनद्वादशवर्षायाः आ प्राप्तः पञ्चविंशतिं यद्याधत्ते पुमान् गर्भः कुक्षिस्थः सविपद्यते ॥ १ ॥ इति-सुश्रुते शारीरे । अत्रान्यदपि अङ्गुलीनां स्वरूपं सामुद्रिक भूषणकारः प्राह—तत्तत्सूत्रेणैवोच्यते तद्यथा—

पित्तमङ्गूष्ठतर्जन्यौ समधातुश्च मध्यमा ।
श्लेप्मरूपाच सावित्री कनिष्ठा वर्तुला स्मृता ॥ १ ॥
कनिष्ठाङ्गूष्ठतर्जन्योधातुरूपा प्रकीर्तिताः ।
अङ्गूष्ठमध्यं सावित्री मूलरूपं निवेदिनम् ॥ २ ॥
मध्याङ्गुष्ठस्य मूलं च जीवरूपं स्वभावतः ।
पर्वणामङ्गुलीनां च ज्ञेयं तत्त्वबलाबलम् ॥ ३ ॥
स्पर्शेऽङ्गूष्ठप्रदेशिन्यौ धातुर्मूलं कनिष्ठिका ।
मध्यमानामिका जीवः सामुद्रिकमते मतः ॥ ४ ॥
द्विपादौ मध्या सावित्र्यौ चतुष्पात्तर्जनी पुनः ।

अङ्गूष्ठोऽपि च तन्मूलं पक्षी सर्प्पस्तदग्रतः ॥ ५ ॥
स्पर्शे मध्यानामिका च ब्राह्मणी क्षत्रियादिमा ।
अङ्गूष्ठमध्यं मूलं च शूद्रोम्लेच्छा कनिष्ठिका ॥ ६ ॥
अङ्गूष्ठाग्रं वैश्यजाति श्चौर्यजाति विनिश्चये ।
भौमादि चक्रे तज्जाते शुभाशुभफलोदयः ॥ ७ ॥
अङ्गूष्ठे वर्तुलं मूलं मध्येस्याच्चतुरस्रता ।
अग्रं स्थूलं कनिष्ठाया दीर्घं मध्यं नखाश्रयः ॥ ८ ॥
अङ्गूष्ठमध्यं गौरस्या- न्नीलं मूलं तदग्रतः ।
मन्दार्कस्य पुष्येण समाकान्तिरुदीयते ॥ ९ ॥
तपस्वी १ नृपति २ विप्रो नखमध्याद्यपर्वसु ।
तर्जन्यङ्गूष्ठकौ स्वर्ण कारौमध्यावणिग् मता ॥ १० ॥
वैश्या सावित्री कनिष्ठा दासरूपामलीमसा ।
मूले विचित्र जातीया स्पर्शे धीरे विचार्यते ॥ ११ ॥
रुप्यं च मौक्तिकं स्वर्णं नखाद्यङ्गूष्ठके त्रयम् ।
मध्यारत्नयुतं स्वर्णं प्रदेशिन्यां त्रपुध्रुवम् ॥ १२ ॥
कनिष्ठाग्रं लोहमयं मूले श्यामाऽस्थिानिमध्यके ।
धातौ प्राप्तेऽपि पृच्छायां स्पर्शान्निश्चियते बुधैः ॥ १३ ॥
देवतावसतिर्मध्याऽङ्गूष्ठाग्रेचजलाश्रयः ।
मध्ये चतुष्पदस्थानमिष्टिकाङ्गूष्ठमूलके ॥ १४ ॥
दग्धस्थानं प्रदेशिन्यां कनिष्ठायां तु वाह्यभूः ।
नक्षत्र चक्रे नष्टस्य स्थानमेवं विचार्यते १५ ॥
अङ्गूष्ठमध्यं मध्या वा तर्जनीपुरुषस्थलम् ।
अङ्गूष्ठाग्रं च तन्मूलं स्त्रीसावित्री कनिष्ठिका ॥ १६ ॥
अग्रं विमध्यमं मध्यं वृद्धमङ्गूष्ठके स्मृतम् ।
बालस्वरूपं तन्मूलं यौवनं तर्जनीमुखम् ॥ १७ ॥

---

१ कनिष्ठापि ।

मध्याकनिष्ठयोरग्रं जीर्णं तारुण्यनामिका ।
सरीसृपः कनिष्ठाग्रे प्रश्नेष्वेवं विमृश्यते ॥ १८ ॥

इत्यादिसर्वशास्त्रान्तरात् ॥ ८३ ॥

अथास्मिन्नधिकारे मङ्गलमप्याह—

**जयाविपूर्वा तारादिर्जयन्ताप्यपराजिता ।**
**आदिनाथस्त्वमृतभुक् अङ्गुष्ठो जगदीश्वरः ॥ ८४ ॥**

जयेति । जया तारा विपूर्वा विजया इत्यर्थः ।

सावित्रीजयन्तामध्या अपराजिताप्रदेशिनी एताभिः सेव्यः आदिनाथः परमपुरुषोनन्तशक्तिरन्तवीर्योनन्ततेजा, अनन्तनामा अमृतं अव्ययं पदं भुङ्क्ते, इदृशः, अङ्गुष्ठः जगत्प्रभुः साक्षात्सामुद्रिके वाक् सिद्धये ध्येयः । तत्तद्देव्यादिसान्निधानात् प्रागुक्तमन्त्रजापन्यासादिषु निरन्तरायतैवेति, एतदुपयोगः । तेनार्हच्छासनमङ्गुष्ठे शैवं बौद्धं च शत्रुहा, मीमांसुर्वैष्णवा मध्या सावित्री सांख्यशासने ॥ १ ॥

कनिष्ठा नास्तिके रात्रेर्भावादग्निप्रभाबलात् ।
दीक्षाभाग्ये विभाव्यैव तेभ्यो लभ्यादिनिर्णयः ॥ २ ॥

अथ दर्शन फलं विवृण्वन् निर्वाहमाह—

**एवं पाणिनिरूपणे वरधियां लोकत्रयी चिन्मयी ।**
**भावो भावनया भवेद्बहुविध प्रश्नप्रकाशोदयात् ॥**
**वाल्लभ्यं विशदार्थ लभ्यमनिशं तेषां विशेषाद्गिरां ।**
**सभ्यानां समुदेति मेधविजयं सारस्य मुत्पश्यताम् ॥ ८५ ॥**

एवमिति । एषां वरधियां वराश्रेष्ठाधीर्येषां यद्वावरे इष्ट प्रार्थने धीर्येषां ते तथा पाणिनिरुपणे— हस्तविलोकने लोकत्रयीभूर्भुवः स्वर्लक्षणातस्या ज्ञानप्राचुर्यभावः भावनयापुनः पुनर्विमर्शेन भवेत् कृतप्रश्नानां गोत्रधनसुखादीनां प्रकाशो यथार्थबोधस्तस्य उदयात् प्रादुर्भावात्, तेषां सभ्यानां सज्जनानां नृपादीनां वाल्लभ्यं इष्टत्वं समुदेति जायते कीदृशं वाल्भ्यं विशदा निर्दोषा येऽर्थाः प्रश्नोत्तराणि तैर्लभ्यं प्राप्यं कस्माद्गिरां वाणानां विशेषात् कि-

कुर्वतां सभ्यानां मेघस्य रसाधिकतया विजयो यस्मिन्-ईदृशं सारस्यं रसेन साहित्यं उत्पश्यतां विमृश्यताम् ॥ ८५ ॥

नित्यं कौमुदमुन्नयन्नयनयोरानंदनः श्रीगुरु—
श्चन्द्रः प्राच्यकुलाचले समुदितस्तज्ज्योतिषाज्यायसा
ख्याति प्राप्तसमुद्रबोधि लहरी मेघोदय श्रीकरी
तस्यां दर्शनमस्तु मौक्तिकफलःप्राप्तेः सतांसम्पदे ॥ १ ॥

**इतिश्री हस्तसञ्जीवनव्याख्यायां सामुद्रिकलहर्यां**
**महोपाध्याय श्री मेघविजयगणिकृतायां**
**दर्शनाधिकारः प्रथमः समाप्तः**

---

## अर्हम्

### अथस्पर्शनाधिकारः

अथ श्लथत्वं मनसो रसोदया-
दपास्यपृच्छासुविकाश्यमुत्तरम् ।
निवेदितुं स्पर्शनमेव दैवत
प्रसादतः सादरमुच्यतेऽधुना ॥ १ ॥

दर्शनादनुक्रमप्राप्तं स्पर्शनमाह—

**स्पर्शनादङ्गविद्यायां तथा फलमुदीर्यते ।**
**तथा वाच्यंफलं स्पर्शादङ्गत्वात् शक्तिशालिनः ॥ १ ॥**

स्पर्शनादिति । सर्वस्यापि सामुद्रिकस्य तथा नासिकास्वरपल्लीपाताङ्ग चेष्टादिनिमित्तानां चाङ्गविद्यान्तर्भूतत्वात् स्पर्शनमावश्यकं दृश्यम् । एतेन करज्ञाने स्पर्शनस्यापिहेतूक्तिः । शक्तिशालिनो हस्तस्येत्यर्थः ॥ १ ॥

यद्यपि स्पर्शने मन्त्रोऽपि वक्ष्यते तथापि सर्वत्र तदयोगात्, यन्त्रं सिद्धमात्रं प्रश्नोत्तरज्ञानाय प्रदर्शयति ।—

सर्वतो भद्रयन्त्रं ताल्लिखित्वा पाणिगर्भके ।
पुष्पैः फलैश्च तत् पूजां कृत्वा मायाः स्पृशेद्बुधः ॥ २ ॥

सर्वत इति । हस्तस्य पञ्चावयवत्वेन पञ्चभूतमयत्वात् सर्वतो भद्रत्वात्, स्वसमयप्रसिद्धं सर्वतोभद्रयन्त्रं सुमुहूर्ते लिखितमेव करे स्थाप्यं पृच्छासमये मुहूर्तातौ नवीनमेवलेख्यम् । सर्वोत्तरमाहात्तम्यात्तस्य यतोहि सर्वस्मिन्नपि विश्वेऽधिको भगवान् सर्वज्ञस्तद्रूपं योगे विश्रान्तं योगेपुनर्मुख्योऽर्हन्नेव कैवल्यात्, यदाह भर्तृहरिः—

एको रागिषु राजते प्रियतमा देहार्द्धहारी हरो—
निरागेषु जिनो विमुक्त ललनासङ्गी न यस्मात्परः ।

नैषधियेऽपि—"सुगत एव विजित्य जितेन्द्रियस्त्वदुरुकीर्तितनूं यदनाशयत्" न चात्र सुगतशब्देन बुद्धः सुष्ठु शोभनं गतं ज्ञानं यस्य स सुगतो जिन इति व्याखानात्, अत एवार्हत मतप्रतीता सामिति शब्देन पञ्चसंख्यापि । तन्मुख्यत्वात्तदुपदिष्ट धर्मेऽपि मुख्यत्वं सिद्धं परतीर्थैरपि नैषधियादिशास्त्रेषु "न्यवेशि रत्नत्रितये जिने नयः सधर्म चिन्तामणिरुज्जितोजया" इत्यादिना तत्तत्कथनात् तीर्थङ्कराहि उत्कर्षतः पञ्चदशकर्म भूमिषु एकस्मिन् समये सप्त्युत्तरशत संख्याः स्युस्तच्छासनस्य सर्वदेवादृतत्वात् युक्तमतिशायि यन्त्रमहात्म्यं तन्यासोऽपि हस्ते षोडशस्वर त्रिंशद्व्यञ्जनद्वादश राशि, पञ्चदश तिथि, नवग्रहा, अष्टाविंशति नक्षत्रषष्टि सम्वत्सरन्यास भावनया सप्त्युत्तरशत संख्या सम्भवादुचित एवेति परमते त्रैलोक्यदीपिकाऽपरनामकं सर्वतो भद्रमत्रग्राह्यम् । तत्रापिस्वरराशितिथिनक्षत्रवासरव्यञ्जनग्रहाणां तावतां न्यासात्, वारग्रहाः सप्तव्यञ्जनानि च त्रयस्त्रिंशत् तत्र यद्यपि

१ अत्र क्षिपं ॐ स्वाहेति वीजाक्षरैः पञ्चसूतसद्भावेन सर्वदेवमयत्वं सप्त्युत्तरशत संख्या लाभात् यदुक्तं सौदर्यलहर्यां क्षितौषट् पञ्चाश ५६ द्विसमधिक पञ्चाशदुदके ५२ हुताशे द्वाषष्टि ६२ एवं मध्यकोष्टे सप्त्युत्तरंशतं जातं ततः चतुराधिक पञ्चाशदनिले ५४ दिविद्वेषहात्रिंशत् १२ मनसि चतुषष्टि ६४ रितिये, इत्यत्रजातं १९० तत्र सप्त्युत्तर शतमुत्कर्षतोऽर्हतां मध्ये विंशविहरमान जिनक्षेपात् सा संख्या १९० यथा दिविद्वेषट् विंशे मन सीति पाठे १७० संख्यैव स्यात् ॥

लभ्यन्ते तथापि वर्णादिकं शनिवदस्यचेति प्राचां वचनात् शनावेव तन्निमित्त कदानाच्चराहुकेत्वोः शन्यन्तर्भावः, तथा ब, व, योरैक्या द्वात्रिंशदेवव्य-ञ्जनानि, अकारस्य पूर्व स्वर मध्ये पठितस्यापि सर्व व्यापक मुख्यत्वादि सूचनाय पुनरूपादानं वस्तुतस्तु रोहिण्या अधस्तन कोष्टके वकार एव नक्षत्र प्रत्यासत्त्यान्यस्त इति सर्वसंख्या मीलने तावत् संख्या प्रतिपत्तेरिति । तद् यन्त्रं पुष्पादिभिः करस्थं संपूज्यमाया अङ्गुल्यः पञ्चापि स्पृशेत् ॥ यन्त्रस्यपङ्क्त्या पञ्चकोष्टात्मकस्य

पञ्चप्रकृतिकं यन्त्रं पञ्चदैवतकं परम् ।
पञ्चाकूटात्मिका विद्या साधकैः साधितातु तत् ॥ १ ॥
अतोऽत्र समता तत्र सर्वत्रैवोपजायते ।
समस्य मध्यमे नास्ति येन वर्णः प्रपूर्यते ॥ २ ॥
ब्रह्मासृष्टिं वितनुते विष्णुः स्थिति करो मतः ।
रुद्रःप्रकुरुतेध्वंस—मीश्वरस्तु पिनाकधृक् ॥ ३ ॥
तैः सदाशिवोऽनुग्रहकरः पञ्चैते देवतामता ।
सदापञ्चकं व्याप्तं पञ्चविंशति कोष्टके ॥ ४ ॥

इति सर्वोत्तमत्वात् त्रैलोक्यदीपकेऽपि यन्त्रगर्भस्थ राशिन्यासादि विष्क-म्भायामयो पञ्चकोष्टात्मक यन्त्र सद्भावाच्च सर्वमेतद्विष्कम्भायामास्यां नव कोष्टात्मकं हस्ते लिखितुं दुःकरं तेन विष्कम्भायामयोः पञ्चकोष्ठात्मकं तद्गर्भयन्त्रं भूर्यादि पत्रस्थं करे स्थाप्यं अन्यद्वा आगामिक प्रसिद्धंयुगां ४ ग ६ नागे ९ ऽथ तिथौ १५ मनौ १४ सूर्ये १२ नगे ७ चन्द्र १ महेशा ११ विश्वे १३ भुजे २ महेमे तत इष्टमेक विशोनितं वाण ५ गुणांशत्य १६ दिक्षु ॥ १ ॥ इति यन्त्र लेखनरीत्या सप्तत्युरशत संख्यास्थानं विधाय अंत पञ्चकोष्टे क्षिप ॐ स्वाहेत्यालेखन पूर्वं सर्वतोभद्रं यन्त्र स्थाप्य-मिति भावः । अत्र स्थापनाद्वयम् ।

---

1 अत अन्तग्रहे सर्व ग्रहन्यासात् प्रान्त्याष्टस्वरैः सर्व स्वरग्रहः यथोत्तरं बलवत्त्वात् । प्रान्ते नृकाराद्यष्टकम् ।

| | | | | |
|---|---|---|---|---|
| नृ | २ | ३ | ४ | नृ |
| १ | ओ | मं नं र. १ | औ | ५ |
| १२ | शु. रि. ४ | श.पू. ५ | भ. चं. बु. | ६ |
| ११ | अ | बृ. ज. ३ | अं | ७ |
| ऐ. | १० | ९ | ८ | ए |

| | | | | |
|---|---|---|---|---|
| ८ | ११ | क्षि | १५० | १ |
| १४९ | २ | प | ७ | १२ |
| क्षि | प | ॐ | स्वा | हा |
| ३ | १५२ | स्वा | ९ | ६ |
| १० | ५ | हा | ४ | १५१ |

अत्र स्पर्शनाधिकारे सर्वतोभद्रचक्रम् १। सामान्यतः पृच्छाचक्रम् । २॥ दिनमान चक्रद्वयं ३–४। सर्वज्ञानचक्रं ५ मासज्ञानचक्रं ६ पक्षज्ञानचक्रं ७ दिनज्ञानचक्रं ८ घटीज्ञानचक्रं ९ मुष्टिज्ञानचक्रं १० गतवस्तु पृच्छाचक्रं ११ निधानलाभचक्रं १२ गर्भपृच्छाचक्रं १३ भोजनादिपृच्छाचक्रं १४ बालादिस्वरचक्रं १५ नाशिकास्वरचक्रं १६ भौमचक्रं १७ व्यञ्जनलक्षणादिज्ञानचक्रं १८ उत्पातादिचक्रं १९ चूडामणिचक्रं २० शकुनचक्रं २१ चेत्येकविंशति चक्राणि विचार्याणि ॥ २ ॥

तत्रादौ सामान्यतः पृच्छाफलमाह—

**ज्ञेया सामान्यतः पृच्छास्त्रिपुरा स्पर्शतोऽखिलाः ।**
**साङ्गुष्ठं विषमाः श्रेष्ठाः समास्तु शोभनाः क्वचित् ॥ ३ ॥**

ज्ञेया इति । साङ्गुष्ठं त्रिपुरा—अङ्गुल्यश्चतस्रस्ता संस्पर्शात् । अत्र मायागृहे यथा योगमित्यादिना अङ्गूष्ठस्याप्युपादानं, तथापि तर्जन्या, आद्येति नामकथनात्; माभूत्तदपेक्षया समविषमव्यवस्थेति शङ्काव्यच्छेदार्थं अङ्गूष्ठेन सहेत्युक्तिः, एतदभिप्रायेणैव विवेकविलासे आवर्तादक्षिणाः शस्ताः साङ्गूष्ठाङ्गुलि पर्वसु इत्याङ्गूष्ठपदोपादानम् । विषमा श्रेष्ठास्तिथिवत्, तर्जन्याः शत्रुहननाद्युपयोगेन सावित्र्या नामग्रहणा योग्यत्वेन प्रागेवस्वरूपभणनात्, अत एवानामिकाङ्गुलिंस्पृशन् दूतो वाग्भटे वैद्यशास्त्रे निषिद्धः । समाक्वचिदेव शोभनाः प्रायो भावितमेतत् मासदिनघटीदर्शनादौ समा इत्यत्र

बहुवचनं वामावामयोः करयोर्द्वयोरपि शकुनादौ सोपयोगत्वसूचकं अन्यथाङ्गुलिद्वयमेव समसंख्याकमिति ॥ ३ ॥

तदेवाह—

**लाभालाभौ सुखं दुःखं जीवितं मरणं तथा ।**
**गमागमौ जयंभङ्ग कार्याकार्ये शुभाशुभे ॥ ४ ॥**
**चतुः प्रियादिक्रमतः स्पर्शात्तञ्चाङ्गुलेरिदम् ।**
**वाच्यं विचक्षणैर्यद्वा तत् कालप्रश्नलग्नतः ॥ ५ ॥**

लाभेति । चतुरिति विषमाङ्गुलिस्पर्शे लाभः समाङ्गुलिस्पर्शे लाभो नास्तीति । एवं सर्वत्र भाव्यम् । अङ्गुष्ठादावप्ययं क्रमः यद्यपिकनिष्ठादिक्रमेऽपि समानमेव विषमसंख्याकत्वं तथाप्यङ्गुष्ठः शीघ्रं लाभादिः कनिष्ठायां विलम्बादिति ज्ञापनार्थम्, तथा सूत्र निबन्धः । इदं च इष्टोपदेशात् प्राप्तं युक्तमपि प्रकरणेऽपि 'पावइलाहालाह'मित्यादि क्रमवचनात्, यद्वा तत्काले प्रश्नलग्नादिविशिष्य लाभादौ पूर्णार्द्धपादोनपादफलवत्तानिर्णेया तल्लग्नं तु प्रागुक्तम् ॥ ५ ॥

स्पर्शाच्छकुने सम्मतिमाह—

**रामचन्द्र घरिलील विलाससीता कष्टसेवौ वनवास ।**
**हनूउका इकवातजणावेलखमगकाज करी घरिआवे ॥ १ ॥**

रामचन्द्रेति । लोकोक्तिरियं तेन चतुरङ्गुलिस्पर्शात्क्रमतः फलमिदं न पुनः समाविषमाद्यपेक्षया केचित्तु रामचन्द्रोऽङ्गुष्ठस्तत् स्पर्शेगमागमपृच्छायां शुभं सीता हलोत्कृष्टाभूः सा चेह खरप्रकृतिस्थैर्यहेतुभूतत्त्वाधिष्ठानात् तर्जनी तस्या स्पर्शे कष्टसेवनमित्यशुभं हनुमानभक्तिभाजनं सामध्याङ्गुली तस्याः स्पर्शे काचिद्वार्ता कार्येऽप्यवान्तरलभ्या शुभेति शेषः, लक्ष्मणकनिष्ठत्वात् कनिष्ठा तस्याः स्पर्शे कार्यसिद्धिरमानिका स्पर्शे मृत्युरेवेति पूर्वोक्तानुसारेणैव व्याख्यान्ति । तत्र मृत्युलक्षणं पञ्चमं फलं शोकहेतुत्वादवाच्यमेवेति नोक्तं—शास्त्रान्तरे तस्याः स्पर्शानिषेधे नार्थाद्गम्यमिति ॥ ६ ॥

सम्प्रति दिनमानं सद्यः प्रत्यय हेतुमाह—

दिनमानमपि ज्ञेयं त्र्यंशस्पर्शेन दुर्दिने ।
या तिथिः सा घटीवाच्या ज्योतिषेऽपि च सम्मतः ॥ ६ ॥

दिनमानमिति । अत्र स्पर्शेऽङ्गुलिमुखनेव योग्यं नतु तदन्ये त्र्यंशा इति यन्त्र स्थापनेन तेषां त्र्यंशानां स्पर्शसम्भवः दुर्दिने मेघान्धकारे सति तत् तत् स्पर्शनाद्दिनमानं ज्ञेयं, या तिथिरिति प्रागुक्ततिथिस्थानरीत्या तावत्योघटिकाः गताः शेषा वा यथावसरं ज्ञेया इत्यर्थः । अत्र दक्षिणे दक्षिणायनमित्युक्तेरितिन्यूनं दिनमानं सूत्रे बाहुल्यापेक्षया संदृब्धं यतो हि दिनमानं न्यूनं षड्विंशनाऽयोर्कपलामृगेस्युरिति वचनात् षड्विंशति घटिकारूपं तदर्द्धे त्रयोदशघटिकारूपे मध्यान्हस्त्रयोदशीतिथिस्थानात् भूतायां मध्याङ्गुल्यां प्रतीयते तेन उत्कृष्टदिनमान समये मध्यान्हात् न्यूनवेलायां कनिष्ठाग्रभागस्पर्शे, एकादशघट्यो गता इति नवक्तव्यं जघन्यादिनमानस्योत्कृष्टदिनमानस्य चान्तरं षड् घटिकाः षड्त्रिंशच्चपलानि तदर्द्धेतिस्रोघट्योऽष्टादशपलानि ताघट्यस्तावान्ति चपलानि, एकादशमध्ये प्रक्षिप्य चतुर्दशघट्यो गता इति वक्तव्यं, एवं सर्वत्र दिनमाने न्यूनाधिकत्वं विचार्यदिनमानं वाच्यमिति भावः ॥ ६ ॥

अत्रार्थे सम्मतिमाह—

एकैका दशकैकविंशति घटी संख्या कनिष्ठाङ्गुली
पूर्वैरङ्गुलिभिर्जनैर्निगदितैर्द्वादिःपरैर्ज्ञायते ।
एकैकेन करस्यपंडितवरैर्बुध्या गिरावागुरो
रेवं रवेन्दुरवी विनापि सततं रात्रिंदिवं प्रोच्यते ॥ ७ ॥

एकैकादशेति । एकः १ एकादशकं २ एकविंशति ३ श्च, आसां घटीनां संख्या कनिष्ठाङ्गुलिपर्वैः कृत्वा पण्डितवरैर्ज्ञायतेपरैर्गौयादिभिः, अङ्गुलिभिः द्व्यादिरपिबोध्यते । द्वौ २ द्वादश १२ द्वाविंशति २२ रपि सावित्र्याः पर्वैः त्रय ३ त्रयोदश १३ त्रयोविंशति २३ रपि मध्यायाः पर्वैः ज्ञेया एवं मध्या तर्जन्यङ्गुलेष्वपि क्रमतो वाच्यम् । अङ्गुलिशब्दः पुंल्लिङ्गः पर्वशब्दोऽकारान्तोप्यस्तीति योगशास्त्रवृत्तौ—किं विशिष्टैः पर्वै जनैर्निगदितैः

उक्तैः स्पर्शाधिकारात् स्पृष्टेरिति यावत् विभागमाहकरस्य करनिष्ठाङ्गुलि पञ्चकस्य तात्स्थ्यात्तद्व्यपदेशात्, एकैकेनपर्वणेति शेषः, मूलपर्वणा एकः मध्यपर्वणा एकादश, अन्त्यपर्वणा एकविंशतिर्घट्योगताः शेषा वा यथावसरं भाव्याः बुद्ध्या वा, अथवा गुरोर्गिरा वाण्या, एवमनेन प्रकारेण खे-आकाशे इन्दु रवीसूर्याचन्द्रमसौ विना तद्दर्शनव्यतिरेकेऽपीत्यर्थः। सततं निरन्तरं रात्रिं दिवं तद्दिनमानं प्रोच्यते। ज्ञात्वा वक्तव्यमित्यर्थः। खेन्दुरवी इति द्वन्द्व-गर्भस्तत् पुरुषः, अत्र पञ्चविंशत्यो घट्यो गताः, यथावसरं ज्ञातास्तदा रात्रिदिनसाम्येशेषाः पञ्च इत्यर्थाल्लभ्यते, उत्कृष्टदिनमाने एकविंशतिर्गतवट्य इति निर्णये शेषास्त्रयोदशेत्यपि बोध्यम् ॥ ७ ॥

अत्रार्थे ज्योतिः शास्त्र सम्मत्या निदर्श्य पुनस्तद्गतमेव मतान्तरमाह—

अङ्गुष्ठादौ विजानियादेक १ दिक् १० तिथि १५ संख्यया।
तर्जनीद्वि २ रसारुद्रा ११ मध्यात्रि ३ सप्त ७ भास्कराः॥
वेदा ४ ष्टर विश्वाः १३ सावित्र्यां पञ्च ५ नंदा ९ चतुर्दश१४।८।
गतशेषाहि लभ्यन्ते दिवारात्रौच नाडिकाः ॥ ९ ॥

अङ्गूष्ठादाविति। एतत्तु प्रायो भावितं प्राक् नन्वत्र वामावामयोरङ्गु-लीनां ताद्रूप्यमेवेति, प्राच्यं मतं दक्षिणहस्ते इदं तु वामे इत्येतद्विवेकेन किञ्चित् फलान्तरं पश्यामः, तथाच नतिथिसंख्यया घटी निर्णयः, पाठत्रयेऽपि विरोधात्, एकेनापि पाठेन दिनमाना निश्चयात् संशयएव अङ्गूष्ठमूल-स्पर्शे किमेकाघटी गताशेषा वाच्या उतपञ्च घट्य इतिकिंञ्च कनिष्ठा मध्य स्पर्शेतिथ्यपेक्षयाषड्घट्यः एकैका दशकैका विंशतिघटीतिवृत्तापेक्षया, एका-दश घट्य इति, एवं विमर्शे जायमाने सम्भावनामात्रविषयं सूत्रमिदमिति चेन्न; तिथ्यपेक्ष्यदिनमानसूत्रं लघुदिनापेक्षं, अङ्गूष्ठादावित्येतत् समदिनरात्रा-पेक्षं, एकः पञ्चदशैवाशा इत्येतदुत्कृष्टदिनमानापेक्षमिति प्रागेव तद्विवेचनात्, अत एव यादृशः समयस्तादृश एव लक्षणविमर्शः फलमपि तादृशमेव यदुक्तं दिगम्बरमतकृतपञ्चसंग्रहग्रन्थे—

भवपच्चइगोसुरणिरयाणं तित्थेविसव्व अंगुत्थो,

गुणपञ्चइ गोणतिरि आणं संखादि चिण्ह भवो ॥ १ ॥

अस्यार्थः, भवप्रत्ययिकोऽवधिर्देव नारकाणां चरमभव तीर्थङ्कराणां च भवति । गुणप्रत्ययोऽवधिर्मनुष्याणांतिरश्चाञ्च भवति, नभोरुपारिशंखपद्मवज्रादि शुभचिन्ह लक्षितात्मप्रदेशस्थः । सर्वांगोत्थः सर्वात्मप्रदेशस्यावधि ज्ञानावरण वीर्यान्तराय कर्मद्वय क्षयोपशमोत्थ इत्यर्थः । द्वादशाधिकारे । तेन साम्प्रतं शंखादि चिह्नेनावधि ज्ञानादिफलं न वाच्यम् । किन्तु राज्यादिकमेव एवं धनविद्याभाग्यादि सकलं फलं; तत्तद्रेखा विशेषैः समयानुगतं मन्तव्यम् । अत कृष्णपक्षे पृच्छायां दिननिर्णयार्थं दक्षिण हस्त एव स्पर्शः कार्यः । तत्र तिथ्यपेक्षादिन घटीमानं विमर्शनीयं तत्रापि उत्कृष्टदिनसमये प्रागुक्त रीत्या निर्णयः शुक्लपक्षो वामहस्त एव स्पर्शस्तस्यैव प्राधान्यात्, तत्र अङ्गूष्ठा दाविति मतं बोध्यम् । एवं दक्षिणोत्तरायणादि समयमपेक्ष्य घटीनिर्णयः ज्योतिः शास्त्रे दिनमानध्रुवाङ्कभेदवदस्यापि भेदप्रतिपत्तेः । एवं च यदा यादृशं दिनमानं तदा तादृग् ध्रुवाङ्क गणनीया शीघ्रं घटीमान ज्ञानं, अन्यथा पुनर्न्यूनाधिकविचारणैवेति सर्वं सुस्थम् ॥ ९ ॥

अथ वर्षज्ञानमाह—

लोके किदृगिदं वर्षं सुभिक्षं वा तदन्यथा ।
भविष्यतीति ज्ञातव्ये कुमारीं परिपूजयेत ॥ १० ॥

लोक इति । प्रभवादीनां वर्षाणां नरपतिजयचर्यायां सांवत्सरं चक्रे सव्यमार्गेण न्यासदत्रापि सव्यमार्गप्रधान वामहस्तेन स्त्रीप्राधान्यात् कुमारीपूजनम् ॥ १० ॥

तद्विधानमाह—

संभोज्य मधुरास्वादैः कुङ्कुमैश्चन्दनैः करौ ।
विलिप्य पुष्पैः सम्पूर्य स्पृश्य स्वचंशास्तदङ्गुले ॥ ११ ॥

संभोज्येति ॥ स्पष्टम् ॥ ११ ॥

वर्षव्यवस्थामाह—

**प्रभवाद्याः समाः सर्वाः कान्चन्याद्यात्रिभागतः ।**
**सम्वत्सरं वर्तमानं व्यवस्थाप्य विलोकयेत् ॥ १२ ॥**

प्रभवाद्या इति । 'वामे माघः कनिष्ठायामिति' वचनात् वामहस्त-कनिष्ठाद्य त्रिभागे प्रभवः संवत्सरस्तत एव क्रमः सर्वः ॥ १२ ॥

एवं करणे फलमाह—

**स्पृष्टे विंशोपके वर्षप्राप्तं तस्य शुभाशुभम् ।**
**वाच्यं नक्षत्र चक्रानुक्रमतो दिग् विचार्यते ॥ १३ ॥**

स्पृष्टे इति । विंशोपके ज्ञातेऽपि वर्षशुभाशुभे दिग् ज्ञानं यस्यां दिशि वर्षमिदं शुभाशुभं वा भावीति तन्नक्षत्र चक्राद्बोध्यम् ॥ १३ ॥

यदि कदाचित्तथा कुमार्याहस्तस्पर्श योगस्तदा ज्ञानकारणमाह—

**यद्वा ताम्रमये पात्रे कौंकुमस्थासकं द्वयम् ।**
**कुमार्याकारयेत्तत्र फलन्यासाच्छुभाशुभम् ॥ १४ ॥**
**क्रूराक्रान्तं दुष्टरेखं यद्वंद दुष्टग्रहे क्षितम् ।**
**सम्वत्सरेण राश्यादि मेलकञ्च विचारयेत् ॥ १५ ॥**

यद्वेति । स्थासको हस्तविम्बन्यासो यो विवाहादिमाङ्गल्ये भित्त्यादौ स्थाप्यस्तस्य युगलं कुमार्याः पार्श्वात् कार्यं तत्र फलन्यासेन शुभा-शुभव्यक्तिः ॥ १४ ॥

भाष्ये—

पुनर्यदि साक्षात्कुमारी हस्तत्र्यंशः स्पृश्यते तदा रेखा विमर्शेन चेदङ्गु-लिस्वरूपमेव विमृश्यम् । एवं साम्प्रतं पञ्च वर्षाणि कीदृशानि भविष्यन्तीति पृच्छायां वर्षज्ञानवत् कुमारी करपूजादि पूर्वं तारादिद्वादश भागा एव स्पृशा यद्वा ताम्रपात्रे तथैव हस्तकन्यासे फलस्थापनात् दृश्या इत्यर्थः, उदाहरणे—अनामिका तृतीय त्र्यंशे एकविंशतितमः सम्वत्सरः सर्व्व जिन्नामा वामे प्रभवादि पञ्चदशवर्ष पूर्णात्प्राप्तः सचानामिकाङ्गुली स्थानात्, किञ्चिद्-शुभेपि, इत्यादि भाष्यम् । विवृत्त्यकथनात् स्पष्टमेव । सूर्योदय इति हस्ते

विमर्शनात्, सूर्यस्योदये प्रातरेव शकुन वीक्षणावसरे यन्नक्षत्रं तद्भूतले हस्तमध्ये दत्वा विलोक्य, अस्मादिवचनात् क्वचिदावश्यके सूर्योदये करवीक्षा प्रागुक्ता । अग्रे देशग्रामपतिगृहपत्यादीनां वर्षजन्यशुभाशुभ ज्ञाने तत्तन्नक्षत्र न्यासविधिर्नरपतिग्रन्थे कूर्मचक्रे तथा दर्शनाद्युक्तः ।

यदुक्तं—

पृथ्वी कूर्मः समाख्यातः कृत्तिकादिर्यमान्तकः ।
देशादिस्वस्वऋक्षादि वक्ष्ये कूर्म चतुष्टयम् ॥ १ ॥
पूर्ववश्चाक्रमालिख्य देशनामर्क्ष पूर्वकम् ।
देशकूर्मे भवेत्तत्र यत्रसौरिः क्षयस्ततः ॥ २ ॥
नागरे नागरं धिष्ण्यं कृत्वादौ विलिखत्ततः ।
क्षेत्रजे क्षेत्र भान्यादौ कूर्यात्कूर्मं यथास्थितम् ॥ ३ ॥

तेन देशभं भूतले दत्वाइत्यादि भाष्यं—

सिद्धं गृहपतेरित्यत्र यदि ध्रुवं धान्यं जयं नन्दं स्वरम् ।
कान्तं मनोरमं सुमुखं दुर्मुखं क्रूरं विपक्षं धनदं क्षयम् ॥ १ ॥
आक्रन्दं विपुलाख्यं तत् षोडशं विजयाभिधम् ।
इत्येकशालि गेहानि विद्या प्रस्तारतः सदा ॥ २ ॥

तैः आक्रान्तं भूज्यमानं दुष्टा आयतादिरूपारेखा यस्मिन्, इति यन्नक्षत्रस्थाने तथा यन्नक्षत्रं दुष्टं ग्रहेणे शन्यादिना दृष्टं वर्षेशत्वात् तदपि वर्षेशा राहुकेत्वार्कि जीवा इति वचनात्, अत्र दुष्टरेखामित्युपलक्षणात् नक्षत्रचक्रे अङ्गुल्यग्रगतादिकमपि ग्राह्यं तद्विमर्शाय तथा देशग्राम ग्रहादीनां सम्वत्सरेण तत्तन्ना मभिर्वर्णोवश्यं तथा तारा योनिश्च ग्रहसख्यतागणोभमेलको नाडी शुद्धिश्च बलिनोऽष्टवै ॥ १ ॥ इति वचनात् राशिमेलकं विमर्शयेत् ॥ १५ ॥

अथ वर्षे वृष्टिज्ञानमाह—

हस्तस्पर्शे क्षणे दैवादाषाढः श्रावणोऽपि वा ।
तदातिर्वृष्टिर्ज्येष्ठादौ न वृष्टिर्मध्यमान्यथा ॥ १६ ॥

हस्तेति । यदा हस्तः पृच्छायां स्पृश्यते तदा प्रागुक्तमासचक्रापेक्षया दैवयोगाद्भावितव्यता वशात्, आषाढः प्राप्यते तदा तद्वर्षे अतिवृष्टिः स्यात्, एवं श्रावणेऽपि ज्येष्ठे न वृष्टिः अन्यथा, अन्येषु अश्विनादिषु मध्यमा-वृष्टिः, भाद्रपदे प्राप्ते कृष्णपक्षे हस्तस्पर्शेमध्यमावृष्टिः शुक्ले तु अति-वृष्टिरिति ॥ १६ ॥

अथमासादि ज्ञानमप्याह—

**एवं मासं तथा पक्षं दिनं वेलाफलं तथा ।**
**भागस्पर्शेन विज्ञेयं ग्रहलग्नविचारणात् ॥ १७ ॥**

एवमिति । कोमासो लोके धान्यादिमहर्घसमर्थतयास्वचक्रपरचक्रभयसु-राज्यसुभिक्षतया सुस्थो दुःस्थो वा भावीति ज्ञातव्ये कुमारी पूजादि प्रागूवत् विधाय हस्तस्पर्शः कार्यो हस्तके फलन्यासो वा अलाञ्जलिस्पर्शेन प्रागुक्ताय नद्वयापेक्षया तत्तदङ्गुल्यां तले वा मासानिर्णयः । यथा ग्रन्थोदाहरणे दक्षिण-हस्तेऽनामिका तृतीयभागस्पर्शे जातेऽनामिकायां मार्गशीर्षो मासः प्राप्त-स्तत्र कुमार्याः शुभलक्षणे लोके मासः शुभोऽन्यथाशुभः; एवं हस्तद्वयेन द्वादशमास शुभाशुभज्ञानं यद्वा कनिष्ठाद्य त्रिभागान्माघादि क्रमेणानामिका तृतीय त्र्यंशे आषाढः प्राप्तस्तस्य कृष्णपक्षे पृच्छायां स एव पक्ष आदिः शुक्ले शुक्लादित्वमतस्तत्रोर्द्धरेखादिशुभलक्षणे शुभत्वमन्यथान्यत्वामिति ममा-स्मिन् वर्षे मासः कः कीदृग् इति पृच्छायां स्पृष्टांशाज्जन्ममासमारभ्य गण-नायां तत्तल्लक्षणे शुभाशुभःवं जन्ममासाज्ञाने स्वनामराशिसंक्रान्तिमासमेव स्पृष्टांशे व्यवस्थाप्य द्वादशमास गण्यन्ते वस्तूनो मूल्यविचारे स्पृष्टांशे तत्त-द्वस्तुनामराशि व्यवस्थाप्य मासा गण्या यत्रोध्द्र्वरेखादि लक्षणं तत्र महर्घता यत्तुविरुद्ध लक्षणं तत्र समर्थता एवं स्थानग्रहयोगाद्यपि भावनीयं ग्रामस्य स्पृष्टांशो ग्रामराश्यादिर्गणना । अन्यस्य वर्षमध्ये मासज्ञानार्थं तद्राशिमेव स्पृष्टांशे व्यवस्थाप्य गणनीयमिति पक्षज्ञाने लोकेकः पक्षोमासमध्येऽपि शुभो-ऽन्यथा वा इतिज्ञेये स्पृष्टांशे विषमे तस्मिन् वैशाखकृष्णपक्षं समारभ्यमाया-द्वादशांशेषु षण्मासान् गणयेत् स्पृष्टांशे समे शुक्ल पक्षं वैशाखस्य व्यवस्थाप्य

तथैव द्वादशमासपक्ष शुभाशुभज्ञानं कार्यं दैवात्कन्याया अप्राप्तौ नैमित्तिकः स्वकरे प्रष्टुर्वाकरे स्पर्शफलन्यासादिना शुभाशुभं वदेत्, तत्रापि शुभमशुभं वा कस्यां दिशिकुतो वा लोकात् कस्याद्द्व्यात्तदा सर्वतोभद्रचक्रे फलन्यासादिग् विमर्शो नक्षत्रानुसारात् ब्राह्मणादिर्लोको बालादिर्वाङ्गुली स्वरूपात् द्रव्यं राशिस्वरूपाद्वाच्यम् । दिनघट्योर्ज्ञाने सर्वलोकार्थं स्पृष्टांशेऽक्षय तृतीयां व्यवस्थाप्य प्राग् उक्तः, दिनदर्शनवत् घटीदर्शनवद्वा सर्वं जानीयात्, स्पृष्टे भागे ग्रहास्तथा मेषादिलग्नं तयोरपि भावनात् ॥ १७ ॥

अथ मुष्टिज्ञानं शास्त्रप्रत्ययार्थमाह—

**स्पृष्टपर्वस्वरुपेण तथा लग्नविचिन्तनात् ।**
**ग्रहस्वरुपमालोक्य मुष्टिज्ञानं निवेद्यते ॥ १८ ॥**

स्पृष्टेति । यस्तृतीतत्र्यंशः स्पृष्टस्तस्य स्वरूपं समविषम धातुमूल जीव तत्तद्राशि नक्षत्र ग्रहस्थिति लक्षणं तथा स्पृष्टभाग स्थानादङ्गुष्ठः पञ्चवर्णः स्यादित्यादिमाया स्वरूपं तथा प्रागुक्तरीत्या दिनलग्नं तत्र ग्रहस्वरूपं निरीक्ष्य मुष्टिज्ञानं निवेद्यत इत्यर्थः ॥ १८ ॥

अथ गतवस्तु ज्ञानमाह–

**नष्टं मे क्वगतं वस्तुः इति ज्ञेये करं स्पृशेत् ।**
**नष्टस्य दिनभं गर्भे दत्वा यद्दिशि वस्तुभम् ॥ १९ ॥**

नष्टमिति । अत्र स्पृशेत् । इति स्पर्शोक्तिरधिकारात् तेन परामृशेत् विचारयेत्, कथमित्याह–यदा नष्टं वस्तुज्ञायते तदादिनभं गर्भे देयं तदनुक्रमेण यस्यां दिशिवस्तु नामनक्षत्रं तस्यां दिशि गतमिति भावः । यद्वा करमिति । करस्यमाया पञ्चकं स्पृश्यं तत् स्पर्शाल्लाभालाभादि प्रागुक्तः सामन्यबोधः गतवस्तुनो दिग् बोधाय नक्षत्रचक्रं विचार्यं नचेन्नक्षत्र चक्रादेव लाभालाभज्ञाने अस्याः पृच्छायाः स्पर्शाधिकारेऽनवसर एवेति ॥ १९ ॥

विशेषाल्लाभालाभज्ञानमह—

**वस्तुभं दक्षिणभागे प्रतीच्यांत्रिपुराग्रगम् ।**
**तदा न लभ्यते वस्तु मेरौप्राच्यांतु लभ्यते ॥ २० ॥**

वस्तुभमिति । वस्तुनामनक्षत्रं दक्षिणस्यां तथा पश्चिमायां तथाङ्गुल्या

अग्रस्थं तदानाप्यते तद्वस्तु शिवायां दक्षिणदिग् भागत्वेन सिद्धान्ते कृष्णपाक्षिकानां बाहुल्यात् लोकेऽपि पितृपतिस्थानत्वात् समुद्रप्रत्यासत्या वस्तुनो दौर्लभ्याच्च तारायां रात्रिप्रत्यासत्तेर्म्लेच्छरूपशनिराह्वोबलाधिक्याच्च मेराविति । अत्र मेरुकथनमङ्गुष्ठे व्योममूर्द्ध्वगमिति वचनात् कापि, उर्ध्वं वस्तुवृतमिति भूतानु सारानष्टस्थान ज्ञापनाय, अन्यथा प्राचीपदे नैव तद्ग्रहात् पौनरुक्त्य स्यात् यद्वा मेरुमध्यदेशः प्रकीर्तित इति मध्यदेशत्वेन मध्यमे न गतं वस्तु इति नाश एव वस्तुनोऽनुपपन्न इति ॥ २० ॥

तदेवाह—

**मध्यमेन गतं वस्तु कष्टाल्लभ्यमुदग्दिशि ।**
**मायाजात्या चौरजाति वस्तुरुपं तु पर्वणा ॥ २१ ॥**

दिन नक्षत्रमेव वस्तुनक्षत्रं तदा वस्तु न गतमिति वाच्यं दिनहस्ततलं प्रोक्तमिति वचनेन दिवसरूपत्वात्, "अनन्त उत्तरा पथ इति वचनात्," कष्टाल्लभ्यमुदग्–दिशि, अत्र तलाङ्गुल्योरविवक्षणात् दिग् भागेनैव लाभालाभविचारः तेन मध्यम शब्देनाङ्गुष्ठ नक्षत्राण्य विज्ञेयानि । माया स्पर्शाच्चौर जातिः पर्वणः स्पर्शाद्धातुमूल जीवादिकं वस्तुद्रव्यं राशिचक्राद्द्विपक्ष चतुष्पदादिरूपं वा ज्ञेयम् ॥ २१ ॥

चौरस्य वयो ज्ञानमाह—

**वयोऽपि च कनिष्ठादेः स्पर्शाद्बालादिकं वदेत् ।**
**भूतपञ्चकतः स्थानं ज्ञायते नष्टवस्तुनः ॥ २२ ॥**

वय इति । पञ्चाङ्गुलिस्पर्शात् कनिष्ठातः प्रारभ्य बालः १ कुमारः २ तरुणः३ पक्को गतार्द्धवयाः४ वृद्धश्चेतिप्रागुक्तवयोपेक्षया चौरोवाच्य स्तत्रापि समे स्त्री; विषमे पुमानिति; स्पृष्टांशः समश्चेत्, स्त्रीवाच्य विषमे पुमान् तर्जनी पृथ्वीत्यादि पूर्वोक्त भूतपञ्चकापेक्षया वस्तुस्थानं बोध्यं अङ्गुष्ठाद्या आकाशवायु अग्निसलिलभूरूपा अङ्गुल्य इति श्री शारदातिलकवृत्तौ । अत्र स्पर्शाधिकारान्नक्षत्र चक्रं विनापि काञ्चनाद्यङ्गुलिस्पर्शादेव दिग् ज्ञानं केचिद्वदन्ति

1 हस्तस्य तलसंस्पर्शे पुन पञ्चदशास्मृता इतिविवेकविलासे पञ्चदाशङ्क संज्ञास्थानात्

जातिवस्तु वयः प्रभृतिवत् केचिदश्विन्यादिनक्षत्रचक्रेणैव दिशा माहुरिति ॥ २२ ॥

अथ भूतपञ्चकमेव तच्च पञ्चकस्थानं तथाचाङ्गुष्ठे व्योममूर्ध्द्वं गमित्वुक्तत्वात्, मेरौ प्राच्यां तु लभ्यते तथा पवने व्योम्नि नाप्यते इत्यनयोर्विरोधः इत्याशङ्क्याह—

**याम्यायाः स्पर्शनेनैव स्थानपञ्चकमिष्यते ।**
**पृथिव्याञ्च जले नष्टं प्राप्यते नापि यत्नतः ॥२३॥**
**शेषमात्रं तु दहने पवने व्योम्नि नाप्यते ।**
**एवं तत्त्वात्तथा लग्नान्नष्टा प्राप्तिर्विचार्यते ॥ २४ ॥**

यामेति । वस्तुनिगते सति लाभनिर्णयाय अङ्गुलिस्पर्शः कार्यः यामङ्लींस्पृष्टा तस्याः तर्जनी पृथ्वीमध्येति प्रागुक्तमभूत व्यवस्थानुसारेण यत्तत्वं तत् प्रभाते लब्धोदयं ज्ञेयं ततोऽनुक्रमात् घटी एक प्रमाण तथा हस्तस्पर्शसमये यत्तत्वं प्राप्तं तत् फलं वाच्यं क्रमस्त्वेवं नरपति ग्रन्थे—

एकैकस्य कलाः पञ्च क्रमेणैवोदयन्ति ताः ।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ १ ॥
मध्ये पृथ्वी अधश्चापः ऊर्ध्वं वहति चानलः ।
तिर्यग् वायु प्रवाहश्च नभोवहति संक्रमे ॥ २ ॥
पृथ्व्याद्यकतत्त्वस्य एकैक घटिकोदयः ।
अहोरात्रस्यमध्येस्यु तेन द्वादशसंक्रमाः ॥ ३ ॥

तेन लग्नादि भोगवत् कालपरिच्छिदलभ्य तत्त्व विमर्शेनाङ्गुष्ठस्य नान्याङ्गुल्यावा उपयोगोयेन तत्तान्निष्ट नक्षत्रैर्विरोधापत्तिः अङ्गूष्ठादौ तत्त्वप्रतिष्टातु. प्रातकालात्तदादिक्रमार्थं गत वस्तुस्थानलाभार्थं च यद्वा नक्षत्र चक्रे अङ्गूष्ठनक्षत्राणां प्राच्यत्वेन मध्यस्थत्त्वेन वा लभ्यते इत्युक्तं—नमस्कारस्तवने—महिमण्डल अरिहंता गयणं सिद्धाय सूरिणी जलणे वरसंवर मुवझाया पवणो मुणीणो हरंतु दुहं, इति वचनात्, पृथ्वीतत्त्वस्याङ्गूष्ठे न्यासात् । अत्रा-

१ याम्यायाः स्पृश्यते तस्या तत्त्वपञ्चकमिष्यते । इत्यपिपाठः

ङ्गुष्ठस्पर्शे व्योमोदयान्न लभ्यते तेन दर्शनस्य दर्शनसूत्रयोर्भिन्न विषत्वान्न-मनागपि विरोधः ।

अथोपसंहारमाह—

एवं नक्षत्र चक्रात् सामुद्रिकोक्तत्वात्—

अथवा—

तिथिवारञ्चनक्षत्रं लग्नं च मिश्रितं त्रिभिः ।
पञ्चाभिस्तुहरेद्भागं शेषाङ्के तत्त्वमादिशेत् ॥ १ ॥

इत्युपाय लब्धतत्त्वात् तथा लग्नानष्टवस्तुज्ञानं स्यादत्रनष्टाधिकारोक्तस्तत्व विमर्शः सर्वपृच्छा सुस्पर्शाज्ञेयः ॥ २४ ॥

अथ निधिलाभ ज्ञानमाह—

**क्वगतञ्चेति पृच्छायां तले हस्तेक्षेणस्यमम् ।**
**संस्थाप्य यत्र मूलं स्यात्तत्रस्यान्निश्चयानम् ॥ २५ ॥**

निधानमिति । निधानं विद्यते तेन वा तदपि प्राप्यं नवेति पृच्छाद्वयं तत्र द्वितीय पृच्छायां वामहस्ते कोशदर्शनात्तथा पितृ रेखायाः पल्लवः कोशं विभिद्य भोगरेखां प्राप्तस्तदा निधि प्राप्तिरस्तीति निश्चयाय हस्ते क्षणं तद्दिन वेला नक्षत्रं स तले स्थापनीयं ततो यत्र मूलं दिग्भागे विदिशिवा पतति, तत्र धनम स्तीति वेद्यं प्रथम प्रश्ने केवले तु कुमार्याः प्रायुक्त विधिना पूजा-दिसंस्कारेण हस्ते ईक्षणं स्पर्शनं ईक्षदर्शनाङ्कयोरिति वचनात् फलन्यासा-दिना अङ्कनं तस्य दिन नक्षत्रं तले संस्थाप्य विलोक्यमिति त्रिवेकः ॥२५॥

तल्लाभयोगमाह—

**क्रूरग्रहेणदृष्टेभे तद्धनं लभ्यते नहि ।**
**सौम्येन लभ्यते क्रूराक्रान्ते नास्तीति निर्णयः ॥ २६ ॥**

क्रूरेति । मूलनक्षत्रे तथा प्रष्टुरात्मनक्षत्रे वाक्रूरेण ग्रहेण सामुद्रिकरीत्या दिनलग्ने ग्रहन्यासेन दृष्टे सति तल्लाभो न साम्प्रतं तथा वामहस्तकोशाद्य भावे तत्रैव न लाभः इति वाच्यम् । सौम्येन दृष्टे सति लाभः क्रूरयुक्ते नास्तीति ॥ २६ ॥

गर्भपृच्छामाह—

**गर्भप्रश्ने करस्पर्शे समाङ्गुल्या तु बालिका ।**
**पुत्रः स्याद्विषमाङ्गुल्यां तलस्पर्शे नपुंसकम् ॥ २७ ॥**

गर्भेति । अङ्गुष्ठादीनां पुंस्त्रीक्रमात् तेनस्तोत्रे पुंसिछिन पुंसियर पुरित बहुसद् वंदणिज्जाणमिति । समत्वं विषमत्वं पञ्चकापेक्षयानाङ्गुलि चतुष्टया-पेक्षया तलस्पर्शस्तुसर्वतोभद्र चक्रे फलन्यासादिना ज्ञेयः । तलस्पर्शकथनात् अङ्गुल्यन्तस्पर्शेऽपि नपुंसकं गर्भच्युतिर्वा ॥ २७ ॥

अथ स्वप्नादिनिमितान्तरमपिनिर्णेनोक्ति ।

**भोजनं किदृशं भोज्यं स्वप्नोवा किदृशो मम ।**
**इति ज्ञेये स्पृशेन्मायां साङ्गुष्ठं सुविचार्यते ॥ २८ ॥**

भोजनमिति । स्पष्टम् । प्रासङ्गिकभोजनपृच्छानिर्णयोपलक्षणादन्यापि मनोधारणा अनया दिशा लक्षणीया ॥ २८ ॥

तदेवाह—

**धातुमूलादिकं वस्तु तथा कामदुघास्थिति ।**
**लग्नाद्ग्रहांश्चविज्ञायवाच्यं सर्वं शुभाशुभम् ॥ २९ ॥**

धात्विति । अत्रस्पर्शनं नैमित्तिकस्य प्रष्टुर्वा तदभिमन्त्रणपूर्वकमेव तद्वि-धिश्चाग्रे वक्ष्यत एव ॥ २९ ॥

अथ स्वरनिमित्ते बालादिस्वरानाह—

**बालकुमारोऽथयुवा वृद्धो मृत्युः स्वराः क्रमात् ।**
**तारादि कामदोग्ध्रीषु गणेशे च व्यवस्थिता ॥ ३० ॥**

बाल इति । अकारादिस्वराः पञ्च तेषामष्टौभिदस्त्विमा । मात्रा वर्णो ग्रहो जीवा राशिर्भं पिण्डयोगजौ ॥ १ ॥

प्रोक्ता नैसर्गिकाद्यष्टौ मात्राद्या नामजाःस्वराः ।
एतेषामुदयान् वक्ष्ये द्वादशाष्टाकालजान् ॥ २ ॥

इति नरपति ग्रन्थे मात्रा – १ वर्ण २ ग्रह ३ जीव ४ राशि ५ नक्षत्र ६ पिण्ड ७ योगज ८ रूपानामस्वरा अष्टपरे कालजाः द्वादशाष्टिकाः

१ वार्षिक २ अयन ३ ऋतु ४ मास ५ पक्ष ६ दिन ७ घटी ८ रूपाश्चाष्ट सम्मीलने षोडशस्वराः प्रोक्ताः । तेभ्यः द्वादशाष्ट स्वरादीनां भुक्तं पलमयं कृतं । तद्भुक्त स्वस्व भागे न लब्धं शेषं द्विकं भवेत् ॥ १ ॥

लब्धे भुक्तस्वरा ज्ञेयाः शेषे चैवोदिताः स्वराः ।
अस्मिन् षष्ट्यादि भक्ते च भुक्त स्वादुदितः स्वरः ॥ २ ॥
उदितस्य स्वरस्यस्युर्नामस्वर वशे नताः ।
पञ्चबालादिकावस्थाः स्वस्वकाल प्रमाणतः ॥ ३ ॥

इत्येवं करणलब्धा बालादयः कलिका स्वभावत स्वरास्तथा—

तिथ्यादावुदयं याति तिथिस्वराद्धटीस्वरः ।
बालस्वरादिकःप्रश्ने फलं तस्य वदाम्यहम् ॥ १ ॥
तिथिभुक्त घटी संख्यां कृत्वा पलमयीं ततः ।
ऋक्षवह्नि ३२७ हृतशेषे स्वरस्तत्काल सम्भवः ॥ २ ॥

इत्यादिना तात्कालिकास्वराः कनिष्ठायां बालः शिवायांकुमारः, इति क्रमाद्राशिग्रहवन्निश्चिताः कोऽर्थः । तत्तदङ्गुलीषु शुभाशुभलक्षणैरेव प्रश्नादिषु तेषां फलदायित्वं ज्ञेयम् । न चेदेकनामत्वे समकालं विवाहादिकर्मणोर्द्वयोः फले विवेकानुपपत्तिः न चात्र नाशिका स्वरकृतोभेदः शङ्कयः तत्तत्कर्मणि तद्भेदे सत्यपि स्वभावादि बहुकालिक पदार्थेषु लक्षणैरेव फलभेदात्, अत एव काम दोग्ध्रीति पदं साभिप्रायं गणेशपदं सर्वार्थलाभात्, नचाङ्गुष्ठे अकारन्यासात् तदादिरेव बलादि व्यवस्था स्थूलदृष्ट्या भाव्या अकारे बालस्वरा नैयत्यात् । अत्र स्वर शब्देन षड्जादि गीतस्वरा अपि कनिष्ठादि पञ्चके तले पृष्ठे च व्यवस्थिता ग्राह्या स्तेषामपि निमित्तत्वात्—यदुक्तं स्थानाङ्गवृत्तौ—

सज्जेण लहइ विग्घं पंचमेण विणस्सई ।
गावोपुत्ताय मित्ताय नारीणं चेववल्लहो ॥ १ ॥

इति तेन कनिष्ठायां शुभलक्षणे षड्जेऽपि विघ्नाभाव इत्यादि फलं ज्ञेयम् ॥ ३० ॥

स्वराधिकारान्नासिका स्वरमप्याह—

या तिथिर्यत्र भागेऽस्ति तमारभ्य ततोबुधः ।
दर्शनात्स्पर्शनाद्वापि गणयेद्गणको त्तमः ॥ ३१ ॥

या तिथिरिति ॥ ३१ ॥

सूर्योदयघटीयुग्मस्थापनानुक्रमात् पुनः ।
रविः शशी च सूर्येन्दुपरि पाटी सितेतरे ॥ ३२ ॥

सूर्योदय इति ॥ ३२ ॥

सितपक्षे शशिरत्री क्रमोऽयं तिथिसङ्गतः ।
कार्यस्ततो यदा हस्तदृष्टः स्याद्धटीका द्वये ॥ ३३ ॥

सितपक्षेति ॥ ३३ ॥

तस्य स्वरस्याभ्युदयो वाच्यः स्पर्शन कर्मणि ।
भागोयः प्राप्यते तस्य स्वरस्योदयमादिशेत् ॥ ३४ ॥

तस्येति ॥ ३४ ॥

भाष्यं च सर्वं स्पष्टमेव विवृत्य कथनात् स्पर्शने दर्शनं साहचर्यात् ।

अथ क्रमप्राप्तं भौममाह—

आद्य प्रभोर्भगवतः पारणाहे दिनोदये ।
यस्य कस्यापि संस्पर्श्यः पाणिर्वाभाग्यशालिनः ॥ ३५ ॥

आद्य इति । भौमे भूमिभागघन सुषिरस्निग्धरूक्षादि ज्ञानं वास्तुशास्त्र ज्ञानं च शास्त्रान्तराद्वेद्यम् । भूकम्पादि ज्ञानाय— आद्यः अर्हतां प्रथमः ऋषभप्रभुस्तस्य पारणाहम् । अक्षय तृतीया पर्वलोके प्रसिद्धं तस्मिन् प्रातःकाले पूर्वोक्त पूजादि विधिना अभ्यर्च्य वाणिज्यकर्तुः पाणिर्देश शुभाशुभ ज्ञानार्थं स्पर्शनीयः अत्राक्षयस्तृतीया ग्रहणं वैशाखे मेष संक्रान्ति सम्भवेन सूर्यस्याश्विन्यादि नक्षत्रचक्रे प्रवेशात् अब्दस्य तत एव प्रारम्भः लोकोऽपि तस्मिन्नेव दिने शकुनादिना वर्षस्वरूपं निर्णयति तत्रापि प्रभातं; प्रभ्रष्टद्युतितारकास्फुटतटीप्राची भवेन्निर्मला किञ्चिद्रक्त विलोहितान्त

१ मेष संक्रान्तेरंशद्वयंव्यतिक्र मेषु शुद्धि अब्दप्रवेशात् ।

धवला देवै सदारं जिता नोवारो न तिथिर्नचापि करणं चन्द्रो न चापीष्यते हित्वादोषसहस्रकं कुदिवसेऽप्यूषा करोत्युन्नतिम् ॥१॥ इति वचनात् प्रशस्तं वणिजः सर्वदेशवस्तुव्यापारेण सार्वत्रिक गमागमयोरवश्यं भावेन सर्वदेशस्थ दुःस्थ तादि ज्ञानस्या न्वेषकत्वादुपादानं कर्शुकादीनां स्वदेश विज्ञाने नै वेच्छा विश्रामात् ॥ ३५ ॥

तत्र विवेकोपायमाह—

गुरुणा भूज्यमानं यन्नक्षत्रं दीयते तले ।
तत्रायाति च यद्देशनक्षत्रं तद्विचार्यते ॥ ३६ ॥

गुरुणेति । गुरुचारेणैव वर्ष शुभाशुभोदयः प्रभवादीनां तच्चार प्रभवत्वात् गुरुण भुज्यमानं यन्नक्षत्रं तत्तलेदेत्वा तत्तस्थानविमर्शः कार्यः । सर्व देशानां प्रागुक्तरीत्या हस्ते व्यवस्थानात् स्पर्शप्रयोजनं मासादि ज्ञानमेव ॥ ३६ ॥

तत्र दोष स्थानमाह—

मङ्गलेन तदाक्रान्त दृष्टं वात्रिपुरान्तरम् ।
तादृशे भूमिकम्पो वा मारिर्वाराजविग्रहम् ॥ ३७ ॥

मङ्गलेनेति ॥ ३७ ॥

शनिना यत्समाक्रान्तं दृष्टं दाक्षिणदिग्गतम् ।
तत्र देशे भयं रोगो दुर्भिक्षं राजविग्रहः ॥ ३८ ॥

शनिनेति कूर्मचक्रादौ शनिस्थानादेव देशानां स्वरूप निर्णयात् ॥३८॥

अथ व्यञ्जनस्यापि अङ्गविद्यैक देशस्य परेभ्यो लक्षणेभ्यो द्विगुणत्रिगुण-शतगुणफलदायित्वात् स्वातन्त्र्येण तत् परिज्ञानं लक्षणशास्त्र सद्यः प्रत्यय हेतुं निरूपयति ।

अनन्तवीर्यस्य पुंसो यवाः प्राग्विनिर्वेदिताः ।
तद्रेखायाः प्रमाणेन ज्ञेयं व्यञ्जनलक्षणम् ॥ ३९ ॥

अनन्वेति । तिलको यत्र यत्र स्यात्तदङ्गे पुष्टिकारणम् ।

मसस्ततः शतगुणः सहस्रगुण लाञ्छनम् ॥१॥

इति प्राचां वचनात् तिलकादिस्थानं निर्णेतव्यम् । तदर्थं—अनन्तवीर्यो हस्तः स एव ऊर्ध्वकृतः पुरुषस्तस्य शिरोमुखं तथा कण्ठ इत्यादिना प्रागुक्ता-अवयवास्तेषु यत्र रेखा स्पष्टतया छिन्ना तस्मितन्नवयवे छेदः भेदे तत्र घातः वेधे तस्मिन् रोगः रेखातनुत्वेतदवयवे दोषः शुभरेखाया एवफलमिदं, अशुभरेकायाच्छेदादौ विपर्ययः ॥३९॥

तदेवाह—

यत्रोर्ध्वरेखा तत्रस्याच्छुभं चान्यत्र नो शुभम् ।

यद्वा राहोः शनेर्वामश्विन्यादिभचक्रके ॥४०॥

यत्रोर्ध्वरेखेति । स्पष्टं यत्र रेखादिना न व्यक्तिस्तत्र—अश्विन्यादिभचक्रं विनस्य यत्र राहोर्नक्षत्रं तत्र घातः, यत्र शनेर्नक्षत्रं तत्र तिलकः, यत्र शनिदृष्टश्चन्द्रस्तत्रमशकः चन्द्रस्वगृहस्थो यत्र तत्र लाञ्छनं कुजगृहस्थे चन्द्रे तत्रावयवे दाहः सूर्यग्रहस्थे चन्द्रे तदवयवेव कुष्ठः बुधग्रहे मशकः, गुरुग्रहे चन्द्रतिलकः, शुभग्रहे—स्फोटः, शनिग्रहे चन्द्रघातः इत्यादि ज्योतिःशास्त्रोक्तोऽनिष्टविचारो वेद्यः । केचित्पुनराहुः—कण्ठादूर्ध्वं ललाटं यावत्तिलके दृश्यमाने गुह्यप्रदेशेऽपि तिलको निश्चयाज् ज्ञेयः । अत एव व्यञ्जनस्यापि लक्षणत्वात् लक्षणसाहचर्येणोक्तिः ॥३०॥

पुनर्मतान्तरेण विचारमाह—

तारादिद्वादशांशेषु यत्र तत्राशुभं दिशेत् ।

प्रागुक्तावयवापक्षं शुभं तु गुरुभे स्मृतम् ॥४१॥

तारादीति । कनिष्ठामूलपर्वणः समारभ्य द्वादशत्रिभागेषु द्वादशावयवापेक्षया, अश्विन्यादि चन्द्रचक्रे राहोः शनेर्वा, उपलक्षणात् मङ्गलसूर्यकेतूनां नक्षत्रं पतति, तदवयवे अशुभं ज्ञेयम् । शुभं लांछनचक्रादिलक्षणं नीरोगत्वं

१ बाहौ भ्रातृसहाय्यं पृष्ठे पुत्रप्राप्तिः गुह्ये स्त्रीभोगः पादयोर्वाहनलाभ, इत्यादि स्थानफलम् ।

वा गुरोर्नक्षत्रे प्राप्ते स्मृतं कथितं पुराणैः । अनेन शुभाशुभलक्षणस्यापि तत्तद्ग्रहभावनया तत्तदवयवेषु व्यक्तिर्मन्तव्या भौमादिसाहचर्यादत्रैतदभाव कथनं न पुनस्पर्शात्तस्याऽप्रयोजनात्, न चैवं लक्षणस्यापि लक्षणेऽनवस्था निमित्तानिमित्तान्तरस्य प्रत्ययात् शुभाशुभज्ञप्तिमात्रेण विश्रामात् ॥ ४१ ॥

उत्पात ज्ञानमाह—

यत्र राहु समाक्रान्तं देशभं तत्र सम्भवेत् ।
उत्पातो विग्रहोघोरा श्चक्रमस्य तु भौमवत् ॥ ४२ ॥

यत्रेति । गुरुभुज्यमाननक्षत्रस्य तलेन्यासादिना यद्देशनक्षत्रंदेशपति नक्षत्रं वा राहुणा, आक्रान्तं तत्रोत्पातः राजयुद्धादिः ॥ ४२ ॥

मतान्तरं पुनराह—

यद्वा कनीनिकापूर्वं त्र्यंशाद्वत्सरसंस्थितौ ।
यत्र वर्षं वर्तमानं तत् स्थानेन विचार्यते ॥ ४३ ॥

यद्वेति । वामहस्तकनिष्ठा मूलपर्वणः समारभ्यः प्रभवादीनां पूर्वोक्तरीत्या गणनया यत्र वर्तमानं वर्षं समायाति, तत् स्थानं राहुणा शनिनान्येन वा क्रूरेण राशिस्थानरूपेण विद्धं तदा तत्र देश उत्पातः स्पर्शान्मासादि ज्ञानं व्यक्तमेव ॥ ४३ ॥

अष्टम निमित्तमाह—

वर्षमासायनतिथि लग्नधिष्ठ्य विमर्शनम् ।
ग्रहाद्ये पूर्वमेवोक्तमन्तरिक्षं निरीक्ष्यते ॥ ४४ ॥

वर्षेति । अत्र आन्तरिक्षं गन्धर्वनगरादि तस्मिन् जातेकत्वज्ञानं भौमचक्रवत् गुरुभुज्यमान नक्षत्रस्य तले दानात्, 'यद्दिने गन्धर्वनगर तारापात-भूकम्पचन्द्रसूर्यपरिधिप्रमुखं जातं तद्दिन नक्षत्रं चेत् सर्वतोभद्र त्रैलोक्य दीपिके क्रूरग्रहाविद्धं तदा तन्नामदेश ग्रामवस्तु राजपीडादितत्तन्नक्षत्रादि शिविग्रहा नक्षत्र चक्रेण लभ्यते यत्पुवनर्वर्षादिज्ञानं तद्दर्शनाधिकारे पुरुषाप पेक्षया प्रागेवोक्तं लोकापेक्षया स्पर्शेणोक्तमिति न पुनरुच्यते ॥ ४४ ॥

अथ सर्वे निमित्तान्युक्त्वा स्वरविशेषञ्चूडामणिशास्त्रं शकुनशास्त्रं चेति तदुभयमाह—

**विज्ञेया अ इ उ ए ॐ स्वराङ्गुष्ठतः क्रमात् ।**

**अङ्गुष्ठो उत्तरो लघ्वी अधरा नामतो मता ॥ ४५ ॥**

विज्ञेया इति । अ इ उ ए ओ एते पञ्चापि स्वराः स्वर शास्त्रमूलं चूडामणि शास्त्रस्य जीवितं सर्वव्यापकतया बोध्याः ।

यत उक्तं—

स्वरादि मातृकोच्चारो मातृव्याप्तं जगत् त्रयम् ।
तस्मात् स्वरोद्भवं सर्वं त्रैलोक्यं स चराचरम् ॥ १ ॥ इति ।

तत्राङ्गूष्ठे अ,स्वरः, नरपतिग्रन्थे अ स्वरः कृष्णपक्षेशइत्युक्ते दक्षिणकरे तदौचित्यात्, इ, स्वरस्तर्जन्यां, आश्विनमासस्थानात्, समाङ्गुल्यामाद्यत्वात्, उ, स्वरोमध्यायां ग्रहस्वर चक्रे धनुः प्रभुगुरोरवस्थानात्, ए, स्वरो गौर्यां शिवस्थानात्, शुक्राधिष्ठानाच्च, ओकारकानिष्ठायां दिनलग्ने मृगकुम्भयोरवस्थानात्, शनिस्वामिकत्वाच्च। वामहस्ते चैतद्विपर्ययः । अस्वरः काञ्चन्यां नन्दास्थानात्, राशिचक्रेमेषस्थानाच्च, इ, स्वरसाविञ्यां राशिचक्रे कन्याकर्कऽयोः स्थानात्, उस्वरो मध्यायां, चैलस्थानात् जयातिथि सद्भावाच्च एस्वरस्तर्जन्यां रिक्ताख्यानात्, ओ स्वराङ्गूष्ठे पूर्णातिथिसंज्ञत्वात् परब्रह्मरुपत्वाच्च, अत्र अकारादिस्वराणां अधिगादिज्ञानाय यन्त्र स्थापना ।

अथ स्वरान् व्यवस्थाप्य चूडामणिशास्त्रस्यावकाश दानाय तदुक्ताः संज्ञानिवेशयान्नाह— अङ्गूष्ठ उत्तर संज्ञः उत्तराक्षरेषु— आ । इ । ए । ओ । क । ग । च । ज । ट । ड । त । द । प । व । य । ल । श । स एतेषु पुंसज्ञेषु दिनात्मकेषु पृच्छायां जिवात्मकेषु रविणाधिष्ठितेषु । शीघ्ररूपेषु । द्विजवर्णेषु । वालावस्थितेषु रक्तश्वेतपीतवर्णेषु वर्तुलाकारेषु पश्चिमदिग् लक्षणेषु

१ ए स्वरे ग्रहस्वरचक्रे शुक्रोऽधिपः । वायुगता इच्छापि तेनगौर्यां वायुतत्त्वव्यवस्था ।

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| ब्रह्मा | विष्णुः | रुद्रः | सूर्य | चन्द्रः |
| निवृत्ति प्रतिबंधक | प्रतिष्ठा शुभं | विद्या | शान्तिः शिवः | अतिशान्ति- मोक्षः |
| इच्छा भूमिगत | ज्ञानं जलगत | प्रभा अग्निगत | श्रद्धा वायुगत | मेधा. ऊर्ध्व अध आकाशतः |
| गन्ध द्रव्य | रस | रूप | स्पर्श | शब्द |
| बाल किंचित् कलं | कुमार अर्दकलं | युवा पूर्णकलं | वृद्ध सूर्यांशकलं | मृत्यु हानिकलं |

मुख्यस्य अस्वरस्य व्यवस्थानात् कनिष्ठा अधरा शब्दान्वर्थात् पृच्छायां काञ्चनीत्यभिधया धातुप्रतीतेश्च अधराक्षराणि चामूनि। आ। ई। ऐ। औ। ख। घ। छ। झ। ठ। ढ। थ। ध। भ। र। व। ष। ह। स्त्री-संज्ञानि मासाः। धातुः। चन्द्रोविलंबसिद्धिः। रुद्रः। मध्यं वयः। हरितपाटलचित्रवर्णाः। समभावः पूर्वउत्तरादिशौ एतत् स्वरूपाणि ॥ ४४ ॥

**आलिङ्गितानामिका स्यान्मध्यमा त्वभिधुमिता।**
**दग्धा प्रदेशिनी तासांफलं चूडामणौ स्फुटम् ॥ ४६ ॥**

आलिङ्गितेति। ह्रस्वमात्रालिङ्गितास्याद्दीर्घा चैवाभिधूमितेति वचनात् सामुद्रिकेऽपि अतिदीर्घस्याज्ज्येष्ठा ह्रस्वाशिवा मता, इति प्रागुक्तस्वरूपेण शिवाया मध्यायाश्च तथात्वं प्रदेशिनी दग्धा, दग्धंस्थानं कूजे प्रोक्तमिति जोतिः शास्त्रात् तन्मूले मृत्युरेखास्थानाच्च दग्धाक्षराणि। उ। ऊ। ऋ। ॠ। ऌ। ॡ। अं। अः। ङ। ञ। ण। न। म। नपुंसकसंज्ञानि। स्वरोदये तेषां द्वावन्तिमौ त्याज्यौ चत्वारश्च नपुंसकाः। इत्युक्तत्वात्; वर्ष-रूपाणि चिन्तायां मूलानि स्वरे सुषुम्ना रूपाणि अतिविलम्बः सिद्धौ संशयः। अन्त्य–जातीय–वृद्ध–असम–ऊर्ध्वाऽधोदिक् एतत् स्वरूपाणि वर्णतः श्यामधूसरमलिनानि तासां संज्ञानां फलं चूडामणिशास्त्रे सविस्तरं किञ्चिद-त्रापि. उच्यते। तत्र प्रथमं रुद्रया मलात् शिवोक्तः प्रश्नविधिः। आदावे

कान्ते गोमयेन मण्डलं कृत्वा गणपतिब्रह्मविष्णुरुद्रादित्यानां स्थापनमन्त्रविधिवत् विधाय स्वेष्टदेवतां ध्यात्वा हृदये प्रश्नं प्रकाश्य प्रच्छकोयावदागच्छे तावद्गणकस्त्वेनं मन्त्रं निश्चलचित्तो जपेत्, पश्चात् प्रष्टाऽतिभक्तिभावयुक्तो मौनमालम्ब्य गणकसमीपेत्वागत्य सुवर्णताम्बूलपूगीफलहस्तश्चन्दनपुष्पादिभिर्गणकं भचक्रं चाभ्यर्च्य किञ्चित् फलनामोच्चरेत् । अथ गणकस्तं प्रश्नंसावधानतयावधृत्य लिखेत्, पश्चात् स्वराक्षरविचारं पिण्डं कुर्यात् तत् काल वहमानं स्वरं चिन्तयेत्, तात्काललग्नग्रह नवांशान् स्पष्टतयास्थापयेत् इति यामलोक्त प्रश्नविधिः ।

ऊर्द्ध्वेदृष्टिर्भवेज्जीवस्त्वधोदृष्टिश्चमूलकम् ।
समावालोकानेधातुरिती ज्ञेयंतु सुस्थिरैः ॥ १ ॥
उत्तराक्षरकैः प्रश्नोनिश्चितं सिद्धिदायकः ।
अधरैरक्षरैः प्रश्नो विलम्बात्सिद्धिकारकः ॥ २ ॥
दग्धाक्षरास्तुपृच्छायामवश्यं कार्यं नाशकः ।
प्रश्नकाले सुषुम्णा चेत् सिद्धिर्नस्यात्कदा च न ॥ ३ ॥
मन्दार्केज्यकुजेवारे रवौ याम्यापरस्थितः ।
प्रत्यक् कपाले यः पृच्छेत् तस्यसिद्धिः करे स्थिता ॥ ४ ॥
बुधशुक्रेन्दुवारे ग्लौर्वहति प्रागुदक् स्थितः ।
प्राक्कपाले तु यः पृच्छेत्तस्यसिद्धिर्भवेद् ध्रुवम् ॥ ५ ॥
आधिक्यं यस्य वर्णस्य प्रश्नमध्येतु दृश्यते ।
ताञ्च चिन्तां विजानीयात् आद्यवर्णानुसारतः ॥ ६ ॥
ह्रस्वा मात्रालिङ्गिताच दीर्घाचैवाभिधूमिता ।
उ ऊ अं अः स्वरमात्रा दग्धाः प्राज्ञैः प्रकीर्तिताः ॥ ७ ॥
आलिङ्गिते सदा ज्ञेयं चन्द्रादिकमनुक्रमात् ।
प्रश्ने वा समये ज्ञेया लिङ्गिताङ्काः सदाबुधैः ॥ ८ ॥
स्वरवर्णप्रमाणं च स्ववर्गगुणितं मिसथसः ।
पञ्चहीनैर्भवेद्राशिः पिण्डसंज्ञः स उच्यते ॥ ९ ॥
इत्यालिङ्गितचक्रस्थापना——

| | | | | | |
|---|---|---|---|---|---|
| अ | आ | इ | ई | उ | |
| १ | २ | ३ | ४ | ५ | |
| ऊ | ऋ | ॠ | ऌ | ॡ | |
| ६ | ७ | ८ | ९ | १० | |
| ए | ऐ | ओ | औ | अं। अः | १ |
| ११ | १२ | १३ | १४ | १५।१६ | |
| क | ख | ग | घ | ङ | |
| २ | ३ | ४ | ५ | ६ | |
| च | छ | ज | झ | ञ | |
| ३ | ४ | ५ | ६ | ७ | |
| ट | ठ | ड | ढ | ण | |
| ४ | ५ | ६ | ७ | ८ | |
| त | थ | द | ध | न | २ |
| ५ | ६ | ७ | ८ | ९ | |
| प | फ | ब | भ | म | |
| ६ | ७ | ८ | ९ | १० | |
| य | र | ल | व | ० | |
| ७ | ८ | ९ | १० | ० | |
| श | ष | स | ह | क्षः | |
| ८ | ९ | १० | ११ | १२ | |

इत्यालिङ्गितचक्रम् ।

| | | | | | |
|---|---|---|---|---|---|
| अ ४ | आ ५ | इ ६ | ई ७ | उ ८ | |
| ऊ ९ | ऋ १० | ॠ ११ | ऌ १२ | ॡ १३ | |
| ए १४ | ऐ १५ | ओ १६ | औ १७ | अं १८ अः १९ | |
| क ५ | ख ६ | ग ७ | घ ८ | ङ ९ | |
| च ६ | छ ७ | ज ८ | झ ९ | ञ १० | |
| ट ७ | ठ ८ | ड ९ | ढ १० | ण ११ | |
| त ८ | थ ९ | द १० | ध ११ | न १२ | ३ |
| प ९ | फ १० | ब ११ | भ १२ | म १३ | |
| य १० | र ११ | ल १२ | व १३ | ० | |
| श ११ | ष १२ | स १३ | ह १४ | क्षः १५ | |

इत्यभिधूमितचक्रम् ।

| | | | | |
|---|---|---|---|---|
| अ ८ | आ ९ | इ १० | ई ११ | उ १२ |
| ऊ १३ | ऋ १४ | ॠ १५ | ऌ १६ | ॡ १७ |
| ए १८ | ऐ १९ | ओ २० | औ २१ | अं २२ आः २३ |
| क ७ | ख ८ | ग ९ | घ १० | ङ ११ |
| च ६ | छ ७ | ज ८ | झ ९ | ञ १० |
| ट ५ | ठ ६ | ड ७ | ढ ८ | ण ९ |
| त ४ | थ ५ | द ६ | ध ७ | न ८ |
| प ३ | फ ४ | ब ५ | भ ६ | म ७ |
| य २ | र ३ | ल ४ | व ५ | ० |
| श १ | ष २ | स ३ | ह ४ | क्ष ५ |

इतिदग्धाक्षरचक्रम् ।

वेदादिक्रमतो लेख्या अवर्गादिक्रमात्सुधिः ।
वेला प्रश्ने सदा ज्ञेया अभिधूमितसंज्ञके ॥९॥
वर्णराशिहतावर्णाः सर्वमात्रा समन्विताः।
वर्णसंज्ञा पुनर्योज्या पिण्डसंज्ञ स उच्यते ॥१०॥

इत्याभिधूमितचक्रम् ॥

दग्धः प्रश्नो यदादृष्टी हीनाङ्का गृह्यते तदा ।
वस्वादिचन्द्रतो यावत् एकह्रासात्ततो भवेत् ॥११॥
प्रश्नोहीनाक्षरै र्ग्राह्यः प्रश्नामात्राहतस्तथा
श्रेणीसंज्ञा पुनर्योज्या पिण्डसंज्ञा स उच्यते ॥१२॥

एवं पिण्डं कृत्वा—

उत्तरेदेयमेकं तु हेयमेकं तथाधरे ।
दग्धेपिण्डान्तथातस्मात्त्रित्रयं पातयेत् पुनः ॥१३॥
पिण्डाङ्कं तु द्विधास्थाप्यं त्रिभिर्भागं समाहरेत् ।
शेषेजीवस्तथा धातुमूलं चैव क्रमाद्वदेत् ॥१४॥
लब्धं मूले विनिक्षिप्य चतुर्भिभागमाहरेत् ।
द्विपञ्चतुपदीऽपादस्तथावैपादसङ्कुलः ॥१५॥
क्रमाज्जीवास्तु विज्ञेया लब्धं मूले विनिक्षिपेत् ।
कराभ्यामाहरेद्भागं शेषे मनुजपक्षिणः ॥१६॥
मनुजे पञ्चभिर्भागो ज्ञेयोवर्णक्रमेण तु ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैवान्त्यजस्तथा ॥ १७ ॥
लब्धं मूले विनिक्षिप्य वन्हिभिर्भागमाहरेत् ।
नरोनारी तथा षण्ढः क्रमाज्ञ्ज्ञेयो विचक्षणैः ॥ १८ ॥
गौरश्यामस्तथा मध्यो दीर्घश्चमध्यह्रस्वकः ।
शिशुर्युवातथावृद्धास्त्रिभिर्भक्तैः प्रजापते ॥ १९ ॥

इति मनुष्यभेदाः

———

एवं पक्षि चतुष्पदद्विपदबहुपदानां भेदः स्वर्गमृत्युपातालभेदः । इति जीवभेदाः ।

अथ धातुभेदाः—

घातुचिन्तायदादृष्टा द्वाभ्यां भागं समाहरेत् ।
एक शेषे धाम्यधातु रधान्यः शून्यशेषतः ॥ २० ॥

इत्यादि विशेषोग्रन्थान्तरात् श्रीपार्श्वचन्द्रसूरिकृत हस्तकाण्डादेः किञ्चित् फलं प्रागप्युक्तम् । स्पर्श प्रयोजनमत्र तत्तदङ्गुलि पञ्चकस्पर्शे तत्तदुत्तरादि प्रश्नानां प्राबल्येन पृच्छा शुभाशुभनिर्णयः सामान्याद्विशेषस्तु अङ्गुल्यंश-स्पर्शे उत्तराधरदग्धालिङ्गिताभिधूमित संज्ञापञ्चकनिवेशात् पञ्चदशभागेषु पृच्छादि फल ज्ञानाय मन्तव्यः ॥ ४६ ॥

अथ— तिथिधिष्ण्यं च वारश्च लग्नग्रहबलंस्तथा ।
पञ्चानामपि सर्वेषां शकुनोदण्डनायकः ॥

इति तथा शकुनं च बृहस्पातिरित्यादि शास्त्र वाक्यात् मुख्यस्य शकुनस्योप-देशेनाधिकारं सं वृण्वन्नाह—

**लक्ष्मीस्यात् पोतकी[1] राजाभषणोऽनामिका शिवा ।**
**कनिष्ठापिङ्गलाकाकः प्रदेशिन्यां व्यवास्थितः ॥ ४७ ॥**

लक्ष्मीरिति । पोतकीति शाकुनिकभाषा प्रसिद्धा श्यामादुर्गादेवी चेष्टासुचा-पल्याधिक्येन तत्तच्चेष्टाभिः शकुनविशेष ज्ञानेन लक्ष्मीप्राप्तेर्लक्ष्म्याङ्गुल्यां-तस्या व्यवस्था राजाङ्गुष्ठस्तस्यवटस्वरूपेण यथाधिष्टानात् कुर्कुरः । शिवा शृगाली नाम्ना ताद्रुप्यात्सावित्री कनिष्ठापिङ्गला काञ्चनरूपत्वापिङ्गला भैरवी । काकःतर्जनी दुर्गन्धरूपत्वात्, अत्र कनिष्ठा दुर्गामध्यभैरवीति हस्तबिम्बदुर्ग-बोधादौ दृश्यते । तथापि भूषणकारमते ज्येष्ठा दुर्गाकनिष्ठा स्यात् पिङ्गलारालि-सङ्गमात्, इति वचनात्तथा व्यवस्था ॥ ४७ ॥

---

१ अस्या गौरवात् पौतक्याः शकुनेषु मुख्यत्वं श्यामादिकानामिति शकुनशास्त्रे कथनात् ।

अथैतद्विधिमाह—

शकुने क्षणे वेलायां संयोज्य पाणियामलम् ।
अञ्जलिं मन्त्रयेन्मायां मुखेन्यासेन साङ्गुलम् ॥ ४८ ॥

शकुन इति । प्रभाते सन्ध्यायां यथा योगं शकुनावसरेवा नैमित्तिकः शकुनद्रष्टा अञ्जलिंसंयोज्य सिद्धान् प्रणम्य पूर्वं मन्त्रन्यासं मायापञ्चके कुर्यात् ॥ ४८ ॥

तमेवाह—

अं नम ईं नमश्चाग्रे ऊं नमस्तत ऐँ नमः ।
अं नमो त्रिष्णु तो ज्ञेयः क्रमोन्यालेऽभिमन्त्रणे ॥ ४९ ॥

अं नमः इति । इत्थमेव स्वरन्यासात् विष्णुतोऽङ्गूष्ठादित्यर्थः ॥ ४९ ॥

वामावामशकुनविमर्शं प्राह—

शाखादशक्रसंस्पर्शात् वामावामविमर्शतः ।
क्षेमपूर्वं विदेल्लाभं ज्ञात्वा शकुनपञ्चकम् ॥ ५० ॥

शाखेति । यामङ्गुलिं दक्षिणे वामे वा हस्ते स्पृशेत् परस्तदा पूर्वं वामस्पर्शे क्षेमं तदनुदक्षिणस्पर्शे लाभं जानीयात् शकुनरत्नपञ्चकं स्वरूपेणावधारयन् शाकुनिक इत्यर्थः ॥ ५० ॥

शकुनपञ्चकेऽपि बलाबलयोगमाह—

स्थानं चेष्टा तथा वेलाबलापरस्परम् ।
प्राज्ञः शकुन शास्त्रेण रत्नपञ्चकतो वदेत् ॥ ५१ ॥

स्थानमिति । सरसानिरसपुष्पितपत फलित वृक्ष पाषाण भस्म निम्नोन्नतादिस्थानं चेष्टामुखाद्यवयव चालनं वेलादिनरात्रि सन्ध्यादिः एभिर्यद् शकुनस्य बलसहितं अबलं बलाबलं मध्यपदलोपी समासः तत् शकुनशास्त्रोपदेशेन रत्नपञ्चकात् ज्ञात्वा वदेत् फलमिति शेषः ।

अथ प्रभाते वाम कनिष्ठा स्पर्शे कार्यं निषिद्धं पिङ्गलस्थानात् सन्ध्यायां दक्षिणकनिष्ठा स्पर्शेति इति भावः । एवमत्रापि शुभाशुभ स्थानादि विचार्य धनपृच्छायां पोतकी बलवती धर्म कार्ये राजा बलवान् दिनोदये राजाभषणः

मध्यान्हे पोतकी सायं पिङ्गला, रात्रौ शिवा इत्यादि ॥ ५१ ॥

अथ पुस्तक शकुनान्वीक्षणमप्याह—

तारादिक्रमतश्चैकं द्विकत्रिकं चतुष्कम् ।
त्रिवारस्पर्शनाद्बोध्या हस्ते पाशक केवली ॥ ५२ ॥

तारादीति । स्पष्टं । नन्दादि पूर्वोक्तमायास्वरूपक्रमादेवमेकाद्यङ्क-न्यासः । पाशकस्य चतुष्कोणत्वेनमाय।चतुष्टय मेवात्र प्रयोजकम् ॥ ५२ ॥

अथ हस्तस्पर्शे मन्त्रमाह—

प्रणवः शुक्रपाणीति दिने स्वाहेति मन्त्रतः ।
अभिमन्त्र महाब्रह्म स्पर्शनं ज्ञानसाधनम् ॥ ५३ ॥

प्रणव इति । अधिकार सम्पूर्णतायां मङ्गलार्थमेतत्, अं नम इत्यादि न्यासं विधाय सर्वतो भद्रयन्त्रं हस्ते संस्थाप्य ॐ शुक्रपाणिदिने स्वाहा, इत्यनेन मन्त्रेण, अभिमन्त्र्य महाब्रह्मणो हस्तस्य स्पर्शनं ज्ञानस्य सर्व पृच्छासु भूतभवद्भविष्यद्रूपस्य साधनं हेतुर्भवति ॥ ५३ ॥

अर्थनिगमनमाह—

करस्पर्शात् स्पर्शादिव परिणतां काञ्चनमहा
रसप्रेंखन् सिद्धिं सुगुरुवचसो मेघविजयात् ।
विदित्वा पृच्छानां य इह कुरुते निर्णय महो-
महोभिस्तस्यस्याद्भुवनभवना वासनविधिः ॥ ५४ ॥

करेति । हस्तस्पर्शात् परिणतां—अभ्यस्तां काञ्चनअचिन्त्या महारसस्य ज्ञानास्वादस्य प्रेङ्खन्ती—दीप्यमानां सिद्धं प्राप्तिं मेघस्य विजयः सारस्येन यस्य तस्मात् सुगुरोर्वचनात् विदित्वा ज्ञात्वा यः पृच्छानां निर्णयं कुरुते किं विशिष्टः यः मेघविजयं ग्रन्थकारकमतति सततं गच्छति सेवत इति मेघविजयात् तस्य तेजोभिर्जग गल्लक्षणं मन्दिरं तत्र प्रकाशक्रिया भवति परिणतां व्याप्त कस्मादिव स्पर्शात् पाषाणविशेषात् काञ्चनस्य—स्वर्णस्य महारसेन तादृशीं सिद्धमिति छायार्थः ।

अत्र जगतो मन्दिरोपमायां न हीनत्वदोषः शङ्क्यः; करामलकवद्विश्वं

कलयन् केवलश्रियेत्यादि शिष्टप्रयोगेण प्रकाशातिशयव्यञ्जनात् ॥५४॥

दर्शं दर्शमनेक वाङ्मयपथं स्पर्शाधिकारोदधि
स्तीर्णस्तूर्णमघूर्णि बोधमणिभिः पूर्ण कथञ्चिन्मया ।
हेतुस्तत्र सुसेतुरेव सुधियां सम्यक् प्रसादाह्वयः
शास्त्रेऽस्मिन्नत एव सोन्नतिपदं भूयात्सुदृष्टिःसताम् ॥ १ ॥

इति श्री हस्तसञ्जीवनव्याख्यायां सामुद्रिकलहर्य्यां
महोपाध्याय श्रीमेघविजय गणिविरचितायां
द्वितीयः स्पर्शाधिकारः पूर्णः

---

अर्हम्

अथ रेखाविमर्शनाधिकारः समारभ्यते ॥

प्रथममथविमर्शः स्पर्शनादेवपाणे–
र्गदितावदितमन्त्रोच्चारपूर्वं विधेयः ।
जिनदिनकरभासास्त्वं प्रकाशावलीढं
हृदिनिहितवतोच्चैर्धीमता लक्षणानाम् ॥ १ ॥

शास्त्रकाराहि—शास्त्रस्यादौ मध्यऽवसाने च मङ्गल माचरन्तीशिष्टाचारान्मध्यमङ्गलमाह—

**स्वस्ति आभरणं सिद्धेः करणं श्रीजगद्गुरोः ।**
**हस्तं स्वमस्तके न्यस्त स्मृत्वा रेखाविचार्यते ॥**

स्वस्ति श्रीति । स्वस्तीत्यव्ययम्, मङ्गलार्थे–अव्ययानां बहुधा ग्रहणं शास्त्रसन्दर्भस्य, अव्ययरूपतापादनार्थम् । जगद्गुरुरत्र श्रीनाभिजन्मा जिनस्तस्यैव सकलकलाशिक्षागुरुत्वात् । हस्तमिति–हस्ताधिकारौचित्यात्, रेखा इत्यत्रजात्यैकवचनम् । विचार्यते इति विचारस्यपरीक्षारूपतर्कत्वेन तत्त्वार्थोन्नायकत्वात् तथैव रेखाणां लक्षणकत्वमिति ॥ १ ॥

परीक्षायां देशकालादेरप्युपयोगात् विधिं स्मारयति ।

**प्रागुक्तविधिनाभ्यर्च्य नरोजातिगुरोः पुरः**

**हस्तं स्वंदर्शयेद्धस्ते प्रशस्ते दिवसोदये ॥ २ ॥**

प्रागुक्तेति । हस्तेहस्तनक्षत्रे मुख्यत्वादस्यग्रहः । उपलक्षणादन्य-नक्षत्रेष्वपि पूर्वोक्तेषु यदा पुनर्हस्तनक्षत्रे सूर्यश्चरति तदा तावत्सु सर्वदिनेष्वपीति प्राञ्चः ॥ २ ॥

अत्रार्थे सम्मतिमाह—

**शोभने हस्तनक्षत्रे ग्रहे सौम्ये शुभेदिने ।**
**पूर्वाह्णे मङ्गलैर्युक्ते परीक्षेतविचक्षणः ॥ ३ ॥**

शोभन इति । अर्कादिवारयुक्तेन पुनः शनियुक्तेयमघंटोत्पत्तेः । ग्रह इति ग्रहस्तत्र चन्द्रस्तस्यैव सर्वग्रहमुख्यत्वात्, तस्माच्चन्द्र बलाद्बलमिति वाक्याच्च । न चैवहस्तनक्षत्रे सदातुर्याष्टमद्वादशचन्द्रयोगात्तत्ताद्राशिवतोहस्त-दर्शनबाधः स्यादिति वाच्यं प्रागेवकृतोत्तरत्वात् सौम्ये शुभे घातादिदोषवर्जिते शुभ इति रेणुसंपातादि उत्पातवर्जिते अत एव शकुनदर्शनादिवत्, पूर्वदिने गुरोर्निमन्त्रणार्कायाममहस्त प्रातर्विलोक्यः इति गुरुरपि स्वेष्टस्मरणब्रह्मचार्या-दिक्रियासावधानः स्यात् । पूर्वाह्ण इति एतद्वचनेन हस्तादिनक्षत्रायोगे प्रात-र्घटीचतुष्टयमध्ये कदाचिदावश्यके कार्ये हस्तवीक्षणं युक्तं अयं चापवाद एव न चेन्मध्याह्नात् परतः क्षीणामित्यादि पूर्वोक्तमवे मङ्गलैर्युक्त इति-विवाहादिउत्सवसहि तो दिनेपुरुषोवा रूप्यनाणकतिलकादियुक्ते हस्तविलोक नार्थमागमेन शुभशकुनसद्भावे स्वयमपि शुभवाक् सुवेष इत्यादि विशिष्टे-न पुनः केनापिकृतकलहे इति । गुरुरपि प्रसन्नचेतामाङ्गल्यभूषावेषादि युक्तकेः परीक्षेतविचारयेत् कररेखादिसर्वमितिशेषः ॥ ३ ॥

रेखाविमर्शक्रममाह—

**पूर्वमायुः परीक्षेत पश्चाल्लक्षण मुत्तमम् ।**
**क्षीणायुषां नृणां शेषैर्लक्षणैः किम्प्रयोजनम् ॥ ४ ॥**

पूर्वमिति । प्रथमं आयुर्जीवितं स्वभावः आयुरेखयाविच क्षणो विमृशेत् ततः पश्चात् शेषं धनादिलक्षणं—उत्तम—अनुत्तम वा विचारयेत्

---

१ सामुद्रिकभूषणे तया वचनात् ।

आयुरेखाभावे निष्प्रयोजनत्वाल्लक्षाणानां नचैवमन्यरेखा वैयर्थ्यं छंद-भेदादिसम्यग्विचारणयाता सामान्योन्यलक्षणत्वात्. अतएवश्रीकालिकाचार्य-गुरुणांभगवतां पूर्वमायुः पृष्टं शक्रेणतथा विक्रमार्कराजेनापिपूर्वमायुः प्रश्न-छलेन वैतालः स्वसेवकीकृतः ॥ ४ ॥

रेखाणां विमर्शनाय स्थानरूपाणि लक्षणमाह—

**मणिवन्धात् परः पाणिः सो कर्मकठिना नृणाम् ।**
**वामेति कोमलो वामभ्रूवां सम्पत्करः करः ॥ ५ ॥**

मणीति। मणिरत्ररत्नं वद्धयते तेन मणिबन्धः करपल्लवतन्मूलं तस्मा-दग्रे पाणिरितिरूढिः सकर्मवृक्ष छेदादि तद्भिनाकठिनः नृणां पुरुषाणां संप-त्करः—संपत् घन—स्वजनवाहनादिलक्ष्मी स्तद्विधायकः वामभ्रूवां पृथग् ग्रहणांत नृशद्बोजातिवाचकोऽपि पुरुषशद्ववद्विशेषवाचकः वृक्षछेदादि कर्मणा मुष्टियुद्धाभ्यासादिना काठिन्यं त्वौपाधिकं न सहजं यत्तु सुकुमालपाणिपाय इति सिद्धान्तोक्तिः सात्वाचिसौकुमार्यपरानपुनरस्थिकोमलत्वपरा । पुंसां करे अस्थ्नां काठिन्यमेव युक्तम् । शस्त्रव्यवसायादिषु राज्ञां तदौचित्यात् वाम-भ्रुवां स्त्रीणां भगवत्यागमोक्त पित्रङ्गत्रयस्पर्शशैथिल्येन प्रकृत्या अस्थिकोमल-त्वात्, कोमलकरः श्रेष्टः वाम इत्यत्र कथनात् पुंलक्षणे दक्षिण एव वाच्यः, ननुशरीरावयवेषु मृदुकठिनत्वादि धर्मस्तूभय साधारण एव दृश्यते तदत्र किं विशेषं व्याख्येयाति चन्न पुरुषस्य सरलप्रकृत्यायोगसायर्थ्येन च दक्षिणाङ्ग

१ भवत्याद्यागमेऽपि नेरइयाणं केवइयं कालंवितीपण्णत्तेत्यादिना पूर्वमायु प्रश्नः ।
२ ननु एकस्मिन्नेवाङ्गे किं वामावामत्वं सर्वत्रजीवाश्रये साम्यादिति चेन्न; एकस्मा-दङ्कुरात् पत्रद्वयवत्, एकत्रापिकाले उत्सर्पिण्यवसर्पिणी द्वयवत् पुद्गलकृतभेदेन विशेषात् वामः प्रतिकूलः पुद्गलाधिक्येन संसारवर्द्धनाज्जीवस्याहितमेववामाङ्गं तत एव आहारस्यवामकुक्षिराश्रयः शयने तदङ्गस्याधः करणात् सुखं शकटादावपि वामाङ्ग एवभारोऽधिकस्तेनपार्श्वेऽनड्वान् वली योज्यते । एकत्रापिदिने रात्रिर्वामाङ्गं स्त्रीरूपात्तत्र पुद्गलातिशयाद्देहे जडिमान् तथा दक्षिणाङ्गरूपे दिन इति, अत एववा-माङ्गवस्त्रा छादनभारवहनादिप्रयत्नाधिक्यं तदेवपुद्गलातिशयहेतुः । तमाउल अंगा-पणत्ता तेजहा मंसेसोणिएमच्छुलिंगे तउंपिति अंगा अठिमिजाकेसं मंसुरोमणहे इति भगवत्यां

एव प्रयत्नाधिक्यात् स्त्रीणां मातं गात्रयान्तर्भूतशोणिताधिक्येन वक्रस्वभावात् भोगाङ्ग प्राधान्याद्वामाङ्ग एव प्रयत्न अत एव पुंसो गर्भेऽपि दक्षिण कुक्षिस्थानं स्त्रिया वामकुक्षिः उत्पत्तावपि शुक्राधिक्ये पुमान् रक्ताधिक्ये स्त्री इति मात्रापितृजन्यशुक्रशोणितादि साधारण्येऽपि तारतम्यं तथाऽत्रापि तेनैव पुंसो ज्ञाने स्त्रियास्तु जाड्ये आधिक्यं प्रत्यक्षं तेनावयवद्वये वाह्यवृत्त्या साम्ये सत्यपि रेखातिलकनखादि वैषम्यस्यापि दृश्यमानत्वात् कोमले तरतायां वामावामयोर्विशेष संभव इति ॥ ६ ॥

अत्रार्थे सम्मतिमाह—

यदुक्तं—

**वामभागे तु नारीणां दक्षिणो पुरुषस्य च ।**
**विलोक्य लक्षणं विज्ञैः सर्वमायुः पुरःसरम् ॥ ६ ॥**

वामेमिति । अत्रार्थद्वयं तत्र प्रथमः स्त्रीणां वामभागे लक्षणं परीक्षणीयं पुरुषस्य दक्षिणभागे इति द्वितीयवस्तु एकस्यैव पुरुषस्य समुद्दिश्य स्वभावादिलक्षणं दाक्षिणे भागे विलोक्यं स्त्रीणां स्वभावादिलक्षणं वामभागे तथा स्त्रीणां स्वलक्षणं वामभागे पुरुषस्य भर्त्रादेः स्त्रिया एव दक्षिणभागे परीक्षणीयमित्यर्थः । तेनैव विष्णोर्वामाङ्गे लक्ष्म्यादिस्थानं सुरतार्थे पुरुषा दक्षिणपादेन स्त्रीवामपादेन पर्यङ्कमारुहेत् इतिस्पष्टं वाग्भटे । अत एवास्मिन् श्लोके पुंसस्त्वायुः पुरस्सरामिति कचित्पाठेद्भिः पुरुषोपादानं संगतं किंविशिष्टं लक्षणं आयुःपूर्वकं पूर्वमायुरेव विचार्यमित्यर्थः । नचैवं नखचरणपाणिरसनादशनछद-तालुलोचनान्तेषु । स्याद्योरक्तः सप्तसु सप्ताङ्गांसलभते । लक्ष्मीरित्यादिसूत्रेषु लोचनान्तर किमपि पुंसो दक्षिणे स्त्रियावामे लोचने प्रसज्यत इति वाच्यं, द्वयोरक्ततायां विशेषात्, अन्यथा एकस्मिन्नपि तथाफललाभतः । पुंसो हस्तद्वयेऽपि काठिन्यं चेत्प्रशस्तमेव न चेद्दक्षिणेऽपि एवं स्त्रियापि ज्ञेयम् । यद्वा कोमलकठिनत्वमेव लक्षणं वाम इति विशेषोक्तिस्तु, अग्रे वक्ष्यमाणाधिकारेरखादि लक्षण कटाक्षेणेति ॥ ६ ॥

अथ स्त्रीवतस्त्र्यंशपुरुषस्यापीति विशेषसंग्रहाय समत्यन्तरमाह—

**उत्पातः पिटकोलक्ष्म तिलकं मशकोव्रणः ।**

**स्पर्शनं स्फुरणं पुंसां शुभायाङ्गे प्रदक्षिणे ॥ ७ ॥**

उत्पात इति । उत्पातो न्यूनाधिकाङ्गुलित्वादिः पिटकस्फोटको गडुविशेषः लक्ष्मलाञ्छनं तिलकं रक्तं—श्यामविन्दुभेदः मशकः प्रसिद्धः व्रणश्चन्द्रिकारोगभेदः स्पर्शनं पल्लीकृकलासोर्णः नाभादीनां स्फुरणं नेत्रस्फुरणादिकं पुंसा पुरुषाणां प्रदक्षिणेऽङ्गे शुभाय भवति ॥ ७ ॥

शेषार्थमाभ—

**वामभ्रुवां पुनर्वामे स्यंशकस्य नरस्यच**
**घातो दक्षिणके कैश्चिन्नरस्यांगे शुभोमतः ॥ ८ ॥**

वामेति । स्त्रीणां वामाङ्गेपूर्वोक्तं सर्वं शुभायस्त्रीस्वभावस्य मायावगुण्डानवक्रोक्ति गूढाशयचपलत्वमानाधिक्यरागप्रियत्वादिगुणैः सहितस्य पुरुषस्यापि वामेऽङेशुभाय भवति । कैश्चित्पण्डितैः शास्त्रादिप्रहारोऽपि नरस्य दक्षिणेऽङ्गे शुभः प्रोक्तः । आस्तामन्यलक्षणमित्याशयः । एतेन कोमलेतरतायां द्वयोर्हस्तयोः साम्येऽपि लक्षकत्वं पुंसो दक्षिणकरे एव काठिन्यस्य, स्त्रियाः कोमलत्वस्य; वामहस्त एवेति निश्चयः । तस्यागर्भोद्भवे पित्रा वामस्वर प्रवृत्तौ सुरतेक्रियमाणे पुद्गलोपचयेन जायमानत्वाम् अतएव शुक्लपक्षे स्मरारोहः इन्दुस्वरूपेण वामनाड्याः शैत्येन पुद्गलभाराश्रयात् ॥ ८ ॥

सम्मत्या लब्धमर्थं ग्रन्थकृद्विवृत्यहा—

**स्यंशकत्वाद्बालकस्यापि शुभगस्य विलोक्यते ।**
**वामहस्तात्फलंपञ्चदशवर्षाणि किञ्चन ॥ ९ ॥**

स्यंश इति । अश्मश्रुकूर्चलोमातिशय वालस्य सुभगस्य बहुजनप्रियस्य पञ्चदशवर्षपर्यन्तं रक्ताधिक्यात्किञ्चनफलं वामहस्तरेखाभिर्विलोक्यते । किञ्चनेति कथनान्नसर्वमायुः प्रमुखमिति भावः ॥ ९ ॥

हस्तस्य शुभलक्षणसंग्रहमाह—

**श्लाघ्य उष्णारुणोछिद्रः स्वेदः स्निग्धश्चमांसलः ।**
**श्लक्षणस्ताम्रो नखो दीङ्गुलिको विपुलः करः ॥ १० ॥**

श्लाघ्य इति । ईदृशः करः श्लाघ्यः प्रशस्यः । उष्णवीर्याधिक्यात्—

अरुणः, रक्ततलः अछिद्रः, अङ्गुल्यन्तरेऽनवकाशः । अस्वेदः रसाधिक्याद-क्लिन्नः स्निग्धश्चिक्कणोनरूक्षः मांसलः, पुष्टः, श्लक्ष्णस्त्वचिदीप्तिमान् ताम्रवद्रक्तः नखः, दीर्घाङ्गुलिः । विपुलः प्रथूलतल इति ॥ १० ॥

हस्तमूल लक्षणमाह—

पाणिमूलं दृढं गूढं श्लाघ्यं सुश्लिष्टसंधिकम् ।
श्लथं सशद्बं ह्रस्वञ्च निर्धनत्वादिदुःखदम् ॥ ११ ॥

पाणिमूलमिति । प्राणिबन्धस्थानं दृढेनिर्विः नामितुमशक्य गूढमप्रकटकूर्परास्थिप्रान्तं श्लाघ्यं शुभं यत्र अस्थिसन्धयो नलक्ष्यन्ते, तद्विपरीतं श्लथं शिथिलं करचालने शद्बं कुर्वत् हीनंतुछं अशुभमित्यर्थः ॥ ११ ॥

पाणितलस्वरूपमाह—

धनी पाणितले रक्ते नीले मद्यं पिबेन्नरः ।
अगम्यागम्यः स्यातपीते कल्माषे धनवर्जितः ॥ १२ ॥

धनीति । स्पष्टम् । अगम्यात्र राजवनिता वाचाण्डाली कुमारी वा । कल्मषं चित्रलेकर्बरमिति यावत्, सामुद्रिकतिलके तु पादतलमाश्रित्य वंशछिदे कषायं विजहत्यायै विपक्वमृत्सदृशं पतिमगम्यारतये कृष्णंस्थान्मद्यपानाय इति ॥ १२ ॥

दातोन्नते करतले निम्ने न स्यात् पितुर्धनम् ।
धनी निम्ने च संवृते निर्धनो विषमे पुमान् ॥१३॥

दातेति । मध्ये उन्नतं यत्र जलं न तिष्ठति । निम्नं नीचैर्वृत्तिर्विपुले कृतेऽपि यत्र जलं तिष्टति तस्य स्वोपार्जितंधनं न पुनः पितृसत्कं किञ्चित्तिष्टति वर्तुले निम्ने चेति गुणद्वय युक्ते तलेधनीकृपणः विषमेऽङ्गुलीमूलादिभागे यत्रोन्नातिर्युज्यते तत्र निम्नत्वे मध्ये भाण्डागारादिस्थाने उन्नतत्वे सतीत्यार्थाद्गम्यम् ॥ १३ ॥

ग्रन्थान्तर सम्मत्या तलस्वरूपं दृढयति ।

फुडियाय गूढ गुफा विरलंगुलि विसम
यच्च संपता निग्मं साम्य परा हुंति ॥ १४ ॥

फुडिया इति। स्फुटितं विपादिकाभिः शीतकालं विनापि पीडितं प्रकटकूर्परास्थिप्रान्तं, अङ्गुलीषु बह्वन्तरं विषमाणि एकविंशति, एकोनविंशत्यादिविषमाङ्क संख्यानि पर्वाणि विंशोपकास्ततसंप्राप्तं निर्मांसं शुष्कं कठिनंत्वचिकर्कशं तलं प्राकृतत्त्वात् स्त्रीलिङ्गं यदाह—पाणिनिः लिङ्गमतन्त्रमिति, ईदृशं पाणितलं चेत्तदा परकीय सेवा करणेन दासवृत्त्या जीवन्तो नरा भवन्ति ॥ १४ ॥

तलस्वरूपं निर्दिश्य पृष्टस्वरूपमाह—

करपृष्ठं सुविस्तिर्णं स्निग्धं पीतं समुन्नतम् ।
श्लाघ्यं गूढशिरं नृणां फणभृत्फलसान्निभम् ॥ १५ ॥

करेति। पीनं मांसलं स्निग्धं त्वचि दीप्तिमत्, अप्रकटस्नायुजालं शुभं तद्व्यतिरिक्तमन्यथा ॥ १५ ॥

तद्व्यतिरेकमेवाह—

विवर्णं परुषं रूक्षं रोमशंमांसवर्जितम् ।
मणिबन्धसमं निम्नं न श्रेष्ठं करपृष्ठकम् ॥ १६ ॥

विवर्णमिति। श्यामं कान्तिरहितं परुषं त्वचि कर्कशं रूक्षं विछायं रोमशं लोमसहितां निर्मांसं मणिबन्धस्थानवत् निचैर्वलमानं गर्ताङ्कितं ईदृशं शुभं करपृष्ठं, अन्वयेनैवार्थलाभे व्यतिरेकोक्तिर्विशेषबोधाय ॥ १६ ॥

अत्र सम्मतिदर्शनाय चतुर्घा—हस्तबिम्बस्थापनीयं—

एकं पुरुषदक्षिणहस्तस्य द्वितीयं स्त्रिया वामहस्तस्य तृतीयं पुरुषं वामहस्तस्य चतुर्थं स्त्री दाक्षिण हस्तस्येति चतुर्विधं हस्ताकार स्थापनया रेखाफलं सुबोधं तेन तद्ग्रन्थादेव पृष्टलक्षणं दृढयति ।

हस्तपृष्ठं सर्पफणाकारं रोमविवर्जितम् ।
श्रेष्ठं मांसलमुच्चगं मणिबन्धाङ्कितं शुभम् ॥ १७ ॥

हस्तपृष्ठमिति। स्पष्टम् ॥ १७ ॥

अकर्मकठिनं पाणितलं मध्ये तदुन्नतम् ।
दानिनां कृपणानां तु भवेदत्यन्तनिम्नगम् ॥ १८ ॥

अकर्मेति ॥ १८ ॥

तलं वक्रं तथा ह्रस्वमतिदीर्घश्च नोशुभम् ।
रेखाभ्रमर चक्राङ्कासूक्ष्मा अस्फुटिताः शुभाः ॥ १९ ॥

तलमिती श्लोकत्रयं हस्तबिम्बगतमेव तेन न पुनरुक्तिः ॥ १९ ॥

हस्तस्वरूपं निश्चित्याङ्गुलिस्वरूपमाह—

दीर्घनिर्मांसपर्वाणः सूक्ष्मादीर्घाः सुकोमलाः ।
सघनासरलावृत्ताः स्त्रीन्रोरङ्गुलयः श्रिये ॥ २० ॥

दीर्घेति । पर्वाणि विंशोपकास्ते दीर्घमांसवर्जिताः । या सुताः अङ्गुल्यः सूक्ष्मा तन्व्याः दीर्घालम्बाः सुकुमाराः सुघनाः परस्परं निरन्तरालावृत्ता वर्तुला मांसयुक्तत्वात् ईदृश्यः पुरुषस्य स्त्रियाश्चाङ्गुलयः लक्ष्मीदायिका स्युः पूर्वं दीर्घपदं पर्व विशेषणं परन्तु अङ्गुल्यास्तेन न पुनरुक्तिः ॥ २० ॥

तद्व्यतिरेकमाह—

यच्छन्ति विरला शुष्काः स्थूला वक्रादरिद्रताम् ।
शस्त्रघातावहिर्नम्राश्चेटत्वं चिपिटाश्वताः ॥ २१ ॥

यच्छन्तीति । अन्वयेनैव सिद्धौ व्यतिरेककथनं नाना मति शिष्यबोधार्थं विरला—अन्तरसहिताः शुष्कारुक्षाविछाया स्थूलाः पर्वस्यपि मांसयुक्ता वक्राङ्गुल्यो दरिद्रत्वं ददति करपृष्ठे नम्रास्ते शस्त्रघातं समर्पयन्ति चिपिटा, पर्वाणि मुक्त्वा मांसाभावात् विषमादासत्वं ददति, स्त्रियास्तु स्थूलाङ्गुलित्वं तथा पादयो दीर्घा प्रदेशिनी निषिद्धा विवेकाविलासे ॥ २१ ॥

साम्प्रती न जनानामनाश्वस्तत्वात् स्वोक्तौ सम्मतिमाह—

विरंगुलिधणरहितु धणसंचइ तु धणंगुलिहोइ ।
निम्मंसंगुलिपव्वो सधणा विसमंगुलि अधणा ॥ २२ ॥

विरलाङ्गुलीति । विरलाङ्गुलिर्धनरहितः । धनसञ्चयवान् घनाङ्गुलिर्भवति । निर्मांसाङ्गुलिपर्वसाधनः विषमाङ्गुलिः, अधनः । अत्र 'पणमिय जिणममिय गुणं गयरायसिरोमणिं महावीरं' इत्यादिकं एकं करेला प्रकरणं द्वितीयं अरिहंते वंदित्ता सिद्धे रिसहो य सव्व साह्य इत्यादिकं किञ्चित्पाठ-

भेद दृश्यते। तत्र प्रथमे सम्मंसंगुलिपव्वो पुरिसो धणवंसया सुही होइ। जइसो अमंसपव्वो तातस्ससिरि न संभवइ ॥ १ ॥ इत्युक्तं तदभिप्रायं न विद्मस्तेन बहुश्रुताःप्रष्टव्याः यद्वा स्त्र्यंशनरलक्षणमेतत् ॥ २२ ॥

विशेषज्ञानार्थं ग्रन्थान्तरपाठमाह--

श्लिष्टान्याङ्गुलिमध्यानि द्रव्यसंचय हेतवे।
तानि चेच्छिन्द्र युक्तानि त्याग-शीलयुतो नरः ॥ २३ ॥

श्लिष्टानीति। श्लिष्टानि-अन्योन्य मिलितानि निरन्तराणीत्यर्थः। त्यागेति दानवान् सुशीलः पुरुषः अत्र सामान्योक्तावपि दानस्य दक्षिणकरं साध्यत्वात्, दक्षिण करेऽङ्गुलिछिद्रे दातृत्वं वाच्यं स्त्रिया- अपि दक्षिण एव ॥ २३ ॥

अथान्तरालेपि विशेषमाह—

तर्जनी मध्यमारन्ध्रे मध्यमानामिकान्तरे
अनामिका कनिष्टान्तः छिद्रे। सति यथा क्रमे ॥ २४ ॥

तर्जनीति। २४

जन्मतः प्रथमेंशे वाद्वितीये च तृतीयके
भोजनावसरेदुः खंकेप्याहुः श्रीमतामपि ॥ २५ ॥

जन्मत इति। श्लोकद्वयं मिलितार्थं, स्पष्टं, प्रथमेंशे प्रथमवयसि वयोऽत्र आयुः परीक्षानुसारात् ज्ञेयम्। अष्टादशांशः क्रियन्तेंऽशु मालीत्यादि दशाक्रमवत्, तलान्तराले सति श्रीमतानपि मातापितृभाग्यात् धनेसत्यपि पुत्रस्यभोजनवासरे जेमनकालेऽपि किञ्चिदुःखं क्लेशादि जायते। अयं चात्र भावः तर्जनीमध्यमयोरन्तराले प्रथमवयसि दुःखवाच्यम्। यदि दैवात् पित्रोर्धनित्वं तत्र दुःखासम्भवस्तदा भोजनसमयेऽपि किञ्चिदुःखं जायते, यद्वा भोगावसरे स्त्रीविवाहादिसमये इति व्याख्येयं तस्य बाल्येऽपि सम्भवात्। अत्र वयोऽनुक्रमो बालं-कुमारं तरुणमित्या प्रागुक्तवशात् द्विपर्ययेन, तथापि दिनोदयः स्मृतोऽङ्गूष्ठ इत्याद्युक्त्या सम्यगेवायं बोध्यः। श्लिष्टास्तु कनिष्ठा-

१ अत एव अर्थिनिवहस्त्यागेः कृतार्थीकृत इति प्रागुक्तम्।

नामिकान्तरे प्रथमवयः सुखं पित्रादिजन्यं मध्यमानामिकयोरन्तरत्वे तरुणवयः सुखं भर्तृजन्यम् । तर्जनीमध्यमयोरनन्तरत्वे वृद्धवयसि पुत्रादि जन्यं सुखं वाच्यम् । पुंसो वामहस्ते तर्जनी मध्यमारन्ध्राभावे प्रथम स्त्रीसकाशात् सुखम् । मध्यमानामिकानिरन्तरत्वे द्वितीयस्त्रीजन्यं सुखं, अनामिका कनिष्ठानन्तरत्वे तृतीयस्याश्चतुर्थ्या वा यथायोगं सुखं वाच्यम् । स्त्रिया दक्षिणहस्ते तर्जनीमध्ययोरनन्तरत्वे पुत्रप्रभृतेः सुखमित्यादिबोध्यं हस्तबिम्बादेव ॥२५॥

सम्मत्यन्तरमाह—

वालत्तणम्मि जातसुत जणियामंत्रिमंतरधणम्मि ।
भम्भिमनामिय अंतर धणम्मितरुणत्तणे सुक्खम् ॥ २६ ॥

वालत्तणमिति । बालत्वे जानीहि । तर्जनीमध्यमान्तरे घने मध्यमाऽनामिकान्तरे घने तरुणत्वे सुखम् ॥ २६ ॥

पावइपच्छासुहं कणिट्ठियाणामियंतर धणम्मि ।
अछिदेसु धणेसुय पव्वेसु सयासुही होई ॥ २७ ॥

पावईति । प्राप्नोति पश्चात् सुखं कनिष्ठिकानामिकान्तरे घने, अछिद्रेषु घनेषु पर्वसु सदासुखी भवति । पर्वसु इत्यत्राश्रयलक्षणा ॥ २७ ॥

शब्दभ्रमनिवारणाय भाष्यं—

अथ, अङ्गुलीषुदीर्घत्वं श्रेष्ठमुक्तं तत् कथमित्याह—

अनामिकान्त्यरेखायाः कनिष्ठाः स्याद्यदाधिकाः ।
धनवृद्धिस्तदापुंसां मातृपक्षो वहुस्तथा ॥ २८ ॥

अनामिकेति । अन्त्यारेखात्र तृतीये नखवति पर्वणि ग्राह्या साप्यायता तस्या यदा कनिष्ठा—अधिका तदा पितुरपेक्षया घनं वहुवामहस्ते तद्वृद्धौ मातृपक्षो मातुलादिर्वहूस्यात् । अत्र प्राचां भणितौ फलद्वयं सामान्यत उक्तं अत्र विशेषेण तत् स्त्रीमातृमातृपक्षादि, इत्युक्तेर्बोध्यम् ॥ २८ ॥

मध्यमाप्रान्तरेखाया अधिकायदि तर्जनी ।
प्रचुरस्तत् पितुः पक्षः श्रियश्च विपदोऽन्यथा ॥ २९ ॥

मध्यमेति । अत्रापि दक्षिणकरे पितृपक्षः वामेलक्ष्मीरिति । अन्यथा विपर्यये विपदः दुःखानि च ॥ २९ ॥

अथ किञ्चिद्वृद्धावपि मात्राधिकत्वे दोषमाह—

अङ्गूष्ठस्याङ्गुलीनां च यद्यूनाधिका भवेत् ।
धनैर्धान्यैस्तदाहीनो नरः स्यादायुषापि च ॥ ३० ॥

अङ्गूष्ठस्येति । यथा योग्यात्वादत्यन्त न्यून्यत्वे, अधिकत्वे सर्वतो हानिरेव ॥ ३० ॥

अत्रापि विशेषमाह—

मध्यमायां तु दीर्घायां भार्याहानिं विनिर्दिशेत् ।
अनामिकायां दीर्घायां विद्या भोगिभवेन्नरः ॥ ३१ ॥

मध्यमायामिति । दीर्घायां यथा योग्यत्वात् परिगणनाधिकायां, नचेदन्याभ्योदीर्घत्वं तु मध्यमाया निश्चितमेव । भार्या हानिर्द्विस्त्रिर्वा विवाहेऽपि न तस्याश्चिरजीवित्वम् । अनामिकायामत्रापि परिमाणतोऽधिकत्वे इतिव्याख्येयम् ॥ ३१ ॥

इदं सूत्रं पदाङ्गुलिस्वरूपलक्षकमन्ये ब्रुवते तत्त्वं सर्वज्ञगम्यं पुनर्विशेषमाह—

अपवर्गे यस्य पर्वाणि दृश्यन्तेऽङ्गुलिपत्रसु ।
सरक्ताङ्गुलयो येच ते सर्वे चिरंजीविनः ॥ ३२ ॥

अपवर्ग इति । पर्वशब्दः अकारान्तोऽपि योगशास्त्र वृत्तौ, अचतुरेप्यादिना वा निपातनात् सिद्धम् । अपर्वेपर्वणो विंशोपकस्य स्थानाभावे पर्वाणि विंशोपकाभवन्ति । संरक्ता अत्यन्तरक्तिमान्विता अङ्गुलयो येषां ते पुरुषादीर्घायुष्का भवन्ति ॥ ३२ ॥

यस्यहस्तपदेदीर्घाङ्गुलीमिलितोऽथवा ।
सपुमान् विरही नित्यं ह्रस्वाङ्गुली दरिद्रता ॥ ३३ ॥

यस्येति । यथा हस्तपाद इति श्रीसमुद्रवचनात् हस्ते वा पादे पाण्योश्चरणयोरपीति । विवेकविलासेऽपि साम्य भणनं तेन करे चरणे दीर्घा

परिमाणाधिकाऽङ्गुली भवति। अथवा मिलिता जन्मत एव संबद्धा यस्य भवति सनरः भार्या वियोगं भजते ह्रस्वापरिमाणतोऽपिन्यूनाऽङ्गुली दरिद्र-रूपमेव ॥ ३२ ॥

अथाङ्गुलीस्वरूपादायुर्मानमाह—

**अनाभिकापर्वयदा विलङ्घते कनीनिका वर्षशतंसजीवति।**
**नवत्यशीतिविगमेच सप्ततिःसमानभावेखलुषष्ठि जीवितम् ॥ ३३ ॥**

अनामिकेति। यदा कनिष्ठा आनामिकायाः, अन्त्यं पर्व लङ्घित्वा वर्द्धते। तदा सपुमान् शतवर्षजीवीस्यात्, यद्वा नवति वर्षाणि अशीति वर्षाणि कालापेक्षयाविगमे हानौजायमानायां सप्ततिवर्षाणि वाजीवति पर्वणा तुल्यत्वे षष्ठिवर्षाणि जीवति ॥ ३३ ॥

एतदेव विशदीकृत्य प्राह—

**तारास्याद्भगवत्याश्चेदधिकापञ्चभिर्यवैः।**
**तृतीयपर्वणिस्तर्हि शतंवर्षाणि जीवितम् ॥ ३५ ॥**

तारेति। भगवतीशीवा, अनामिका तस्यास्तृतीय पर्वतोऽधिका तारा कनिष्ठा पञ्चयव प्रमाणायवायवोदराणि तत् परिमाणा तर्हिवर्षशतम् ॥ ३५ ॥

**चतुर्भिनवति रामैरशीतिः सप्ततिद्वये।**
**समत्वे षष्ठिवर्षाणि हीनेहीनत्वमाप्नुयात् ॥ ३६ ॥**

चतुर्भिरिति स्पष्टम्। रामैस्त्रिभिः रामशब्दस्य त्रयाणां संज्ञाभावात् द्वये यवद्वयेऽधिके सप्ततिवर्षाणि, एकयवाधिकत्वे सप्ततेर्न्यूनं, षष्टित अधिकं इत्यर्थाल्लभ्यं, अन्तपर्वणा तुल्यत्वे कनिष्ठायाः षष्टिवर्षाणि, हीनतायां आयुषोऽपि न्यूनत्वं स्यात् ॥ ३६ ॥

तदेवाह—

**पञ्चाशदेक जवत्तश्चत्वारिंशज्जवद्वये।**
**यवस्त्रिभिर्न्युनतायां त्रिंशद्वेदैश्च विंशतिः ॥ ३७ ॥**

पञ्चाशदिति। अत्र वेदाश्चत्वार इति संज्ञा साम्प्रतकालजन्या न चेद्वेद शब्दन त्रयाणां संज्ञाऽथर्वणोऽभिचार भणनात्, अशुद्धत्वेन दोषात्। छन्दो

ललाटे यस्य दृश्यते रेखाद्वयसमागमः ।
वर्षविंशतिमुद्दिष्टमायुरत्यन्तदुर्बलम् ॥ १ ॥
ललाटे यस्य दृश्यन्ते रेखैकैव समास्थितम् ।
मृतपुत्रं विजानीयात् सामुद्रवचनं यथा ॥ २ ॥
छिमस्तकेन चैव श्यामरेखा न शोभन्ते ।
ते नरा दुःखिताश्चैव भ्रमन्ति भिक्षागृहे ॥ ३ ॥
ललाटे यस्य दृश्यन्ते रेखात्रयसमागमः ।
षष्टि वर्षाणि ते दृश्यं शुभवाक्यं मुनीश्वरम् ॥ ४ ॥
ललाटे यस्य दृश्यन्ते शुभ रेखा चतुष्टयम् ।
अशितायुर्भवेत्तस्य रेखा पञ्चशतं भवेत् ॥ ५ ॥



मस्तक रेखा चित्र.

जेना कपाळमां जेटलीलाल रंगनी रेखाओ होय तो तेने भाग्यवान् समजओ। अने लीलारंगनी रेखा होय तो सुखी थाय । अने काळारंगनी रेखा होय तो दुःखी रहे–अने अपकीर्तिने करवावालो थाय । तथा ललाटमां जेटली रेखाओ होय तथा वीस वर्ष जीवे–तथा पचीसवर्ष जीवे–आप्रमाणे एकसो वीस वर्षनुं आयु जाणवुं.

जेना कपाळमां त्रिशूळ उभुं होय महान् आचार्य–तथा सुवर्णनो अभिलाषी थाय।

[ c. s. p. p. ]

वेदस्त्रयीषु नेति प्राञ्चां वचनात् तथा त्रयीव नीताङ्गगुणेन विस्तरं पुनर्यस्त्रिवेदी विदांवन्द्य इति नैषधेऽपि तदुक्तिः ॥ ३७ ॥

पञ्चभिर्दशवर्षाणीत्येवं निर्णयमायुषि ।
ललाटे शतवर्षाणि रेखातःपञ्चतो वदेत् ॥ ३८ ॥

पञ्चाभिरिति । यथा पञ्चवयवाधिकत्वं यथा पञ्च यव हीनत्वमपि कालान्तरे सम्भाव्यं शास्त्रप्रामाण्यात्, एवमायुषोऽनुसारात् प्रायुक्तः वयः सुखादिवाच्यम् । अथ पञ्चयवैरेवाधिकन्यूनत्व नियमः कथं षड्भिरपि चेत्स्यात्तदा को दोषः इत्या शङ्क्याह—ललाट इति भालपट्टेऽखण्डाः पञ्चरेखास्युस्तदा शतवर्षायुर्वाच्यम् । अथ तत्रापि षड् रेखाफलं किमिति नोक्तं विंशोत्तरदशावर्त्तनादिति चेत् सत्यं बाहुल्यापेक्षया सूत्रमिदं, अत एव पाणिनीय व्याकरण महाभाष्ये शतवर्षा जीवितोक्तिः । विंशोत्तरदशानिबन्धोऽपि प्रायिक एवा, अन्यथा श्रीवज्रस्वामिपट्ट धरश्रीवज्रसेनसूरेरष्टाविंशत्युत्तरशतवर्ष जीवित्वं पटावल्यादिशास्त्रे भाणितं न घटते । इदानीन्तन जनानां शतवर्ष जीवित्वेऽधिकत्वं, तत एव दशावस्थानिबन्धः शास्त्रीय इति ॥ ३८ ॥

अथ पाणिमूलस्थमणिबन्धफलमाह—

मणिबन्धे यवश्रेण्यस्तिस्रश्चेत्तन्नृपोभवेत् ।
यदिताः पाणिपृष्ठेऽपि ततोऽधिकतरं फलम् ।

मणिबन्ध इति ॥ ३९ ॥

द्वाभ्यां च यवमालाभ्यां राजमन्त्रीधनीबुधः ।
एकया यवपङ्क्त्यातु श्रेष्ठिबहुधनोर्चितः ॥ ४० ॥

द्वाभ्यामिति ॥ ४० ॥

द्वयमपि प्रकटार्थम् । प्रकरण सम्मतिमाह—

धणकणयरयणजुत्त मणिबंधे जस्स तिन्निरेहाउ ।
आहरणविहभोगी पच्छाभद्दं चसोलहइ ॥ ४१ ॥

धणेति । धनं गोधनादि कनकं स्वर्णं सर्व धातूपलक्षणमे तत् रत्नानि वैडूर्यादीनी तैर्युक्तः विविधाभरणभोक्ता पश्चादपि सन्तत्या भद्रमङ्गलं सलभते,

यस्य मणिबन्धे तिस्रोरेखाः स्युः । अत्र तु रेखामालत्रयमुक्तं द्वितीत प्रकरणे ।

परिखितापयडा जवमाला जस्स होइ मणिबन्धे
सोहोइ घणाइणो रायापुण खति ओ होई ॥ १ ॥
दुपरिखिता रम्मा मणिबन्धे जस्स होइ जवमाला
सो होइ रायमंती विवुलमई ईसरोवावि ॥ २ ॥
एगारम्भा खिता जवमाला होइ जस्स मणिबन्धे
सिठी घणे सरोवा होइ जणपूइ ओ पुरिसो ॥ ३ ॥

इति यवमालात्रयमप्युक्तम् । अल पुरुष शब्दो मनुष्यजात्यपेक्षस्तेन स्त्रिया अपि वामहस्तमणिबन्धे यवमालाभिः फलं वाच्यम् ॥ ४१ ॥

एवं पाणौ तलपृष्ठमूलाङ्गुलीफलं निगद्य रेखाफलं स्पष्टयति ।

रत्नाकराद्गोत्ररेखा करभाद्धनतेजसोः ।
एता रेखायान्ति तिस्रस्तर्जन्यङ्गुष्ठकान्तरम् ॥ ४२ ॥

रत्नाकरादिति । पितरस्तृप्ताः सन्तति वर्द्धयन्तीति लोकोक्त्या पितृणामावासाद्दक्षिणस्यामेव पितृपतेर्यमस्य तत्राधिकारात् तेन रत्नाकरान्मणिबन्धाद्गोत्ररेखा या उद्भवः स्वसमयेऽपि लोक स्वभावादक्षिणस्यां जीवा बहवः कृष्णपाक्षिकाधिक्यात् भरतक्षेत्रमपि मेरोर्दक्षिणस्यां दक्षिणहस्तेऽप्यङ्गुष्ठे सूर्यस्थानाद्दक्षिणायनं तत्र प्रेतकायिका लोकेपितर इतिप्रसिद्धा यमाधिकाराद्बहवः समापतन्ति । ते च प्रसन्ना न गोत्रछेदाय प्रयतन्ते तेन गोत्ररेखा दक्षिणस्या एव, तस्याः प्रागुक्तं गङ्गास्वरूपं दाक्षिण भागक्षेत्रादेव वामहस्ते यद्यपि पितृरेखा उत्तरस्याः प्राचीं प्राप्ता । तथापि उदग् भागे क्षेले रक्तासद्भावो वामे स्त्रिया रक्ताधिक्याद्बंगोक्तिस्तु लोकबोधाय, तथा धनाधिष्ठायिका लक्ष्मीर्देवी तस्यास्तु रत्नमुक्ताफलाद्युत्पत्त्या उदधिः प्रसादस्थानं जलक्रीडा पात्रत्वादत एव श्री पर्यूषणा कल्पसूत्रे " कमलपज्जलंतकरगदिय मुक्कतोयं दिसागर इंदोरुपीवरकराभिच्च माणिति विशेषणद्वयं सूपपन्नं उदधिकुमाराणां सूराणां प्रभुर्वरुणः

पश्चिमदिशि तेन घनरेखा करभादेव एवं वादरतेजस्कायिकानां महाविदेह-पश्चिमदिशि, अधोग्रामसम्भवेन वाहुल्यात् लोकेतु कायतीर्थस्य कनिष्ठाऽधोवर्तित्वेन च पाश्चिमाया एव आयुरेखोद्भवः यद्वामातृहस्तेनभोजनं तद्गृहं पश्चिमायां तेनपूर्वाद्युत्पन्नवसनादेर्भोगोप्यत्रैव रात्रिप्रत्यासत्यामिथुनराशिरपिस्त्रीणां पतिव्रतारूपेण पुंसः पश्चाद्दिशानुसारात् जन्मपत्रे स्त्रीभवनमपि तथा प्रातः सिद्धशिलाभावने वामहस्तयोगे उत्तरस्यापि प्रसङ्गः सन्तानरेखाणां करभे स्थानात् सन्तानमपि धनमेव गोधनादिवत् तथा चक्राभिमान मूर्खे-साहस शोकबाहुल्यादिप्रकृतिरपि स्त्रिया एव तत् एव रक्तवसन परिदधानंम् । स्त्रियास्तु लक्ष्मीरूपमेव तेन घनायुषोः करभादेव रेखे, एतास्तिस्रो रेखाऽपि त्रिवेणिरूपत्वात् पूर्वाभिमुखंतर्जन्याऽङ्गूष्ठस्य मध्यं यान्ति ॥४२॥

तासां फलमाह—

रेखास्तिस्रोप्यमूर्येषां सम्पूर्णा दोषवर्जिताः ।
गोत्रेधनेजीवितेच तेषां वृद्धिर्नसंशयः ॥ ४३ ॥

रेखा इति । प्रकटमिदम् ॥४३॥

अथ सर्वाङ्गीणज्ञानसाधनाय रेखात्रयस्वरूपमाह—

हस्तरेखात्रयं चैतद्विश्व त्रयमुदाहृतम् ।
पितृरेखोर्ध्वलोकः स्यान्मातृरेखाच मानवी ॥ ४४ ॥

हस्त इति । पूर्वोक्तं रेखात्रयं गोत्र १ धन २ जीवित ३ रूपं विश्वत्रयं ज्ञेयं पितृरेखा ऊर्ध्वलोकः ॥१॥ मातृरेखामर्त्यलोकः, २ । पातालं चायु-रेखा ॥३॥ उर्ध्वीकृतत्रितस्तिरूपे तथालक्षणात् ॥४४॥

पातालमायूरेखा स्यादेताद्दक्षिणहस्तगाः ॥
धातुर्मूलं तथाजीवो वामेचैता विपर्ययात् ॥ ४५ ॥

---

१ दक्षिणोत्तरयोःस्तोका स्युर्मनुष्यामिथसमाः । प्राच्यां ततः संख्य गुणः प्रतीच्यां चततोऽधिकाः ॥१॥ सर्वस्तोका दक्षिणस्यां भूकायादिगपेक्षया उदक् प्राक् च ततः प्रत्यक् क्रमाद्विशेषेतोऽधिकाः ॥२॥ याम्युदीच्योर्वह्निकायाः स्तोका प्रायो मिथसमः अग्न्यारम्भकबाहुल्यात् प्राच्यांसंख्य गुणाधिकाः ॥३॥ ततः प्रतीच्यामधि कावह्न्या-व्याघारम्भकारिणः ग्रामेष्वधोलौकिद्वेषु बाहुल्याद्धरणी स्पृशाम् ॥४॥ लो.५. सर्गे.

गोत्ररेखा १ धातुरुपागोत्रे धातूतामेवानुबन्धात्, अत एव न गोत्रं चक्रधराभवः, भगवती वीरेऽवतीर्णे ॥ ज्ञातकुले धनादिसाकल्येन भगवत्पुण्यात् प्रवृद्धिः, प्रकृतित्वात्, मूलं वस्त्ररुतकर्पाससिद्धार्थतुवरादिक्रयाणिकं तच्चमर्त्यालोकः तेनैव पाश्चात्य चायुबलात्फलपुष्पादिरसाबाहुल्यं वार्षिकनवघनोत्पातिश्च युक्ता तेनात्र धनरेखापि स्वर्गे तेन देवाद्यभिषेकसमयेऽऽभियेगिक सुरामर्त्यलोका तुवरादि समानयन्ति । असुरादिदेवाद्यपेक्षया नारकापेक्षया मर्त्यालोकाज्जीवाधिक्यात्, पातालं जीवः वामेहस्ते जीवो १ मूलं २ धातव । ३ श्चेति त्रयं ज्ञेयम् । समेस्त्रीविषमे पुमान् इति प्रश्नशास्त्रात् युग्मे विंद्यादेतदेव प्रतीयमिति षट् पाञ्चाशिका ज्योतिःशास्त्रवचनाच्च ॥ ४५ ॥

**ब्रह्माविष्णुः शिवश्चासां कामतस्त्वाधिनायकाः ।**
**चतुर्दिक्षुतलस्याध शक्राद्या अधिपादिशाम् ॥ ४६ ॥**

ब्रह्मेति । गोत्ररेखाया अधिष्टाता ब्रह्मासृष्टि धर्मात्, मातृरेखायाः प्रभुर्विष्णुः प्रतिपालनात् । आयुरेखाधिपः शिवः शिवस्य स्थानं श्मशानमित्युक्तेः हस्त तलस्य चतुर्दिक्षु इन्द्र १ यम २ वरुण ३ वैश्रमणाः ॥ ४ ॥ स्वामिनः अधिष्टातृ साधर्म्यादत्रोपादानं प्रयोजनं तु अश्विन्यादि चन्द्रचक्रे यत्र यत्र चन्द्रो हस्ते क्षणसमयेः प्राप्तस्तद्दिशोऽधिपतिलोकाधिष्टितत्वेन हस्तदर्शयितुः स्वभावपरिज्ञानं तत्तदधिष्टातृकमन्त्रालभ्यञ्च तद्यथा— हस्ते क्षणसमये उदाहरणे सम्वत १७–३७ वर्षे आषाढसितद्वितीयायां शुक्रे पुष्य नक्षत्रं चन्द्रस्तस्य कर्कराशिः स्थानं तच्च सावित्र्याः प्रथमभागे तद्दिग् दक्षिणातस्याः पतिर्यमः तेन कोपाधिक्यं रोगवत्ता दक्षिणस्यां जिगमिषा दक्षिणात्यवस्तुरागः क्षुद्रकर्मकरलोक मैत्री कदाचित्समताः धर्मचिकीर्षा, औषधसेवा, स्वोदये पूर्वजक्षय इत्यादि स्वभावो बोध्यः । उच्छिष्ट चाण्डाली प्रभृति मन्त्रालभ्यं इन्द्रादि ध्यानमपि हस्तयोरिन्द्रः इति वैद्यकशास्त्र सुश्रुतोक्तेन तथा यमध्यानं पितृरेखायां वंश्यानां भ्रात्रादीनां बहुजीवित्वाकांक्षया वरुणध्यानमायुषो रेखायां तत् पूर्णत्वाकाङ्क्षया सोमयमयोर्जीवितात्

वरुणस्यायुर्वृद्धत्वाच्च धनदध्यानं धनरेखायां धनाकाङ्क्षया; तथा इन्द्र स्थाने[1] चन्द्रे राजा भोक्ता दाता आयुधरः उत्सवप्रियः गजावाहनधनी सुवेषः स्त्रीबाहुल्यः राजसप्रकृतिः स्वोपार्जित धनभोक्ता देवगुरुब्राह्मणप्रियः। बहु-सेवकः सेवातो लब्धधनः। इत्यादि स्वभावः। वरुणस्थाने चन्द्रे जलक्रीडा। आगमरुचिः। संग्रही। बहुभोजी। यवनमैत्रीकरः। पारसीप्रियः। मुखे-वाक्। कर्षुको गोधनप्रियः पितुर्वैरी। कृतघ्नः समुद्रजातवस्तुरागी। तरी-व्यापारः। क्षणं रक्तः क्षणं विरक्तः इत्यादि स्वभावः। धनदस्थाने चन्द्रे व्यवसायी धातुर्वादी योगप्रियः क्लेशकारी। अश्ववाहनः स्वर्णरूप्यव्यापारी। रक्ताम्बरधरः विवेकी। कृतज्ञः। बहुपकारी। कार्यसिद्धिकृत। मन्त्रजप्ता। तपस्वी। जितेन्द्रियः। साहसी। शूरः। पटुविधः इत्यादि स्वभावो वाच्यः। तिथि चक्रे वार चक्रे नक्षत्र चक्रे, चन्द्र चक्रे च यद्येकैव दिक् तदा एकः स्वभावः यदि दिग् भेदस्तर्हि मिश्रस्वभाव इति ॥ ४६ ॥

पितृरेखाबाल्यवयस्तारुण्यं मातृरेखिका।
वार्द्धक्यमायुरेखायां वायुःपित्तंकफस्तथा ॥ ४७ ॥

पितृरेखेति। बाल्ये ब्रह्मणो ज्ञानस्यधिकारात् पितृरेखा बालत्वं विष्णोभो-क्तृत्वात् तारुण्यं शिवस्य प्रकृतिप्रशमेन आयुरेखायां वृद्धत्वं, बाल्ये चाप-ल्याभ्द्रमणाधिक्यात् पितृरेखायां वायुः तारुण्येपित्तं तन्मातृरेखायां पुंभ्यः स्त्रीणां देहेऽन्तः पित्ताधिकस्य वैद्यशास्त्रे प्रसिद्धेः आयुरेखायां कफः वृद्धत्वे तदतिशयात् कफं विनामृत्योरभावाच्च ॥ ४१ ॥

चरस्थिरद्विस्वभावाः पुंस्त्रीनपुंसकाभिधाः।
नभस्थलाम्बुचारिण्यः सत्वं रजस्तमः क्रमात् ॥ ४८ ॥

चरेति। बाल्ये प्रकृतिचापल्यात्पितृरेखायां चरत्वं, स्त्रियाः साहस-माया-लज्जादिकामादिभावनां साङ्कर्यात् मातृरेखायां स्थिरत्वे वृद्धत्वे प्रकृतेजीर्ण-त्वात् स्थिरत्वं जीवस्य देहासाध्यातित्यक्षयाश्वासाद्याधिक्येन चरत्वमिति द्विस्वभावात्वमायुरेखायां पितृरेखायां पुंस्त्वंमातृरेखायां स्त्रीत्वं पाठसिद्धं, आयु-

१ पूर्वदिशि।

लेखायां, नपुंसकत्वं वृद्धत्वेन भोगासामर्थ्यान्नपुंसकत्वेनायुर्बन्धकान। बाहुल्याच्च । पितृलेखायामूर्द्ध्वलोकान्नभश्चरत्वं वायुस्वरूपाश्च मातृलेखायां मर्त्यलोकात् स्थलचारित्वं, आयुर्लेखायां पातालात्तत्र जलबाहुल्यान्नागलोकस्य जलाधिकारादम्बुचारित्वं, तिथिचक्रेण तिर्यग् मनुष्यभावनिर्णये रेखा प्राकट्येन नभः स्थलाम्बुचारित्वं निर्णेयं गोलेपितुरेखाधिकारात् पितृलेखायां पुंस्त्वेन सत्वं मातृरेखायां स्त्रीत्वेन रजः आयुर्लेखायां नपुंसकत्वेन तमः प्रती यत एव एवं सर्वत्रयात्मकं वस्तुरेखात्रयेण बोध्यं ग्रन्थविस्तरभयान्नात्र लिख्यते दिग्मात्र दर्शनात् ॥ ४८ ॥

ऊर्द्ध्वलोकादिव्यवस्थायाः फलमाह—

**यस्या प्राधान्यमेतासु तस्यारूपं निरूप्यते ।**
**जीवस्यागमनं वामे गमनं दक्षिणे करे ॥ ४९ ॥**

यस्या इति । यस्या रेखायां प्राधान्यं छेदभेद वेधादि वर्जित्वेन प्राकट्येन विशेषः एतासु तिसृषु रेखासु दृश्यते । तस्या रेखायाः स्वरूपं निवेदयेत् । जीवस्यागमनं कस्माद्भवादत्रागतिरिति जिज्ञासायां वामेति पितृलेखाविमृश्या स्त्रंशतेन उद्भवस्य तत एव योगात्, कस्यां गतौ, अयं जीवो यास्य तीति ज्ञानेदक्षिणकरे पितृलेखाविमृश्या गोत्रस्य जननान्वर्थात् ॥ ४९ ॥

अत्राति गाम्भीर्यात्सूत्रस्यभाष्यम् ।

**एवं चराचरं ज्ञेयं रेखाभिः सम्प्रकाश्यते ।**
**भतं भवद्भविष्यद्वा दीपिकाभिर्गृहंयथा ॥ ५० ॥**

उपसंहारमाह—एवमिति चरं द्वीन्द्रियादित्रसजीवरूपं वार्दलादि चलस्वरूपमजीववृन्दं, अचरमेकेन्द्रियं पृथिव्यादिस्थावर जीवरूपं घटाद्यजीवं वस्तुसर्वं ज्ञेयं ज्ञान विषयः रेखाभिरेव प्रकाश्यं यत् पिण्डे तद्ब्रह्माण्डे इति लोकात् स्वरसमयेऽपि वैशाखस्थानस्थित कटिन्यस्त करयुग नराकृतिर्लोक इति कथनान्नरदेहे सर्व लोकाधेय वस्तुस्थितेर्नरदेहस्यापि सर्व स्वरूपं युग लभ्यमिति सर्व लोकस्वरूपं नराधिशेषाल्लेखाभिर्ज्ञायत एव कटिस्थकर हस्ते कथनात्तत एव ज्योतिश्चक्रद्वय प्रतीतिः मायुक्ता युक्ता । पादनखानां

तु प्रतिबिम्बमात्रमेवास्थेयं गर्भान्तः पादयोरूर्ध्वभावेन करद्वय नखरूपज्योतिषां प्रतिफलनादत एव मेरावूर्ध्वं लोके चन्द्राः चन्द्रादित्य प्रतिबिम्बनात्कालद्रव्यमिति प्रज्ञापना वृत्तौ, आस्तां मनुष्य विषयो ज्ञेयपदार्थः इन्द्रादेव विषयस्यापि विभवादें लेखाभिरेव निवेदनात्—श्रीहर्षः नैषधीये काव्ये—

लेखानितम्बिनि वलादिसमृद्धराज्य—
प्राज्योपभोग पिशुना दधते सरागम् ।
एतस्य पाणिचरणं तदनेन पत्या
सार्द्धं शचीव हरिणामुदमुद्वहस्व ॥ १ ॥

तदेवमेकस्य हस्तदर्शयितुरेव केवलं भूतभाविभवद्वस्तु न रेखाभिः प्रकाश्यं किन्तु प्रश्नस्पर्शलग्नप्रेक्षणादिना सर्वस्य सर्वं प्रमेयं स्पष्टीक्रियते । यदि सम्यग् ज्ञातृगुरुयोग भाग्यबुद्धिवैशद्यव्युत्पत्तितदभ्यासाभवेयुरिति ॥ ५० ॥

अत्रार्थे सम्मतिं दर्शयति—

**पावइ लाहालाहं सुदुखं जीवियं च मरणं च ।**
**रेहाहिं जीवलोए पुरिसोमहिला जयाविजयम् ॥ ५१ ॥**

पाव—इति । प्राप्नोति लाभालाभं सुखदुःखं जीवितं मरणं च जयाविजयौ जीवलोके पुरुष महिला च जयाविजयम् ॥ ५१ ॥

**आउंपुत्तं च धणंकुलवंसंदेह धम्म सम्पती ।**
**पुव्वभवसांचियाणां पुन्नान कहंति रेहाण ॥ ५२ ॥**

आउमिति । आयुः पुत्रं धनं कुलंवंशं देहधान्य सम्पत्तिः पूर्वभवसंचितानि पुण्यानि रेखाः कथयन्ति । लाभयुक्तः अलाभः लाभालाभः मध्यपदलोपी समासस्तं तथा सुखं संयुक्तं दुःखं जीवितं मरणं च जयविजयौ जीवलोके पुरुषः स्त्रीचकारान्नपुंसकं रेखाभिःप्राप्नोति प्राप्त्यर्थानां ज्ञानार्थत्वाज्जानाति लब्धो यं वाक्यार्थ इत्यादिवत् तथा आयुः

लेखाः कथयन्ति व्यञ्जयन्ति । पुत्रं चकारत् पुत्रीं धनं गोधनादि कुलं पितुर्गोत्रं वंशः पूर्वपुरुषकृत सुकृत प्रासख्याति युक्ताजाति स्तं देहः कायः

धान्यं भोज्यं, उपलक्षणात्कनकादिः सम्पत्तिर्वि भूतिर्जन्मान्तरोत्पत्तिर्वा ततो द्वन्द्वः एतत् सर्वं पूर्वे भवनिर्मितानां पुण्यानां फलं रेखाः प्रकटयन्ति । ज्योतिः शास्त्रोक्तग्रहवत् शकुनरुतवद्वा । यथाहिग्रहाः स्वीयं परकीयं वाजगन्निष्ठं व्यापारं स्पष्टयन्ति, शकुनशद्वाःस्वीयं परकीयंवा सुखदुःखादिव्यञ्जयन्ति । यद्वा एकस्यैव गुहस्य शकुन शद्वस्यवा स्थानचेष्टाकालबलादियोगैर्नानाफलविमर्शः, तथाहि प्रयाणे दक्षिणरासभशद्वात् मार्गे चौरत्रयं वस्तुविमरणंतत् स्थाने पुनरागम इष्टसंम इष्टार्थंविलम्ब इत्यादिफलम् । तथा-सामुद्रिकोक्तलक्षणेप्वपीति भावः ॥ ५२ ॥

अथ रेखाणां सामन्यतो गुणान् आह—

**सूक्ष्माः स्निग्धाश्च गम्भीराः प्रलम्बा पधुपिङ्गलाः**
**अव्यावृत्तागतछेदाः कररेखा शुभां नृणाम् ॥ ३ ॥**

सूक्ष्माइति । सूक्ष्मास्तनव्यः तत्रापि नातिसूक्ष्माः, अन्यथा तणुयाहि हवेति भइणीओ इति प्रकरणाक्तं व्याहन्येत् तेनाग्रेकथ्यमानं तन्व्य इति-रेखा विशेषणंअइ तणूया इतिवचनात् प्रकटार्थम् । स्निग्धादीप्तिमत्यः गम्भीरा निम्माः प्रलम्ब दीर्घामधुपिङ्कलाः, पीतरक्ताः । अव्यावृत्ताः नपश्चाद्वलिता छंदरहिता मूलसहिता नृणांसादचर्यात् स्त्रीणांच कटेरेखा शुभाः प्रशस्ताः ॥५३॥

प्रत्येकं स्वरूपगुणानाह—

**त्यागायरक्ता गम्भीराः सुखाय मधुपिङ्गलाः ।**
**सूक्ष्माश्रियै भवेयुस्ताः सौभाग्याय समूलकाः ॥ ५४ ॥**

त्यागायेति । रक्ताः पुनर्गभीरारेखास्त्यागाय दातृतांकुर्युः । मधुपिङ्गलाः सूखं दधुः सुक्ष्मा धनकार्यः समूलासौभाग्यं जगद्वल्लभतां ददाति ।

महुपिंगलाहि सुहिया आखिणघण्णा हवंतिहि ।
रत्ताहिं सन्नाहिं मेहावी सुगोयसमत्त मूलाहिं ॥ १ ॥

इति प्रकरणे श्लक्ष्णाभिर्मेधावान सविद्य इति विशेषः ॥ ५४ ॥

व्यतिरेकमाह—

छिन्नाः सपल्लवा रूक्षाविषम स्थानकच्युताः ।
विवर्णास्फुटिता रूक्षानीलास्तन्व्यश्चनोत्तमाः ॥ ५५ ॥

छिन्ना इति । विषमावक्रस्थानकच्युता स्वस्थानं विमुच्यान्यत्रजाता, अन्यत्रप्रवृत्तावा विवर्णाःश्यामाः स्फुटिताअन्तः सछिद्रा रुक्षाः कान्तिहीना तन्व्यः अतिसूक्ष्मा न श्रेष्ठाः शेषं स्पष्टम् । अत्र विवेकविलासे स्थूलपदस्थान रूक्षाः रूक्षवपदस्थाने कृष्णा इति पाठः तदा विवर्ण घूसरा इत्यर्थः । ५५ ॥

प्रत्येकगुणैः फलभेदमाह—

क्लेशसंपल्लवा रेखा छिन्नाजीवित संशयम् ।
कदन्नं विषमाद्रव्य विनाशं विषमार्पयेत् ॥ ५६ ॥

क्लेशमिति । सपल्लवा वामतो दक्षिणतश्च निर्गतशाखा छिन्नामध्ये मूलतोप्यभावात् परुषात्वचि कठोरा ॥ ५६ ॥

रेखाणां सीमानमाह—

रेखाभिर्बहुभिः क्लेशः स्वल्पाभिर्द्धनहीनता ।
रेखा चतुर्पंश्चषाभ्यो बहुरेखा दरिद्रता ॥ ५७ ॥

रेखाभिरिति । चतस्रः पञ्चः षड्वोरखायुक्ताः स्वस्वस्थान नियतावा ताभ्यो वहुरेखाः: दरिद्रभाव एव, अलापि दरिद्रभाव एव एव अत्रापि शास्त्रोक्त रेखाभ्याधिक्ये दोषः न चेत् उर्ध्वरेखाश्चतसृषु इत्यादिवक्ष्यमाणं विरुद्धयते ॥५७॥

अमुमेवार्थं सम्मत्याद्रढयति—

वरपउमयत सरिसा अछिन्ना मंसलाय संयुता ।
ससणिद्धरतरेहा धणकणयपडिछिया हत्थे ॥ ५८ ॥

वरेति । पद्मपत्रं पद्मपत्ररेखातस्सदृशीमूलेस्थूलाः ततः सुक्ष्मासुक्ष्मतरा क्रमतस्तनुः मांसली हस्तमांसलतया । सम्पूर्णा स्वस्थानावधिं प्राप्ता-स्निग्धा रक्ताच रेखा धनकनकपडिछियापडिछियोदर्शीशद्वः प्रति पूर्णवाचकः धनक-कैः प्रतिपूर्णाहस्तेईदृग् रेखाङ्किताः ॥ ५८ ॥

व्यतिरेकमाह—

पल्लवियाय छिन्नाविसम विवन्निया निंदारेहा ।
हलिद्कुडियविवन्ननीला रुक्खाय अइतणुया ॥ ५९ ॥

पल्लविया इति । पल्लवितच छिन्ना विषमाविवर्णा रेखा निन्दिता हारिद्रा, स्फुटिता, विवर्णा नीला रूक्षाचातितनुका ॥ ५९॥

तत् फलमाह—

पल्लविएसुकिलेसो छिन्नासुय पावण्ह महादुःख ।
विरलाविवनंधणं नायघण नथिविसमासु ॥ ६० ॥

पल्लविए इति । विरलान्तः छिद्रवती विवन्धने घनं दत्ते हस्ते धनं नतिष्ठतीत्यर्थः । विरलाघणव्ययकरी इत्यपि क्वचित्पाठः । नीचरीत्या धनं वाकुलजातिलोपाद्वा धनं विषमासु वक्ररेखासु नास्ति धनमिति ॥ ६० ॥

हलिदा सुप चोरधणं कुडियविवन्ना सुवधणं मुइयं
नीलासुय रुखासुय सोगोय समाहिं वहुभोगो ॥ ६१ ॥

हलिदासु इति । हरिद्रासु पीतरेखासु चौर्याद्धनं स्फुटितासु विवर्णासु श्यामासु रेखासुवन्धनं वंदिस्थानं नरः कारागारं भुंक्ते नीलासु रुक्षासु रेखासु शोकः समाभिः, अवक्राभि र्लेखाभिर्वहुभोगः ॥ ६१ ॥

लेखा नियमं सामान्यतः प्राह—

मुख्या रेखा इमास्तिस्रः सहिता उर्ध्द रेखया ।
रेखा चतुष्टयमिदं प्रकीर्णकमतः परम् ॥ ६२ ॥

मुख्या इति । इमागोत्र १ धन २ आयु ३ र्लक्षणास्तिस्रोरेखा मुख्याः प्रायः सर्वेषां तद्भावात् ऊर्द्ध्वरेखया चतुर्थ्या युक्तायदा तदा लेखा चतुष्टयं, अत्र पश्चाप्यूर्द्ध रेखास्याभान्यतर—एकत्वेन गृहीता इति अतः परं योरेखा-विद्या १ सुत २ भाग्य ३ यशः ४ स्त्री ५ वाहन ६ मित्र ७ मृत्यु ८ राज्य ९ मातृ १० व्ययादिप्रकीर्णं करूपास्तासां चतसृणां विवरणरूपास्युः यद्यपि धनरेखया, ऊर्ध्द्ववलेखापिप्रकीर्णकरूपस्थात्तथा राज्यविभूतेर्लक्षणतया तस्यापि मुख्यत्मेव ॥ ६३ ॥

तत्रापि विशेषमाह—

विज्जो कुलं धण रुवरेहातियं आउ उधरेहाउ
पंचविरेहातुकर जणस्स जयंति पुव्वकयं ॥ ६३ ॥

विज्जोति । विद्या १ कुल २ धन ३ रेखात्रिकं आयुर्लेखा ४ ऊर्ध्वरेखा ५ एताः पञ्चापिरेखा हस्ते जनस्य पूर्वकृतं शुभाशुभं जल्पन्ति—कथयन्ति । पयडंति इत्यपि क्वचित्पाठः । द्वयंकुलोर्ध्वरेखारूपं दक्षिणा दिशः । धनायुर्लेखाद्वयं पश्चिमात इत्येव मुख्यं जन्मपत्रादौ रेखा चतुष्टयस्यैव मुख्यत्वात्, अत एव केषु भूमिवलेषु रेखाचतुष्टयं केषुचिद्विदिग् रेखाभिः सह रेखाष्टकं नरपतिजयचर्यायां स्पष्टं, उदीच्यां भाग्यधर्मादिरेखा, आयुर्लेखा मध्यपातिन्य पूर्वस्यामङ्गुष्ठान्निर्गता वाहनयात्रादिरेखास्ताः पितृलेखा मध्यपातिन्य इति मुख्याः विद्यायाश्चतुर्ष्वपि भावेषु साधकत्वात् पञ्चम्यपि रेखा मुख्यैव लक्ष्म्याः सरस्वत्याश्च लोकानामाजीवनादिति प्रकरणकृदभिप्रायः ॥ ६३ ॥

एतासां न्यूनाधिकत्वे फलमाह—

अरेखं बहुरेखं वा येषां पाणितलं नृणाम् ।
तेस्युरल्पायुषो निश्वाः दुःखिता नात्र संशयः ॥ ६४ ॥

अरेखमिति । मुख्यरेखाभावो, अरेखं वा, अथवा मुख्य प्रकीर्णक रेखाभ्योऽधिकत्वे बहुरेखं येषां करतलं तेऽल्पायुषो यद्वा निश्वा—दरिद्राति ग्रन्थान्तरगतोऽयं श्लोकस्तेन रेखाभिर्बहुभिः क्लेश इत्यनेन न पुनरुक्तिः ॥ ६४ ॥

पूर्वमायुषः परीक्षाया एवकथनात् प्रथममायुर्लेखाविमर्शमाह—

यावत्यङ्गुलयो लंघ्या मूलाज्जीवितरेखया ।
तावत्यः शरदां ज्ञेयाः पञ्चविंशतयो बुधैः ॥ ६५ ॥

यावत्य इति । आयुरेखा कनिष्टादि यावत्परिमाणा । अङ्गुलीर्लङ्घते, तावत् पञ्चविंशतिका वर्षमायुर्ज्ञेयम् ॥ ६५ ॥

अत्रापवादमाह—

कालहानि नयापेक्षं ज्ञेया विंशतयोऽपि च ।
आयुरेखास्वरूपाच्च अल्पमृत्युर्विचार्यते ॥ ६६ ॥

कालेति । कालस्य कालजन्यपदार्थस्य अवसर्प्पणात् तं नयं विचार्य उच्यते तदा तावद्विंशतिकावाच्या । कालस्यावसर्प्पणं वोत्सर्पणं नियतो धर्मः; दक्षिणोत्तरायणवत्, अथायुर्लेखामहती दृश्यते, स्वल्पेनापि कालेन मृत्युस्तस्य जायमानः श्रूयते । तत्र का गतिरित्या शङ्क्याह—आयुर्लेखास्वरूपं विलोक्याल्पमृत्युर्विवक्षितः कालादल्पेन कालेन मृत्युरल्पमृत्युरपि जन्तोर्विचार्यते ॥ ६६ ॥

अथ रेखाविमर्शनं साक्षाद्वक्ष्यते । प्राक्तनोक्तिभिरिति प्रतिज्ञानात् लोकानां प्रत्ययकारणं प्राचीनं हस्तचिन्हसूत्रमेव लिख्यते तत्र प्रथमः श्लोकः ।

हस्ताचिन्हं प्रवक्ष्यामि गुरूक्तं श्रद्धयान्वितम् ।
लक्षणै ज्ञायते सद्यो जीवितं च शुभाशुभम् ॥ ६७ ॥

हस्तचिन्हमिति । हस्तस्यचिन्हं रेखादिलक्षणं प्रकर्षेण फलयोजनरूपेण वक्ष्यामि—कथयिष्यामीति सम्भावनार्थे प्रत्ययः । गुरुणा उक्तं एतेन पारं पर्यागतोऽयमर्थ इति ज्ञाप्यते श्रद्धया सत्यमिदमिति, प्रतिपत्त्यासहितं, इत्यनेन लक्षणज्ञाने श्रद्धाया एव मुख्यत्वं व्यञ्जितं प्रपञ्चितं चैतत् प्राक् लक्षण प्रकथने विधेयं किमित्याह—लक्षणैर्लेखादिभिः सद्यो ग्रहादिविमर्शं विना जीवितं आयुर्ज्ञायते चकाराद्धनगोत्र भाग्यादि न केवलं शुभमेव किन्तु अशुभमप्यर्थहान्यादि शुभज्ञानेऽशुभज्ञानावश्यं भावात्, अशुद्ध रुप्यक ज्ञानं विना शुद्ध ज्ञानस्याभाव एवेति शुभाशुभग्रहे सर्वस्यापि संग्रहात् जीवितस्य पृथग् भणनं प्राधान्यार्थम् ॥ ६७ ॥

आयुरेखात्र तर्जन्यां तस्याष्टशतमायुषः ।
वेध्यारेखाभवेद्यस्य लक्ष्यते तस्य लक्षणम् ॥ ६८ ॥

आयुरेखेति । यस्य जीवितरेखा तर्जन्यां प्राप्ता भवति तस्याष्ट—शतवर्ष जीवीत्वं आयुर्लेखायामन्तरालेऽन्या रेखापतति सानिर्धनः किन्तु तदपि लक्षणं

किञ्चिद्भावज्ञापकं लक्ष्यते ज्ञायते अनेन सर्वं हस्तरेखामात्रं लक्षणमेव मन्तव्यं नालक्षणमित्युक्तम् ॥ ६८ ॥

वेधास्त्रिधा—तमेवाह——

वामेवामेऽत्रवेधेन जले मृत्युं समादिशेत् ।
रेखा सरलवेधेन शस्त्रेणमृत्युमादिशेत् ॥ ६९ ॥

वाम इति । स्पष्टम् ॥ ६९ ॥

दक्षिणेदक्षिणेवेधे वन्हिसर्पभयान्मृतिः ।
वामदक्षिणपार्श्वस्थाद्वेधान्मृत्युर्महारुजः ७० ॥

दक्षिण इति । दक्षिणवेधेऽपि वेधकारिणीया रेखा सा वेधमुद्दिश्य दक्षिणगा परं मुखे स्थूला तदासर्पात् मुखे तनुत्वे वन्हेर्मृत्युरिति विवेक सर्पस्य मुखे स्थूलत्वात् वन्हेर्ज्वालामुखे तनुत्वादिति । उभयोर्वेधयोर्युगपद्भावे महारोगात् मृत्युः क्रमादुभयतो वेधे तत्तद्वर्षे तत्तत्पूर्वोक्तवस्तुतोभयमेव न मृत्युरित्यर्थः ॥ ७० ॥

आयुर्विचार्य धनविमर्शमाह——

धनरेखायस्य दीर्घो तस्य धान्यमहाद्भुतम् ।
भित्ररेखा भवेद्भिन्नं द्रव्यव्यय समाकुलम् ॥ ७१ ॥

धनरेखेति । रेखा भेदो नाम मुखे मूले वा रेखायां मार्गद्वयं तदाद्रव्ये व्ययो महान् ॥ ७१ ॥

नतिष्ठति चिरंकालं त्रिशूलस्थानरेखया ।
मध्यत्रिशूले तद्द्रव्यं छलछद्मादिसम्भवम् ॥ ७२ ॥

न तिष्ठतीति । मूले धनरेखायाः त्रिमार्गत्वे त्रिशूलं, तदपि रेखाया मध्ये युगपद्वामदक्षिणमार्गद्वये मध्येत्रिशूलं स्यात्, तदा धूर्तगलकर्तकग्रन्थिभेदादि कुव्यापारजातं धनम् ॥७२॥

धर्मरेखास्थमाह——

मध्याङ्गुलीमूलगता धर्मरेखा निवेदिता ।
वज्ररेखा भवेद्यस्य स्वश्रद्धाधार्मिकोहि सः ॥ ७३ ॥

मध्याङ्गुलीति । अत्र विवेकविलासे, अनामिका तलेधर्म रेखा कथना-न्मतान्तरं यद्वा पूर्वश्लोके छलछद्मादिकथनात्, अकारप्रश्लेशे अधर्म रेखा प्रोक्ता किञ्चिद्विश्वस्तघातादि महापातकं तस्य लगति । नन्वेवं श्लोकाग्रे धर्मपदद्वय-विरोधः, न च वाच्यं सा वज्ररेखा वाज्रकारीऽनामिका मूलगतएवेति । तस्याग्रे विविच्यपाठादिति चेत् न तत्रापि स्वश्रद्धया, अधार्मिकः कदापि श्रद्धयाधर्मं न शीलतीत्यकार प्रश्लेप एव व्याख्यानात् । नन्वयमाकृष्टोऽर्थः प्रतिभाति, इति चेन्न; हस्तबिम्बेविवेकविलासे चाधर्मरेखास्थानात् युक्तार्थ-त्वात्, अत एव विप्राणां जापे मध्यामूलपर्वणि न स्पर्शः यद्वा वामहस्ते मध्याया मूले धर्मरेखा दक्षिणेऽनामिकामूले इति ॥७३॥

वज्रधिकारात् स्थानान्तेरऽपितत्फलंप्राह—

वज्रं-अनामिकामूले तत् प्रतिष्ठाविधायकम् ।
तस्मिन्भिन्ने भवेच्छेदो मध्ये रेखात्र मध्यमा ॥ ७४ ॥

वज्रमिति । स्पष्टम् । मध्ये वज्रमध्ये लेखामध्यमा प्रतिष्ठा ध्वंस कृता ॥ १४ ॥

मृत्युरेखा स्थानमाह—

अङ्गूष्ठादौ शत्रुहांत दैवतस्यालयं भवेत् ।
लक्ष्यणं तस्य वक्ष्यामि मृत्युर्येनेह बोध्यते ॥ ७५ ॥

अङ्गूष्ठादाविति। अङ्गूष्ठात् प्रारभ्या न्तेशत्रुहा तर्जनी इदं दैवतस्यालयं स्थानं पीत्र्यतीर्थत्वात् ओ इत्यव्ययं, यद्वा आदिशब्दोऽत्र नव्यवस्थावाची किन्तु प्रकारवाची तथाच अङ्गूष्ठरुपोय आदिमूल स्तल शत्रुहारुपो यः अन्तपर्यव सानं तस्मिन् दैवतं देवभावःस्वर्गमनं तस्या लयंस्थानं स्यादित्यर्थः । अन्यथा-नन्वयः । अन्यथा वासूत्रकाराणां विचित्रागतिरिति न्यायादेवं निबन्धः । तस्य स्थानस्य लक्षणं लेखाद्याकारे वक्ष्यामीति क्रियोपादानात्, अधिकारा न्तरं ध्वन्यते । येन लक्षणेन मृत्युरिह हस्ते ज्ञायते अङ्गूष्ठाङ्गुलमध्यस्य क्षिप्रमाक्षेपमारणामिति, वाग्भटेऽपि मृत्यु स्थानसूचनात्, अत्र केचिदाहुः—दै-वतालयकथनात् पूर्वस्यां श्रीगृहं,आग्नेय्यां महानसं, दक्षिणस्यांशयनं, नैऋत्या-

मायुधस्थानं, भोजनं, पश्चिमायां वायौ धान्यसंग्रहः उदीच्यां जलस्थानं, ईशान्यां देवगृहमिती वस्तुप्रातीत्या हस्तरूप सर्वंगृहं ज्ञेमम् । तेनसूतिकालयः कनिष्ठामूलं महानसंतु, अङ्गुष्ठमूले तत्रैव भ्रातृभगिनी प्रभृतिरेखा सम्बन्धात् अङ्गुष्ठः स्तम्भोङ्गुल्यः पद पीठिका वासोगृहं करभे पश्चिमाया मध्ये भाण्डागार इति । अत्र निधिलाभार्यविमर्शो नरपति जयचर्या प्रोक्ताहि वलय चक्रवत् हस्तनक्षत्र चक्रेऽष्टाविंशति नक्षत्र स्थापनात् पूर्वस्यां मध्ये कृतिकाव्यवस्थानाच्च यत्रतत्काले हस्ते क्षणे चन्द्रस्तत्र निधिस्तल्लाभाविमर्शस्तद्ग्रन्थादेव वेद्य इति ॥ ७५ ॥

तस्य मध्योन्नता रेखा विदग्धैर्ज्ञायते सदा ।
हताशुरेको द्वाभ्यांच त्रिभिः सह मृतिर्जने ॥ ७६ ॥

तस्येति । दैवतालयमध्ये उन्नता रेखात्रिवेण्याः परतीरे तर्जन्याः, अधोभागे यदा एका तदा नरएक एव हताशुर्गतप्राणः स्यात् एक एव म्रियत इत्यर्थः । द्वाभ्यां रेखाभ्यां द्वा भ्यां सह म्रियते चकाराद्रेखात्रये त्रिभिस्त्रित्वस्य बहुत्वोपलक्ष णावहुभिः सह मृत्युरिति पण्डितै ज्ञायते ॥ ७६ ॥

तत्रापि विशेषमाह—

रेखाभिस्तिसृभि र्नृणां जले मृत्युश्चनान्यथा ।
चतुर्थ्या रेखया शत्रुरण मध्ये मृतिर्भवेत् ॥ ७७ ॥

रेखाभिरिति । अत्र सामान्योक्तावपि वामवेध विद्धेरेखात्रये जलेमृत्युरेतल्लक्षणं, अन्यथा सत्यमेव इत्यर्थः रेखा चतुष्टये रणे संग्रामे मृत्युः ॥७७॥

अथ यशोभाग्यादि लक्षणमाह—

अङ्गुष्ठोर्ध्वे यवः पूर्णः सदा पुंसां यशस्करः ।
मध्य वेधे भवेदर्थ पञ्चाशद्वर्षतः परम् ॥ ७८ ॥

अङ्गुष्ठोर्ध्वमिति । अङ्गुष्ठस्योपरि भागे सुराधिष्ठित मध्यपर्वणो मूर्द्धनि यवः पूर्ण अखण्ड पुंसां सदा यशस्करः तत्र पुंसां दक्षिणे स्त्रीणां वामेङ्गुष्ठे, इति सर्वत्र ज्ञेयम् । वामभागे तु इत्यादि सामान्यसूत्रानुवादात् तत्रापि मध्ये वेधे सति पञ्चाशद्वर्षतः परतो यद्वा अर्द्धमिति कोऽर्थः स्वायुषोऽनुसारात्

अर्द्धंवयोयावत् यशस्करः । अविद्धस्तु सदा यावज्जीवमिति भावः ॥ ७८ ॥

**करादौ दृश्यते रेखा लक्ष्मी सौभाग्यदायिनी ।**

**तस्याग्रे शृङ्खला यस्य रूपवान् धन संयुतः ॥ ७९ ॥**

करादाविति । मणिबन्धे रेखा दृश्यते सा लक्ष्मीं साभौग्यं च दत्ते तस्य मणिबन्धस्य अग्रेशृङ्खला यस्य पुसः स्यात् सरूपवान् धनसंचयः ॥७९॥

**यवैरङ्गुष्ठ मध्यस्थै विंद्या ख्यातिविभूतयः ।**

**शुक्लपक्षे तदा जन्म वामाङ्गुष्ठे तु रात्रिकम् ॥ ८० ॥**

यवैरिति । अङ्गुष्ठमध्यपर्वाणि जातैर्यवैर्विंद्या–ख्याति कीर्तिविभूतिः समृद्धिस्ततो द्वंद्वस्ताः स्युर्जन्मशुक्लपक्षे भवति वामाङ्गुष्ठे यवैस्तु रात्रौभवं रात्रिकं जन्म । अत्र वामाङ्गुष्ठे तु रात्रिकामिति कथनात् यवैरङ्गुष्ठ मध्यस्थैरित्यत्र दक्षिणाङ्गुष्ठ एवेति नाकर्षः स्त्रीपुंसोः सामान्यपरत्वात् सूत्रस्य ॥ ८० ॥

तत एव विशेषमाह·—

**यवेत्र दक्षिणाङ्गुष्ठे दिवाजातं विनिर्दिशेत् ।**

**उभयाङ्गुष्ठगे तस्मिन् कृष्णपक्षे दिवा भवम् ॥ ८१ ॥**

यवेत्रेति । अत्र सामुद्रिकशास्त्रे दक्षिणाङ्गुष्ठे यवे दिवाजातं पुरुषं वा स्त्रियं वदेत् । उभयत्राङ्गुष्ठेवामे, अवामे च यवस्तदा नरं कृष्णपाक्षिकम् । दिनं जातं कथयेत्, अन्योन्यं लक्षणव्याघातात् परिशेषादौत्सर्गिकं पुरुषत्वात् कृष्णपक्षो दिनं च फलमित्याशयः, क्वचिदुभत्र यवोदये यत्पक्षे हस्ते क्षणं तत्प्राधान्यमित्यग्रे वक्ष्यते । उभयत्र यवाभाविष्येवं पुरुषस्य वेद्यं स्त्रीणां तुभयत्र यवाभावे शुक्लपक्षे रात्रौच जन्मवाच्यम् ॥ ८१ ॥

**प्रान्तेजीवितरेखाया स्तिर्यग्रेखा यदा भवेत् ।**

**तदाश्वात्पतिताज्ञेयाः श्यामा चेदीश्वराद्भयम् ॥ ८२ ॥**

प्रान्त इति । आयुर्लेखायाः प्रान्ते तिरश्चीना रेखागया तदा अश्वात्पतनं, सा रेखा चेत् श्यामाकृष्णा तदा खराद्गर्दभतो भयं स्यात् ॥ ८२ ॥

**आयुरेखामध्यभागे उभे रेखाव्यवस्थिते ।**

**एकदीर्घा लघुश्चैका तदोर्द्ध्वं नियतेद्गृहात् ॥ ८३ ॥**

आयुरेखेति । जीवितरेखाया मूले करभस्थले अङ्कुशवद्वक्रारेखा तदा हस्तिनः पार्श्वाद्भीतिर्हस्ती प्राप्तिरेखापि गजबन्ध राज्यसूचिका तत्रैव परं तस्यान्तरे छेदे भयं रेखान्तराले विवरे जलभयम् ॥ ८३ ॥

आयुरेखा तले वक्रा या रेखाङ्कुशवद्भवेत् ।
तदा हस्तिभयं विद्याद्रेखाच्छिद्रे जलाद्भयम् ॥ ८४ ॥

आयूरेखेति । उभे रेखे क्रमाद्वेधकेस्तस्तदा गृहाद्वाशकाटिकाया वा पतनं वाच्यम् ॥ ८४ ॥

आयुरेखातले रक्ता तदा रक्तविकारतः ।
गंडव्रणादिर्घातो वातत्तद्वर्षागमेभवेत् ॥ ८५ ॥

आयूरेखेति । तले मूले रक्ता तदा रक्तविकारो लोहितोपद्रवात् गंडो वा व्रणो वा घातो वा द्वादशद्वादशवर्षैर्जायते ॥ ८५ ॥

आयुरेखान्तरे शुक्ला विन्दवः सन्निपात्तदा ।
अग्निभिर्विन्दुभिरक्तैः श्यामैर्वन्दिभयं भवेत् ॥ ८६ ॥

आयूरेखेति । सन्निपातोवातापित्तकफसाङ्कर्यात् रोगभेदः । रक्तैविन्दुभिर्वन्हिभयं कृष्णैः करावन्धनम् ॥ ८६ ॥

पितृरेखाङ्गुष्ठरेखान्तरे यातूर्ध्वं रेखिका ।
तत् संख्यदारभोगः स्याद्वेधे क्लेशश्च तद्भवः ॥ ८७ ॥

पितृरेखेति । गोत्ररेखाङ्गुष्ठ प्रथमपर्व रेखामध्ये ऊर्ध्वरेखा यावत्यस्तावत्स्त्री भोगस्तत्रापि वेधे तज्जन्यः क्लेशः स्यात् ॥ ८७ ॥

अङ्गुष्ठमूलादारभ्यमणेरवधिकन्दगाः ।
यावत्योरेखिका स्तावत्पर्यन्त्यानि विचारयेत् ॥ ८८ ॥

अङ्गुष्ठ मूलादिति । स्पष्टम् । कन्दो नृपासनं तत्पर्यन्तं प्राप्ता ॥८८॥

पुत्रास्तु दीर्घरेखाभिर्लघुभिर्दारिका मताः ।
जीवनं मरणं त्वेषाभभेदाद्भेतः स्मृतः ॥ ८९ ॥

पुत्रा इति । दीर्घासरला यावत्यो रेखास्तावन्तः पुत्रालाघवो वक्राश्च याव-

त्यस्तत्प्रमाणाः पुत्रिकाः यस्यां रेखायां भेद छेदो वेधोत्रा तावदपत्यमरणं, अन्यथा जीवनम् ॥ ८९ ॥

बन्धुसंख्यावदन्त्येके निर्णेयं तदगुरोर्गिरा ।
आयुरेखापल्लवाः स्युर्हानयेङ्गुलि सम्मुखा ॥ ९० ॥

बन्धुसंख्यामिति । केचनाचार्या—अङ्गूष्ठमूले मणिपर्य्यन्त लेखाभिभ्रातृ भगिनी संख्यां वदन्ति तदभिप्रायः । प्रायोबहुश्रुतगम्यः । तत्र व्याख्यान्त्य-परे महतिराजयोगे हस्ते विद्यमाने बन्धूनामनुपयोगात्, अङ्गूष्ठमूले पुत्रपुत्री परिगणनं पदरेखाया अत्र प्रत्यासत्तेस्तदा करभेप्रियाः सेवकाः परिगणनीया । सामान्यलोकस्य चाङ्गुष्ठमूले भ्रातृभगिनी संख्याकरभे पुत्रदारिकयोरिति । आयुर्लेखायां अङ्गुलि सम्मुखाः पल्लवहानि सूचकाः ॥ ९० ॥

अङ्गूष्ठसम्मुखाः सर्वे द्रव्यसम्पत्तिकारिणः ।
मातृरेखापल्लवै स्तैर्लभ्यं मातुलवर्गतः ॥ ९१ ॥

अङ्गूष्ठेति । राज्ञः सम्मुख जीवितरेखापल्लवा द्रव्यप्राप्ति कारिणस्तत्रापि वर्षपरिज्ञानं तत्तत् स्थानभागादेव एवं मातृरेखापल्लवष्वपि वेद्यम् ॥ ९१ ।

तदेव वक्ति——

आयुरेखा सम्मुखैस्तैर्नलभ्यं मातृपक्षतः ।
कनिष्ठानामिकायोगे स्नेहः स्यात् स्वजनैर्दृढः ॥ ९२ ॥

आयुरेखेति । मातृपक्षो मातुलादिः कनिष्ठानामिकयोः सम्बन्धे स्वजनस्नेहः ॥ ९२ ॥

व्यतिरेकमाह—

सान्तरत्वे न योः पूर्तिः छेदः स्यादन्तरान्तरा ।
छिद्राङ्गुलिभिर्द्रारिद्र्यं सान्द्राभिर्द्धनवान्नरः ॥ ९३ ॥

सान्तरत्व इति । एवं च एकं लक्षणं फलद्वय सम्पादकं यथाश्रिया कीर्तिः सम्पत् शुक्लपक्षादिवदेकस्माल्लक्षणाद्बहु फललाभस्यानन्तरायात् ॥ ९३ ॥

अथ मातुः पितुर्वा प्रथमं मरणमित्याश्चर्यपरिज्ञानमाह—

तर्जन्यधस्त्रिवेण्यन्तर्यदा रेखाद्वयं भवेत् ।
आद्यादैर्घ्येपितुर्मृत्युः प्रथमं मातुरन्यथा ॥ ९४ ॥

तर्जन्यध इति । रेखाद्वयं मृत्युरेखातस्त्रिवेणीमध्यगतं स्यात् तन्मध्ये प्रथमा त्रिवेणी तो गणनापेक्षया तस्या वृद्धत्वे प्रथमं पितुर्मरणं, अङ्गुष्ट भागानुषङ्गात्, द्वितीया मृत्युरेखा पार्श्वस्था तस्यादीर्घत्वप्रथमं मातुर्मरणं स्यात्, अङ्गुलीप्रसङ्गात् ॥ ९४ ॥

पितृरेखा मातृरेखा मिलने गृहबन्धकः ।
कलत्रमित्र सम्बन्धो वामे तत् सङ्गमे करे ॥ ९५ ॥

पितृरेखेति । गोत्ररेखाधनरेखयोर्यस्य त्रिवेण्यां स्पष्टोयोगस्तदा गृहबन्धो-गृहकार्यभारस्तेन निर्वाह्यते वामहस्ते तयोर्मीलने कलत्रपाक्षिक वैवाहिक-लोकेन तथा मित्रैर्भूयान् स्नेहः । अमीलने तदभावः । ९५ ॥

कनिष्ठा यदि दीर्घास्यादूर्ध्व रेखा समाश्रिता ।
व्यवसायात्ततो लाभो यशस्तस्य महोज्ज्वलम् ॥ ९६ ॥

कनिष्ठेति । यदा अनामिकायाः कनिष्ठा दीर्घा तस्यां पुनरूर्ध्वरेखापि भवेत्तदा तस्य व्यापारे लाभः यशोऽपि बहुलम् ॥ ९६ ॥

आयुरेखान्तरा छेदे जलाद्वा ज्वलनाद्भयम् ।
स्त्रीप्रसङ्गादपयशः तथाल्पमृति सम्भवः ॥ ९७ ॥

आयूरेखेति । जीवितरेखायां छेदेऽग्रतः पुनः सन्धाने जलात्, अग्नेर्वा-भयम् । वामहस्ते जीवितरेखा छेदे स्त्रीप्रसङ्गा त्तत्पाक्षिकाद्वा अपवादः तथा स्त्रियाः अल्पमृत्युरावलीति प्रतीता जायते ॥ ९७ ॥

अन्तेयदायूरेखायाः रेखाङ्गूष्ठधनोन्मुखी ।
तदापूर्वं सुखी पश्चाद्दुःखी वा निर्धनः पुमान् ॥ ९८ ॥

अन्त इति । यदायूरेखाया अन्ते अन्तोऽत्र मूलरूपस्तत्र रेखानिर्गता-सा अङ्गुष्ठ धनरेखयोः उन्मुखीस्यात्तदापूर्वं सुखीभूत्वा पश्चाद्दुःखी नरो वा नारी स्यात् ॥ ९८ ॥

चतुष्किका स्यादङ्गूष्ठ पितृरेखान्तरे यदि ।
तदा वृश्चिकदंशः स्याद्दंष्ट्रायां दंष्ट्रिणोभयम् ॥ ९९ ॥

चतुष्किकेति । चउकडीति । लोकप्रसिद्धा यदा अङ्गुष्ठगोत्र लेखयो-र्मध्येस्यात्तदा वृश्चिकेन दष्टः सर्पदष्टोवा यदात्रिकोणकं तदा कुर्कुरश्रृगाल-व्याघ्रदिदंशः तत्रैव शृङ्गाकारे शृङ्गिणो भयमित्यादि ज्ञेयम् ॥ ९९ ॥

मित्रपीडा मातृरेखायुरेखा मूल सङ्गमे ।
यौवने सुख भोक्ता स्यादङ्गुष्ठावयवे यवे ॥ १०० ॥

मित्रपीडेति । मातृजीवितरेखयोमूले मीलने मित्रात् मित्रस्यवा दुःखम् । दुःखे यवे यौवने सुखसंभोगात् स्त्रीवल्लभः ॥ १०० ॥

इह यद्यपि ग्रन्थकृतस्वनिवन्धेऽपि भ्रातृपुत्र रेखादिविमर्श वक्ष्यति, तथाप्य पुरातनाचार्य ग्रन्थव्याख्यानुरोधाद्व्याख्यातस्तेन न पुनरुक्तिः ।

अथ प्रकृतमायुर्लेखा विमर्शमेवाह—

कनिष्टाङ्गुलिदेशाच्च रेखागच्छति मध्यमाम् ।
अविछिन्नानिवर्षाणि शतमायुर्विनिर्दिशेत् ॥ १०१ ॥
कनिष्ठाङ्गुलिदेशाच्च रेखागच्छति मध्यमाम् ।
अविछिन्नानिवर्षाणि अशित्यायुर्विनिर्दिशेत् । १०२ ॥
कनिष्ठाङ्गुलिदेशाच्चरेखा गच्छत्यनामिकाम् ।
अविछिन्नानि वर्षाणि षष्टिमायुर्विनिर्दिशेत् ॥ २०३ ॥
कनिष्ठाङ्गुलिदेशाच्च रेखा तत्रैव गच्छति ।
त्रिंशद्वा विंशवर्षाणि तस्यायुः परिकीर्तिता ॥१०४ ॥

कनिष्ठेत्यादि श्लोकचतुष्टयं स्पष्टम् । १०१-१०२-१०३-१०४

ग्रन्थान्तराप्तं विशेषं तदुक्त्या वाह—

कालांगुलीइ रेहा पए सिणिलंधि उण जस्स गया ।
अखंडा अफुडिया वरिसाण सयं च सोजीयइ ॥ १०५ ॥

कालाङ्गुलीति । काला-श्यामा अङ्गुली कनिष्ठा राहुशन्योरधिष्ठा नाद्रा-त्रिप्रत्यासतेश्च तन्मुला लेखाप्रदेशिनीं विलङ्घ्य यस्यागता अखण्डा अस्फुटिता वर्षाणां शतं सजीवेत् ॥ ५ ॥

अत्र विशेष बोधाय भागानाह—

वीसंति संचालं पन्नासंसंसठी सतरि असिइ ।
नव इक्किणिठिया उपएसिणि जावजाणिज्जा ॥ १०६ ॥

वीसमिति । विंशति १ त्रिंशच्चत्वारिंश ३ त्पंचाशत ४ षष्टि ॥ सप्तति ६ अशीति ७ नवत्य: एतावन्ति वर्षाणि कनिष्ठात: प्रारभ्य प्रदेशिनीं यावदायुर्जानीयात्, एतद्वचनादेव कनिष्ठादिक्रम: श्रेयान् नाङ्गूष्ठतर्जन्यादिस्तेन विवेकविलासोक्तां संख्यां किञ्चिद्व्यभिचारिणीं दृष्ट्वा न भ्रमणीयम् ॥ ६ ॥

अथैषां निर्णयहेतुमाह—

करजां वा चतुष्काधोभागा नष्टौ प्रकल्पयेत् ।
यथाप्तं तत्तुरेखाया माद्योलङ्घनतः शतम् ॥ १०७ ॥

करजाम्बेति । करजाम्वा यद्यपि पदान्नखाजायन्ते तथापि पादस्या लक्षण तुर्यांशस्थानात्करे सर्वांगीण लक्षणात् प्राधान्ये नैवं रूढिः यद्वा पादनखा सन्तोप्यसन्त एव करनख प्रतिबिम्बरूपात् ज्योतिषां करनखानां देवीस्तद्रूपा द्वा तेषां अम्बे व मातेव करजाम्वा अङ्गुल्यः तत्राङ्गूष्ठस्यापि क्वचिद्ग्रहणात्त निवारणाय चतुष्कमिति । तस्याधोनीचैः प्रदेशेऽष्टाविति सूत्रे विंशत्याद्यष्टकस्यैव पाठादन्यथा भागान्न च प्रकल्पयेत्-चिन्तयेत् । शङ्कु दवरकं वातद्रेखा प्रमाणं कृत्वा भागान् कुर्यात्, यथा जीवितरेखायां तर्जन्या उल्लङ्घने शतं आप्तं. लब्धं निश्चीयते । नन्वेयं पञ्चभिर्दश वर्षाणीति वचनाद्दशवर्षायुर्निश्चयोऽपि वाच्यस्तथा च दशावस्था वद्दशभागाशतादधिकायुषि द्वादशत्रयोदश वा भागाः स्युरिति चेन्न; द्वादशवर्ष पर्य्यन्तं हस्तवीक्षणस्य रेखाणामप्राकट्यात्रयुक्तिः पञ्चभिर्दशवर्षाणीति सूत्रे विंशत्यादेर्दृढीकरणाय तेन भागनवकमेव, अधिकेत्वायुषि प्रागेवकृतोत्तरत्वादिति ॥ १०७ ॥

अत्र भाष्यं—

पूर्वापरवाक्ययोजनाय एवमिति स्पष्टम् ।

अथ क्रमप्राप्तं धनरेखाविमर्शमाह—

अस्ताचलादद्रव्येरखा रक्ता खण्डाधनप्रदा ।
तस्यां चेत्पल्लवाजीव रेखा मुखा-अपत्यदा ॥ १९८ ॥

अस्तचलादिति । स्वसमये उदयास्ताचलयोरैक्यात् हिमवन्नामानगः स्वर्णमयो भरतक्षेत्र सीमाकारी तत्रैव लक्ष्म्याः स्थानात् वसुधाराया धनदपुत्र्या लक्ष्मी स्वरूपेण बौद्धैः पठनाद्वा लोकेऽपि—

'अस्त्युत्तरस्यां दिशिदेवतात्मा हिमालयो नामनगाधिराजः' इति कुमारसम्भवकाव्ये अनन्तरत्नप्रभवत्वेनोक्तेः ।

यथा लोके एकैवदिक् इन्द्राश्रये ऐन्दी पूर्वावरुणाश्रये वारुणी पश्चिमा इति भेदद्वयविकल्पात्, द्वेधा जैनमतेऽपि, आकाशास्तिकाये एकद्रव्यत्वेऽपि षट् द्रव्यसाहित्य विकल्पालोकाकाशमलोकाकाश इतिद्विधा प्रसिद्धिस्तद्वेदत्वापि तत्रापिहिमवन्नगे यत्र सूर्य उदेति तदंशे उदयाचलो यत्रास्तमेति । तत्रास्ताचल इति ततोद्रव्यरेखा प्रभवति सा रक्ता सम्पूर्णा धनप्रदा अत एव मातृरेखापीयमेव । स्त्रीणां लक्ष्मीरुपात् किञ्चदारिद्र्यनाशन इतिवचनात् दीपोलक्ष्मी लक्षणं तत् प्रकाशोऽपि पश्चिमायामस्ताचले सूर्यप्राप्तेः स्यात् रात्रौ सौरं तेजोदहनं विशतीति लोक्तोक्ति प्रामाण्यात् तस्यां धन रेखायां ये पल्लवा जीवितरेखा सम्मुखास्ते अपत्यदास्तावद्वारं, अपत्यानि स्त्री तस्य पुंसः प्रसूते संतानरूपमेव धनं नान्यद्धनमित्यर्थः । यद्वा तावदपत्यसुखमेव धनसुखं मन्तव्यं तेनाग्रे वक्ष्यमाण सन्तानरेखाभिर्न पुनरुक्तिः ॥ १०८ ॥

अङ्गूष्ठसम्मुखा येते तावद्वार धनार्जनम् ।
तस्याच्छेद राजदण्ड चौराद्धानिस्तु वेधतः ॥ १०९ ॥

अङ्गूष्ठेति । ये पुनरङ्गूष्ठसम्मुखास्तावद्वद्वारं धनार्जनं विभवप्राप्तिः । तस्या धनरेखायाछेदे राजदण्डः, वेधे तस्करभयम् । पितृरेखातो निर्गत्य कापिलरेखा धनरेखायां याति तदापितृधन भोक्ता । जीवरेखाया मातृरेखा स्वल्पा तदाजीवत्यपि नरे धनहानिर्महती चेत् धनरेखायां कापिरेखा करभान्निर्गत्य मिलति, तदा पश्चिमदिशोलभ्यं सन्तानार्जितधनभोगः परधनं वा प्राप्नोति, तत्रापि वज्राकारे पतिते मन्त्रिपदं आयूरेखातः पल्लवो निर्गत्य

धनरेखायां मिलति तदा तस्य पुत्रो धनवान् वामेधनरेखा दक्षिणहस्त धनरेखातो महती तदाश्वसुरकुले धनं बहूलं साचेत्, वामायुर्लेखायां मिलति तदा स्वसुरकुलाल्लभ्यम् । रेखा छेदे न लभ्यं आयुर्लेखातः पल्लवो निर्गत्य धनरेखायां मिलति तदा पुत्रीभाग्यवती गोत्ररेखातः पल्लवो निर्गत्य वामे धनरेखां मिलति तदा भागिनी भाग्यवतीत्यादि स्वयमूह्यम् ॥ ९ ॥

ग्रन्थान्तरे विशेषमाह—

**मणिबंधाउपयट्टा संपत्तामातिमंगुलीइ जा रेहा ।**
**साकुणइ धणसमिद्धं देसर कायं च आयरियं ॥ ११० ॥**

मणिबंधाउ इति । मणिबंधात् प्रवृत्ता मध्यमाङ्गुलीं या रेखा सम्प्राप्ता साधनसमृद्धिं कुरुते देशल्यातंवा, आचार्यम् । एत्तुमध्यमाश्रितोर्वा रेखाफलैश्वर्यलक्षणं ननु धनकथनाद्धनरेखेयमिति । प्रकरणकृन्मतेऽपि प्रागुक्त रेखा पञ्चके धनरेखायाभेदेन कथनात्, अत एव दीक्षा रेखायास्तर्जन्यधस्तन्या। वलवत्त्वे गणाचार्यमिति । द्वितीय फलैश्वर्यव्यञ्जकं स्पष्टम् । योगिनां धनाऽप्राधान्यात् । वाशब्दकथनात् फलभेदः ॥ ११० ॥

अथ दक्षिणक्रमाद्गोत्ररेखा विमर्शमाह—

**गोत्ररेखाथ यस्य स्यादखण्डा वेधवर्जिता ।**
**गोत्रेसमुख्यतो याति सर्वेषामाश्रयः पुमान् ॥ १११ ॥**

गोत्ररेखेति । स्पष्टम् । अखण्डा सम्पूर्णा मध्ये छेदे तु तस्मात्पुरुषाद्वंशच्छेदः पुत्राभावात, तत्राप्यन्य रेखा साहचर्ये परकीयपुत्राद्वंशस्थितिः । गोत्ररेखामूलछेदे जारजातत्वं जन्मनि वा पितू मरणान्त कष्टकृत् कुलमर्यादामुल्लङ्घते गोत्र रेखामूले मत्स्ये कुले पावित्र्यम् ॥ १११ ॥

**यावन्तः पल्लवाश्चास्यां माया सम्मुख गामिनः ।**
**तावन्त पितृ द्रव्यस्य भयेयुर्भाग हारिणः ११२ ॥**

यावन्त इति । अस्यां गोत्ररेखायां यावन्तोऽङ्गुलि सम्मुखाः पल्लवास्तावद्भिः पितृधन भागवद्भिस्ता वद्वारं क्लेशः ॥ ११२ ॥

**यावन्तः पल्लवा राज्ञोऽभिमुखास्ते पियंवदा ।**
**भ्रातरः स्वजनाः कार्ये पुंस साहाय्यकारिणः ॥ ११३ ॥**

यावन्त इति । राज्ञोऽङ्गुष्ठस्य सम्मुखा यावन्तः पल्लवास्तावन्तो भाग-हरिणोप्यस्य पुंसोऽनुकूलाः क्वचिद्विवादे साधक भाजः ॥ ११३ ॥

प्रकरण कारस्त्वाह—

**मणिधंधाउपयहा पएसिणी जाव अइ गया रेहा ।**
**बहुबंधुसमाइन्नं कुलवंसनिद्दिसे तस्य ॥ ११४ ॥**

मणीति । मणिवन्धात् प्रवृत्ता प्रदेशिनी यावत्, अतिगता रेखा बहूबन्धु समाकीर्णं कुलवंशं निर्दिशत्तस्य ॥ ११४ ॥

**दीहाइ जाण दीह कुलवंसमंडहियं मंडहियाए ।**
**विन्नाए जाणविन्नं जाणमुमिन्नं च भिन्नए ॥ ११५ ॥**

दीहाइ इति । दीर्घायां जानीहि । दीर्घ—कुलवंशं मृताधिकं मृताधिकया छिन्नया जानीहि छिन्नं जानीहि भिन्नं च भिन्नया, अत्र—ऊर्ध्वे रेखाभेद व्याख्यानेऽपि गोत्ररेखास्वरूपमेव लभ्यते परं वस्तुतः कुलरेखातन्मतेऽपि पृथ-गेव इदं सूत्रं तर्जनी प्राप्तोर्ध्वरेखाधरस्य पुंसः कुटुम्ब पोषकता ज्ञापकम् । मृतं—अधिकं यस्मिन् सकुलवंशो मृताधिकः स्वल्पजीवज्जनः । मृताधिकया, अतितनुतर लेखया छेदवती मध्ये न दृश्याः भेदवती मुखे । शाखाद्वयत्रयवती । कुलं पैतृकं जातिर्मातृकी कुलस्य वंशः सन्तति परंपरा कुलवंशस्तं छेदवत्या रेखया छिन्नं भेदवत्या रेखाया भिन्नं परस्परविरुद्धं जानीहि ॥ १५ ॥

अथ ऊर्द्ध्वरेखा भेदानाह—

**मणिबन्धादुर्ध्वरेखा यात्यङ्गुष्ठादि सम्मुखी ।**
**असौपञ्चविधा राजा श्रयिणी राज्य सौख्यदा ॥ ११६ ॥**

मणिवन्धादिति ॥ १६ ॥

**नृपोनृपतिमित्रं वां प्राप्ता चेत्तर्जनीमसौ ।**
**ज्येष्ठा प्राप्तौ तथाचार्य ख्यातिमान् सैन्यनायकः ॥ ११७॥**

नृप इति ॥ १७ ॥

**सार्थ वाहोधनी नेतोर्द्धरेखाचोच्छिवाश्रिता ।**
**कनिष्टामूर्द्ध्वरेखातः प्रतिष्ठावान् महायशः ॥ ११८ ॥**

सार्थवाह इति ॥ १८ ॥

त्रयमपि स्पष्टार्थम् ॥ १६-१७-१८

**अरकंडा अप्फुडिमा पल्लव रहिया तहाअविछिन्ना ।**
**एगावितुहरेखा सहसस्यजणपोसणी भणिया ॥ ११९ ॥**

अरवण्डेति । अखण्डा सम्पूर्णाव्यथायोग्यमवधिं प्राप्ता अस्फुटिता-अभिन्ना पल्लवैर्मध्ये शाखाकारैराहिता-अविछिन्ना मध्ये बिछेदेनाप्ता ईदृशी एकाप्यु-द्र्ध्व रेखा जनसहस्रं पुष्णाति किं पुनस्तस्याः पञ्चकमिति ॥ १९ ॥

द्रव्यानुसाराद्वस्तुफलमिति न्यायाज्जातेरवि वस्तुत्वं द्रढयन्

ऊर्द्धरेखा फलमाह—

**विप्पाणां वेयकारी रज्जकरीषतिपाणा सारेहा ।**
**वेसाणाय अच्छकरी सुखकरी मुद्दवग्गाणं ॥ १२० ॥**

विण्प्पाणमिति । ग्रहस्वानशकुनादीनां यथाद्रव्यदेश कालविमर्शकलत्र-त्सामुद्रिकस्थापि निमित्तत्वात्कलमेष्ठव्यम् । तेन विप्राणां वेदादिशास्त्राध्ययनं ऊर्द्ध्व रेखाफलं क्षत्रियाणां राज्यं वैश्यानां व्यवसायिनां धनं शूद्रवर्गाणां बहुजातित्रे दाद्रहुत्वं तेषां सुखेन निर्वाहश्च । ननू केऽपि विप्रा राज्यभूजः-क्षत्रियाध्यनपठवः, शूद्राअपि व्यवसायिन इत्यन्यथापि दृश्यते जातेर्बिकल्पघ, टितत्त्वेन, अवस्तुतत्वात् नहि कुण्डो ध्नीत्वेन विकल्पितःषण्ढः पयसा पात्री पूरयतीति चेन्नऋतुस्नातया ब्राम्हण्या क्षत्रियदर्शने कृते गर्भस्य तादृशत्वेनो-त्पत्तौ वैद्यशास्त्रप्रामाण्ये नापि जातिरेखनियामकत्वादन्यथा निम्बादिकला-द्याम्राद्युत्पत्ति प्रसंगादित्यन्यत्र विस्तरः ॥ १२० ॥

तृतीया ऊर्द्धरेखा सावित्रीं प्राप्नोति तस्याः फलमाह—

**या मणिबंधपयहा संपताणामि अंगुलि रेहा ।**
**साकुणइ इसत्थवाहं नखयसय पूइयं पुरिसं ॥१२१॥**

जामणीति । या मणिवन्धात् प्रवृत्ता–संप्राप्ताऽनामिकाङ्गुलिं रेखा सा करोति सार्थवाहं नरपतिशतपूजितं पुरुषम् ॥२१॥

तूरियामूध्द्र्व लेखां प्राह—

**मणिबंधा उपयट्टा कजिठा जाव जागया रेहा ।**
**साकुणइ जससामिद्धं सिठि वहुवितसंजुतं ॥१२२॥**

मणीति । मणिवन्धात् प्रवृत्ता कनिष्ठां यावद् या गतारेखा सा करोति यशः । समृद्धं श्रेष्टिनं वहुवित्तसंयुक्तम् । इति प्रकरणकृन्मते चतुर्द्धा ऊर्द्ध लेखा द्वयस्य प्रागेवोक्तेः ॥ १२ ॥

पञ्चम्या उद्धर्व रेखायाः कलं विधेत्याह—

**मणिबंधाउ रेहा अंगुठपएसिणी णामगभया ।**
**सा कुणइ सत्थजुत्तविन्नाण वियरकणं पुरिसं ॥ १२३ ॥**

भणीति । मणिवन्धाद्रेखा–अङ्गुष्ट प्रदेशिन्योर्मध्ये गता सा करोति शास्त्रयुक्तं विज्ञानाविचक्षणं पुरुषं इयं रेखातु गोत्ररेखेव प्रतिभासते यदीयं विद्या रेखा तदामणिवन्धकनगेऽपि मणिबन्धस्य वामकोण एव ग्राह्यस्तत्रैव नक्षत्र चक्रे पुण्यम्य गुरुदैवतस्य सद्भावेन विद्यारेखाया औचित्यात् , सर्वत्र मणिबन्धग्रहणं तस्य सर्वोर्द्ध्वरेखा मूलत्वेन प्राधान्य ज्ञापकं तेन मणिवन्धे कोटिसंख्या विवेकविलासे ॥ २३ ॥

शैव सामुद्रिकेऽपि—

अङ्गूष्ठस्यापि यद्यन्ते ब्रूते नृपातिमुत्तमम् ।
सैव तर्जनीकां प्राप्ता राज्यसंपदमुत्तमम् ॥ १ ॥
सेनापतिं घनेशत्वं मध्यमां गतया तया ।
अनामिकां पुनः श्रेष्ठी धनवान् सभवेन्नरः ॥ २ ॥
सुखिनं सुभगंवापि यदि प्राप्ता कनिष्ठिकाम् ।
नरं करोति तादृक्षं भाग्यवन्तं महाबलम् ॥ ३ ॥

इति । ऊर्द्ध्व रेखा पञ्चकफलं स्पष्टं निगद्य चतुर्विधत्वमप्याह—

त्यक्तोर्द्ध्वं मणिबन्धं या रेखा चोत्तरगामिनी ।
यशो ददाति सा पुंसां श्रीदायिका न संशयः ॥ १२४ ॥

त्यक्तोर्द्ध्वमिति । मणिन्बधं विमुच्य उत्तरगामिनी या रेखा सा पुंसां यशो ददाति । लक्ष्मीदायिकापि स्यात्तत्र न सन्देहः ॥ १२४ ॥

उर्द्ध्वरेखा चतसृष्वङ्गुलीषु भवन्ति चेत् ।
नानाभोग सुखं सेवासमुद्रवचनाद्यथा ॥ १२५ ॥

ऊर्द्ध्वरेखेति । प्रकटं, अत्राङ्गुली चतुष्कस्यैवोक्तेः चतुर्द्धैव ऊर्द्ध्वरेखा इति न निर्णेयं चतसृणामपि एतत् फलं तर्हि पञ्चम्या विशिष्टत्वमेवेत्यर्थात् ॥ २५ ॥

इत्युर्द्ध्वरेखाविमर्शनम्

अथ प्रकीर्णकरेखास्तत्र स्त्रीमूलत्वात्संसारस्येति पूर्वं तस्या रेखाविमर्शं प्राह—

स्त्रीरेखावामहस्ते स्यादायूरेखा स्वभावतः ।
दाक्षिणैः पल्लवैस्तस्यां सौख्यं दुःखं तु वामगे ॥ १२६ ॥

स्त्रीरेखेति । पुंसो वामहस्ते आयुर्लेखा सा स्वभावतः स्त्रीरेखा मन्तव्या स्त्रीणामर्द्धाङ्गस्थायित्वेन वेदे लोकेच प्रतीतेः इतरथा वामहस्तरेखा वैफल्यमापतति तथात्वे दक्षिणहस्तरेखाणामपि तथा प्रतिपत्तौ कोनिषेद्धत्युक्तं प्राक् दिवसो दक्षिणोहस्तो रात्रिर्वामो मतान्तरे इति कथनात् स्त्रीप्राधान्यं रात्रावेव। रात्रौ स्त्रीप्राधान्यमेवेत्युभयथा नियमात् दिने स्त्रियाः पृथगवाव स्थानान्, दक्षिणगतैः पल्लवैः पुंसः स्त्रियां सुखं वामगैः पल्लवैः स्त्रियां दुःखमिति विशेषः ॥ २६ ॥

ग्रन्थान्तरगतं विशेषमाह.—

आयुरेखा कनिष्ठान्त लेखाः स्यु गृहिणीप्रदाः ।
समाभिः शुभशीलस्याः विषमाभिः कुशीलकाः ॥ १२७ ॥

आयुरिति । जीवितलेखायाः कनिष्ठायाश्चमध्ये या रेखास्तार्गृहणी स्त्री तां प्रददत्ते । यावत्योलेखास्तयोर्मध्ये तावत्यः स्त्रियः पुंसो भवेयुः ताभिर्ले-

खाभिः समाभिः प्रध्वराभिः सुशीलाः स्त्रियो विशमाभिर्वक्राभिः कुशीला व्यभिचारिण्यः क्रोधनावा, अत्र सामान्योक्तावपि वामहस्ते जीवितरेखा-कनिष्टयोरन्तरे यावद्रेखा सम्भवस्तावत् स्त्रीयोग इति व्याख्येयं यत्तु क्वचिद् दक्षिणहस्ते जीवितरेखा कनिष्टयोर्मध्ये या रेखास्ता स्त्री संख्या लक्षणमिति साम्प्रती न मुग्ध सामुद्रिकाणां तथा प्रवृत्तेरनुसाराद्याख्यातं तद् भ्रममूलं दक्षिणहस्ते स्त्रीलक्षणाऽघटनात्, दूतस्य यदिपादः स्याद्दक्षिणोग्रे स्थितस्तदा पुमान् दष्टोऽथ वामे तु स्त्रीदष्टेति न संशय इति विवेकविलासे दूतपरीक्षाया मपि तथा वचनात्, एवं तारा मूलादिति वक्ष्यमाण सूत्रेऽपि वामहस्त करभरेखाभिः स्त्रीपरिगणनं ज्ञेयम् । केचित्तु आयुर्लेखेति सूत्रं दक्षिणहस्ते पुंसः स्वजन्मनि सूतिका स्त्रीपरिगणने न व्याख्यान्ति । समाभिः सुशीलाः सदाचाराः कुलिना विषमाभिर्विरुद्धजात्या इति, अर्थात् अत एव सूतिका स्थानात्पुरस्तर्जन्यधोमृत्युस्थानमपि युक्तं, चैतत् आयुर्लेखायाः स्वात्मरूपत्वेन तदुद्भवस्थानस्य कनिष्ठाधः संगतत्वात्, सूतिकास्थाने एक रेखयापिता परग्रामे रेखा द्वये पिता सन्निहितः रेखा त्रये इतो वृद्धता भ्राता स्वसा वा वाच्या तथापि रेखा समत्वे रात्रि जन्म वैषम्ये दिवा जातस्तथाऽस्य पश्चा-द्रेखा समत्वे स्वसा रेखा वैषम्य भ्राता सम्भवतीत्यपि लक्षणीयम् । तेन प्रकरणकारोक्तिरपि ॥ १२७ ॥

तामेवाह—

कालांगुली कनिठा रेहातु जस्स जतिया हुंति ।
तत्तियामिता पुरिषा पुरिस्सय तत्तिय महिला ॥ १२८ ॥

कालाङ्गुलीति । काला कृष्णा यद्वा कालेरेखा आयुर्जीवित काल इति कोषवचनाज्जीवितरेखा तस्याः प्रत्यासत्तेः कालाङ्गुलिः कनिष्ठा तस्याधो यस्या यावत्यो रेखा भवन्ति तावन्माला स्त्रियाः पुरुषा इति दक्षिणहस्ते । पुरुषस्य तावत्यः स्त्रियः इति वामहस्ते विमर्शः ॥ १२८ ॥

तत्रापिविशेषमाह—

दीहाहिकोमारी कुडियाहिं पुण्णभवे वियाणी ।
ज्ञासह्लाहियो सोहग्गं कुडियाहिं विंदूहयं जाणदुहयं ॥ १२९ ॥

दीहाहि इति । दीर्घाभिः प्रलम्बाभिर्लेखाभिः कुमारी स्त्री परिणयनं एकया रेखया एकशो रेखाद्वयेद्विर्विवाहो रेखात्रये त्रिरिति स्फुटिताभिर्लेखाभिः पुनर्भुवं धारितां वा विजानीयात् स्निग्धाभिः स्त्रिया बहुसौभाग्यं तुडियाहिं इति । त्रुटिताभिश्छिन्नाभिर्लेखाभिरपि दूहां दुर्भगां जानीहि एवमेव फलं भर्तारमुद्दिश्य स्त्रिया दक्षिणहस्ते विमर्शनीयं यद्यप्यत्र वामे वा दक्षिणे इति विवृत्य नोक्तं तथापि वामभागे तु नारीणामिति सूत्रानुवृत्तेर्यथायोगं ग्राह्यम् ॥ १२९ ॥

अथास्या रेखाया विपक्षमाह—

दीक्षारेखाबलवती पुरस्था चेन्महत्तरा ।
बाधयेद्दाररेखा तदा मित्रोदयं वदेत् ॥ १३० ॥

दीक्षेति । आद्याऽधः स्थातु दीक्षणमित्यग्रे वक्ष्यमाणा दीक्षा रेखा बलवती स्यात्, बलं चात्र सूक्ष्म १ स्निग्ध २ गम्भीर २३ लम्ब ३४ पिङ्गल २५ अव्यावृत्त ६ अछिन्न ७ अभिन्न ८ अविरुद्ध ९ सम १० अस्थानच्युत ११ पूर्णा १२ स्यद्वादशगुणयोगस्तत्सहिता । पुरःस्था हस्तस्य दक्षिणस्य अग्रभागो स्थिता, आद्याङ्गुल्या अधःस्थानात् पूर्वभागे स्पष्टा चेद्यदि महती सादाररेखां बाधयेत् फलप्रतिबन्धाद्विफलां कुर्यात्तदा स्त्रीरेखा कस्य चित् प्रियमित्रस्य परमभक्तसेवकस्य वा उदयं वदेत्; एवं स्त्रीरेखानिर्णये पितृरेखाङ्गुष्ठ रेखान्तरे या ऊर्ध्व रेखिका इत्यादिना हस्तचिन्हे दाररेखा उक्तास्तत् सूत्रं स्वपरस्त्रीभोगलक्षणं न पुनर्विवाहादिसंस्कारप्राप्त स्त्री विषयं बोध्यम् ॥ १३० ॥

अथ राजयोगे सति विशेषमाह—

तारा मूलान्मणिं यावत् रेखा यत्संख्यया स्फुटाः ।
तावतीर्महिलास्तस्य राजयोगे विनिर्दिशेत् ॥ १३१ ॥

तारेति । कनिष्ठा मूलात् प्रारभ्य मणिबन्धयावद् यावत्योरेखा स्तावत्यः

स्त्रियः स्युः । कदेत्याह—राजयोगे सिंहासनादि वक्ष्यमाण राजलक्षण सद्भावे, एतेन ग्रन्थान्तरे

"कनिष्ठा मूलरेखाया माणिं यावच्चरेखिकाः ।

"तावत्यो महिलास्तस्य स्त्रियास्तावन्मनः प्रियाः ॥ १ ॥"

इत्यपि निश्चितं ननु क्वचित् कनिष्ठाधः स्त्रीरेखा १ ग्रन्थकृन्मते वाम-हस्तायूरेखा २ राजयोगे तारा मूलादित्यादिना स्त्रीरेखा उक्ता तथा रेखाभिः करभे वामे वणिक् पुत्राश्च सेवका इति वचनं तर्हि अपत्यरेखा नवकाश इति चेन्न राजयोगे मातृरेखाया अप्रयोजनात् मणेरङ्गुष्ठमूलां तं यावत् अपत्यरेखा ज्ञेया, अत एवाग्रे विवेक विलासोक्तं, अपत्यरेखाः सर्वाः स्युर्न तथाङ्गुष्ठ तलान्तरे इति गृहीतं राज्ञः प्रायो भ्रातृनाशादनाशेऽपि सेवकान्तर्भावात् पितृरेखातोऽङ्गुष्ठ सम्मुख पल्वैरेव साहाय्यकारिमात्रत्वे नगणनं यद्वा क्षुद्रराज्ये स्पर्द्धा कारित्वे नवक रूपकरभरेखाभिरेव दक्षिणे भ्रातृभगिन्यादि गणनं युक्तं वामहस्ते करभे स्त्रिय एव संख्येयाः ॥ १३१ ॥

अत्रार्थे सम्मतिमाह—

स्युर्यावन्त्योन्तरे रेखा मणिजीवित रेखयोः ।

तावतीर्महिलास्तस्य स्त्रिया स्तावन्मनः प्रिया ॥ १३२ ॥

स्युर्यावत्य इति । उक्तार्थम् ॥ १३२ ॥

अथ स्त्रियास्तावन्मनः प्रिया इत्येतस्य संगतिमाह—

स्त्रिया दक्षिण पाणिस्था पतिरेखा प्रकीर्तिता ।

आयुरेखात्र तद्भेदे योगःस्याद्विधवाकरः ॥ १३३ ॥

स्त्रिया इति । स्त्रीणां दक्षिणपाणौ जीवितरेखा सा भर्तृरेखा स्मृतास्तस्या-भेदे विधवा रण्डा तस्य योगः स्यात् । तस्यावेधे, असतीत्वयोग इति ॥ १३३ ॥

तदा वामकरे तारा मूलदा मणिवन्धनम् ।

रेखायावत्य उद्भूतास्त्रिया स्तावन्त ईश्वराः ॥ १३४ ॥

तदा वामकर इति स्पष्टम् ॥ १३४ ॥

अथ लक्षणानामन्योन्यबाधे प्राचांवचनमाह—

पुष्टं यदेवदेहेस्याल्लक्षण वाप्यलक्षणम् ।
इतरद्बाध्यते तेन बलवत्फलदं भवेत् ॥ १३५ ॥

पुष्टमिति । पुष्टं बलयुक्तं लक्षणं विरुद्धलक्षणं वा इतरन्निर्बलं तेन बलवता बाध्यते तत्फलं निषिद्धत इत्यर्थः ॥ १३५ ॥

निगमनमाह—

तथाच योगिप्रभृते यस्य स्त्री संगमो नहि ।
दाररेखासिक्त शिष्टां दत्तेत्वन्या प्रभुत्वकृत् ॥ १३६ ॥

तथा चेति । यस्य योगिनः स्त्रीसङ्गमो नास्ति तस्य हस्ते स्त्री रेखा शुभाभक्ति भाजनं शिष्यजनं दत्तेतु पुनः अन्या शिष्यसेवक भाग्यादिरेखा प्रभुत्वमैश्वर्यं करोति; यद्वा लक्षणानुरोधाल्लक्ष्यं, तथा क्वचिल्लक्ष्म्यानुरोधेनापि लक्षणप्रवृत्तेस्तत एव देवानन्दाया गर्भापहार लक्षणानां स्वप्ना नामप्यहारः सिद्धान्त सिद्धः ॥ १३६ ॥

स्त्रीरेखावत्तापसयोग भाग्यादि रेखया वामहस्तगतया किं विमर्शनीयामित्याह—

लक्ष्मी राज्यं वाहनादि नृणां वामकरादिह ।
ज्ञानमैश्वर्य वंशादि वीक्ष्य दक्षिणपाणितः ॥ १३७

लक्ष्मीति । वामकरे योगिनो धनरेखया लक्ष्मीः ऊर्द्ध्वरेखाया राज्यं वाहानरेखया वाहनेभ्यो लभ्यं इहतापसयोगे वाच्यं दक्षिणपाणितो धनरेखया शुद्धज्ञानं सुखसन्तोषात्मबोधादिकं ऊर्द्ध्व रेखया ऐश्वर्यं गोत्ररेखया वंशादिकं लक्षणीयामित्यर्थः ॥ १३७ ॥

अथैवं योगिनो लक्षणानिगमने योगिन्याः पतिरेखायां किं वाच्यमित्याह—

योगिन्यासुखं पत्युस्तस्या दक्षिणपाणितः ।
ज्ञानं यात्रा तपःशौचं गुरुसौख्यं निरीक्ष्यते ॥ १३८ ॥

योगिन्या इति । पतिरेखया ज्ञानं यात्रातीर्थप्रणतिः संयमो वा तपः चौ-

चं द्रव्यभावभिन्नं नैर्मल्यं धनादेर्हस्तासिद्धिः पितृ रेखया गुरोः सुखं दक्षिण पाणे विमर्शनीयम् । तेन एक स्मादपि लक्षणान्नाना लक्ष्य विचारो नानुपपन्न इति ज्ञेयम् ।। १३८ ।।

इति स्त्रीरेखाविमर्शनम् ।।

अथ स्त्रियाः प्रसङ्गादपत्योत्पत्तिरिति क्रमादपत्य रेखा विमर्शमाह—

**मणेः स्वभाव रेखान्त रेखाभिः करभेन्नृणाम् ।**
**अपत्य संख्या निर्देश्यं सम्प्रदाय मताश्रयात् ।। १३९ ।।**

मणेरिति मणिबन्धादारभ्य स्वभावरेखा जीवितरेखा तत्पर्यन्तं, अपत्यानां संख्यागणना वक्तव्या सम्प्रदायो गुरुपारं पर्यन्तस्याश्रयादस्तस्मात्, तत्रापि करभेरेखाः समाङ्क केन तदा प्रथमं पुत्रीविषमाङ्केन पुत्रः प्रथमं स्यात्, अत्रायं भावः विवेकविलासे वक्ष्यमाणसम्मत्या करभे रेखा भ्रातृभगिन्यादि लक्षणं, अङ्गुष्ठमूलेऽपत्यसंख्येति दृश्यते । तेन साम्प्रदायिकमतस्य तात्पर्यमिदम् । करभे वामहस्ते प्रत्यासत्त्या, अपत्य संख्या उचिता, अङ्गुष्ठमूले तु भ्रातृ भागिन्यादिसंख्यापितृरेखा समासन्नत्वात् बाहुल्येन प्राकृत लोकानां तथैव योगात् राजयोगे पुनर्वैपरीत्यम् ।। १३९ ।।

हस्तबिम्बकार सम्यत्या द्रढयन्नाह—

**यावत्यकरभे रेखा ऊर्द्ध्वं तावदपत्यदाः ।**
**ताः समाङ्के तदाद्या स्त्रीविषमाङ्के नरं वदेत् ।।१४०।।**

यावत्य इति ।। १४० ।।

तापसयोगे विशेषमाह—

**योगिनां तनयस्थाने शिष्यप्राप्तिर्विचार्यते ।**
**पत्युः स्थाने योगिन्याः धर्मयोगमथाश्रमः ।। १४१ ।।**

योगिनामिति । अपत्यरेखाभिः शिष्यपरिगणनं योगिनां स्त्रीरहितानां वाच्यं शिष्यपुत्रयोः साम्यात्, सृष्टिर्द्विविधा—' मानसी योनिजा च माद्या शिष्यसन्तत्या परापुत्रप्रवाहेणेति ' न्यायकुसुमाञ्जली ग्रन्थे उदयनाचार्याः

प्राहुः तत एव योगिन्याः पतिस्थाने धर्म शौचादिराचारः योगः—पञ्चाग्नि साधनादितपः कर्ममठाश्रमोगुरु पारंपर्यसंसर्गस्तस्य तत् प्रतिपालकत्वात्, अत एव एकस्माल्लक्षणान्नाना लक्ष्य विमर्शः प्रागुक्तः सिद्धः सिद्धान्तेऽपि 'स्वप्नफले रज्जवई राया जिणे वा इति पूर्यषणा कल्पे तथा' रज्जवइ राया अणगारेवा भावियप्पा' इति फलद्वयकथनेनस्याद्वादात् ॥ १४१ ॥

पुत्रदा करभे रेखा कनिष्ठाधःकलत्रकृत् ।
अङ्गुष्ठमूले रेखास्तु भ्रातृभाण्डानिशंसति ॥ १४२ ॥

पुनः सम्मतिमाह—

पुत्रदा इति । इदं भोजकृतसामुद्रिकोक्तं—तस्यादावयं श्लोकः लक्षग्रन्थे समाख्यातं विस्तरेण वरानने पुंलक्षणं झटित्येव कस्तं वर्णयितुं क्षम इति । करभे रेखाः पुत्रदायिन्यो लक्षणत्वात् कनिष्ठाधो वामहस्ते कलत्रकृत् स्त्रीलक्षणं अङ्गुष्ठमूले रेखाभ्रातृभगिन्यादि लक्षणम् ॥ १४२ ॥

अथ सहोदर रेखाविमर्शमाह

मणेरङ्गुष्ठमूलान्तं या रेखास्तलसम्मुखाः ॥ ॥
सूक्ष्मास्ताहिभगिन्यः स्युभ्रातरस्थूलरेखिताः ॥ १४३ ॥

मणेरिति । मणिबन्धात् प्रारभ्य अङ्गुष्ठमूलस्य अन्तो यत्र कर्मणीति क्रियाविशेषणं या रेखा स्तलं गर्भकं तत् सम्मुखाः सूक्ष्मा स्ताभगिन्यः स्मृताः रेखितं यासां तास्तथा रूपारेखा भ्रातरो लक्षणया भ्रातृलक्षणं भवन्ति तासां रेखाणां समत्वे प्रथमं भगिनीजन्मवैषम्ये भ्रातृजन्माङ्गुष्ठमूलान्मणिसव-म्मुखगणने लघुरेखा भवने स्वतः पश्चाद्भगिनी रेखावृद्धौ स्वतः पश्चाद्भ्राते त्यपि भावनीयम् ॥ १४३ ॥

तत्रापि विशेषमाह—

तासु या अस्फुटा रेखा स्तावन्तो निधनं गताः ।
यास्फुटा स्तथा जीवत इति सामुद्रिकं वचः ॥ १४४ ॥

तासुया इति । तासुरेखासु या अप्रकटा रेखा उपलक्षणात् छिन्नाभिन्ना विद्धावा तावन्तः सहोदराजीवा भ्रातृभगिनीरूपामरणं प्राप्ता या रेखाः प्रकटा

अविद्वास्तेऽध इति पक्षान्तरे जीवन्तः, एवं प्रकारेण सामुद्रिकं समुद्रसूरेर्वचः। भ्रातृभगिनीनां सारत्वात् भाण्डं वस्तु इति व्यवहारः ॥ १४४ ॥

अथात्र मतान्तरमप्यास्ति तस्य प्रामाण्य व्यञ्जनाय—आद्यश्लोकपाठपूर्वं नामनिर्णिय तन्मतान्तरमाह—

आयुर्लेखावसानाभिर्लेखाभिर्मणिबन्धतः।
स्पष्टाभिर्भ्रातरो स्पष्टा ताभिर्जामयः पुनः ॥ १४५ ॥

आयुर्लेखेति। मणिबन्धात्, आरभ्य जीवितरेखां यावत् अर्थात् करभे रेखाभिः स्पष्टाभिर्भ्रातरः संख्येयाः अप्रकटाभिर्जामयो भगिन्यः परिगणनीयाः ॥ १४५ ॥

अस्पष्टाभिरदीर्घाभिर्भ्रातृ जाम्यायुषस्तुटिः।
यवैरङ्गुष्ठमूलस्थैस्तत्संख्या सुनवो नृणाम् ॥ १४६ ॥

अस्पष्टाभिरिति। ह्रस्वा—अस्पष्टा रेखास्ताभिर्भ्रातृभगिनीनां आयुषस्त्रुटि-र्मरणं ज्ञेयं, अङ्गुष्ठमूलेयावन्तो यवास्तावन्तः सूनवः पुत्रावाच्याः, सूनुशब्देन पुत्राएव, अपत्यशब्देन पुत्रपुत्री नपुंसकविम्बादि गणनाभ्राग्रेतनश्लोकेन पुनरुक्तिः ॥ १४६ ॥

अपत्यरेखाः सर्वास्युर्मत्स्याङ्गुष्ठतलान्तरे।
हस्ते चिन्हेप्ये तदेव सम्मतं विदुषां मतम् ॥ १४७ ॥

अपत्येति। सर्वा अपत्यसंख्या रेखामत्स्यो मणिबन्धस्थः, अङ्गुष्ठतल-मङ्गुष्ठमूलं तयोर्मध्ये भवन्ति इदमेव मतं हस्तचिन्हसूत्रे सामुद्रिकतिलकेऽपि प्रागुक्तम्। आयुर्लेखेत्यादिसूत्रं राजयोगे सति भ्रातृविषयं न चेत् पुत्रादाः करभे रेखा इत्यादिना विरोधः, राज्ञो भ्रातृणामस्तं प्राप्तत्वात् करभस्य सेवास्थलत्वात्तत्रैव तद्रेखा न्याय्या। केषाञ्चिद्भ्रातृणामनाशेऽपि सेवकान्त-र्भावात् राज्ञः पुत्रास्तु आग्ने यां दिशि अङ्गुष्ठमूले वर्द्धमानतेजसः पदस्थानो-चिताः सोदया इति। सामान्यलोकानां भ्रातरसतेजसकाः पुत्रास्सेवा कारिण एव ॥ १४७ ॥

अत एव प्रकरणकार उभयमताविरोधेन सूत्रं बबन्धतदेवाह—

अंगुठासयमूले जतियामित्तातु मूलरेहा उ ।
तेहुंति भावु या खलु तणुयाहि हुंति भयणिठ ॥ १४८ ॥

अंगुठसय इति । अङ्गूष्ठस्यच मूले यावन्मात्राः स्थूलरेखाः ते भवन्ति भ्रातरः खलु तनुकाभिर्भवन्ति भागिन्यः । एतेन स्थूलतनुत्वयो रेखादोषत्वे प्रागुक्तेऽपि, अतिस्थूलतनुत्वयोरेव निषेधः सिद्धः ॥ १४८ ॥

अंगुट्ठस हिठा रेहाउस्स जतियाहुंति ।
तित्तयमित्ता पुत्ता सह्वाहिय दीरियाहुंति ॥ १४९ ॥
पुनः—

अंगुठसयाहिठा इति । अङ्गूष्ठस्य चाधः रेखा यस्य यावत्यो भवन्ति तावन्मात्राः पुत्राः स्निग्धाभिर्दारिका भवन्ति ॥१४९॥

जतिया मित्ताछिन्ना भिन्नातेदारया मुयाजाणा ।
अखंडा अछिन्ना जीवंति यतातिया पुत्ता ॥१५०॥

जत्तिय इति । यावन्मात्रा छिन्ना—भिन्ना तान् दारकान् मृता जानीहि । अखण्डा—अछिन्ना जीवन्ति तावन्तः पुत्राः ॥१५०॥

अथाङ्गूष्ठ यवविमर्शमाह—
विद्याख्यातिर्विभूतिः स्याद्यवेह्यङ्गूष्ठमध्यगे ।
शुक्लपक्षे जन्मरात्रौ वामाङ्गूष्ठ गते पुनः ॥ १५१ ॥

विद्येति । अनेकवस्तुतत्वपरीक्षारुपात्रविद्या नतुपठनपाठनरूपा तद्रेखायाः स्थानभेदात् ख्यातिः प्रसिद्धिर्विभूतिः स्वजनधनरूपा सम्पद् स्यात् अङ्गूष्ठ-मध्यपर्वप्राप्ते—यवे अत्र सामान्यत एवाङ्गूष्ठो ग्राह्यः । पुनर्वामहस्तऽतोङ्गूष्ठ गतेयवे शुक्लपक्षे रात्रौ च जन्मवाच्यम् ॥ १५१ ॥

कृष्णपक्षे दिवा जन्म दक्षिणाअङ्गूष्ठगेयत्रे ।
विद्धाविद्धविवेकेन पक्षस्य व्यत्ययःक्वचित् ॥ १५२ ॥

कृष्णपक्षे इति । दक्षिणाङ्गूष्ठगे यवे कृष्णपक्षे दिवा जन्म स्यात्, क्वचिद्द्वयोरप्यङ्गूष्ठयोर्यवसद्भावे विद्धोवेधवांस्तदन्यो वा सम्यग् विमर्शनीयः तदाच क्वाचित् शुक्लकृष्ण पक्षयोर्व्यत्ययोर्विपर्ययो ज्ञेयः ॥ १५२ ॥

अत्र मतभेद माह—

शुक्लपक्षे तथा जन्म–दक्षिणाङ्गुष्ठगैर्यवैः ।
कृष्णपक्षे नृणां जन्म वामाङ्गुष्ठगतैर्यवैः ॥१५३॥

शुक्लपक्ष इति । दक्षिणाङ्गूष्ठगैर्यवैः शुक्लपक्षे जन्मवाच्यं, वामाङ्गूष्ठगतैर्यवैः कृष्णपक्षे पुरुषाणां जन्म, । अत्र दक्षिण हस्तेऽङ्गूष्ठयवे शुक्लपक्षे जन्मेत्युक्तं तत्केनाभिप्रायेणेत्यत्र वहुश्रुताः प्रमाणमन्यथा शुक्लपक्षः चन्द्र स्त्रीपुरुषः सूर्य इत्यादि स्वरोदयाद्यनुसारेण, तथा शुक्लपाक्षिका उत्तरस्यां कृष्णपाक्षिका दक्षिणस्यामिति सिद्धान्तपरिभाषया वामहस्तादेव बोध्यः । यद्वा यवैरिति वहुवचनाद्बहूनां वलवत्वेन ग्रन्थप्रामाण्याच्च दक्षिणहस्ते यवैः शुक्लपक्षो ज्ञेय इत्याशयः न पुनरेके न यवे नक्षत्र वहूनामथवैकस्य यवस्य स्यात् फलं समं तत् प्रायिकं, अन्यथा यव संख्याकत्वं पुत्राणां स्वयमेव विवेकविलासकृता प्रोक्तम् । तद्व्याहतं स्यात्, यद्वा शुक्लपक्षे हस्तवीक्षणे दक्षिणाङ्गूष्ठयवैः शुक्लपक्षे जन्मवाच्यम् । कृष्णपक्षस्य दक्षिणाङ्गूष्ठ यव प्राप्त स्यापि बाधात् शुक्लपक्षपदं, आवृत्या व्याख्येयम् । एवं कृष्णपक्षे इत्यपि पदं वार द्वयं योज्यं तेन न दोषः । तत्त्वं सर्वज्ञ गम्यम् ॥ १५२ ॥

प्रकरणेत्विति तुशब्दाद्विशेषमाह—

दाहिण हत्थंगुठय मझय जवेण दिवस जम्मसे ।
वामांगुठ जवेण नूणं जाणिज्ज निसिजायम् ॥ १५४ ॥

दाहिणेति । दक्षिणहस्ताङ्गूष्ठमध्ये च यवे न दिवसजन्म तस्य । वामाङ्गूष्ठ यवेन नूनं जानीयान्निशि जातम् ॥ १५४ ॥

पुनर्यवस्य फलविशेषमाह—

अङ्गूष्ठोदर मध्यस्थे यवे भोगी सदा सुखी ।
वहूनामथवैकस्य यवस्य फलतुल्यता ॥ १५५ ॥

अङ्गूष्ठोदरेति । अङ्गूष्ठोदरं अङ्गूष्ठमध्यभागस्तत् पर्वणि या रेखा तस्यामपि मध्यभागे यवेसति भोगी उत्पन्न भक्ष्य भोक्ता गन्धमाल्य अन्नपान



श्रीहस्तरेखादर्शन.

गीतगान वीणादि कलावान् बहूनां तथा, एकस्य यवस्यापि भोगादिदायित्वे फलं तुल्यं एकोऽपि भोगित्वं कुर्यात्तथा बहोपि भोगित्वं दद्युर्भोगेषु पुनस्तारतम्यं तथा एकस्मिन् वयसि यद्वा वयस्त्रयेऽपि भोगः । एकस्मिन् स्थाने सर्वत्र देशे वा भोग इत्यादि विशेषस्तु एक यवस्य तथा बहूनां भवत्येव यवलक्षण स्यातिशयद्योत नार्थमेवं भाणीति ॥ १५५ ॥

अथ लक्षण द्वात्रिंशिका विमर्शः ।

छत्रं तामरसं धनू रथवरो दम्भोलि कूर्मा कुंशौ
वापी स्वास्तिक तोरणानि चमर पञ्चाननः पादपः
चक्रं शङ्ख गजौ समुद्र कलशौ प्रासाद मत्स्या यवा
यूपस्तूप कमण्डलू न्यवनिभृत्सच्चामरो दर्पणः ॥१५६॥
उक्षा पताका कमलाभिषेक सुदाम केकी घनपुण्य भाजाम् ।

छत्रमिति । तामरसं कमलं दम्भोलिर्वज्रं । सरस्तडागः पञ्चाननः सिंहः । पादपो वृक्षो यूपोऽत्र पूजास्थान स्तम्भः परमेश्वर पादुकास्थानं कमण्डलु योगिनां जलपात्रं, अवनिभृत् पर्वतः, स च दक्षिणकरे तेनैव हनुमद्रूपे दक्षिणे पर्वतः । राजते निकेचित्, उक्षा वृषभः । कमलाभिषेको लक्ष्मी मूर्तिदिग्गजैरभिषिच्यमाना । सुदामपुष्पमाला । केकीमयूरः । शेषाणि स्पष्टानि घनपुण्यभाजां वहू धर्मोदय लब्ध भाग्यानां, एतानि लक्षणानि भवन्ति । अत्र पाठान्तरे—

कमण्डलु १ कलश २ यूप ३ वापी ४ ध्वज ५ पताका ६ सौवास्तिक ७ यव ८ मत्स्य ९ मकर १० कूर्म ११ रथवर १२ स्थाल १३ अंशुक १४ अष्टापद १५ अंकुश १६ सुप्रतिष्टक १७ मयुर १८ श्री १९ दाम २० अभिषेक २१ तोरण २२ मेदिनि २३ जलधिवर २४ भवना २५ आदर्श २६ पर्वत २७ गज २८ वृषभ २९ सिंह ३० चामर ३१ स्तूप ३२ रुप प्रशस्तोत्तम द्वात्रिंशल्लक्षण धराः इति प्रज्ञपना वृत्तौ द्वात्रिंशलक्षणानि दृश्यन्ते । दिगम्बरास्तु हरिवंशपुराणे भास्करोऽब्धिस्तथा वीणा व्यञ्जन वेणुरुत्तमः मृदङ्ग पुष्पमालाच हट्ट पट्टाम्बर शुचिः नाना भरण

संदोह कुण्डलादिक नामभृत् इत्यादिना सप्तमाधिकारे लक्षणा न्याहुः । फलं चैषां हस्तविम्बसूत्रे ॥ १५६ ॥

तदस्तदेवाह—

**मणेस्तलोन्मुखे मत्स्ये सहस्र धनवान्नरः ।**
**मकरे दशसाहस्री शंखे लक्षपतिर्भवेत् ॥ १५७ ॥**

मणेरिति । मणिवन्धात्तलसम्मुखे मत्स्ये सहस्ररूप्यकान् सौवर्णिकान् दीनारान् वा यथा समयं यथा देशं नरस्सलभते । मकरो जलस्थलो भय चरः तस्मिन् दशसहस्रधनवान् सहस्रवत्साहस्र शब्दोऽपि । उष्मप्रभेद नाममालायां शङ्खभेद दाक्षिणावर्ते लक्षपतिरिति ॥ १५७ ॥

**आतपत्रं करे यस्य दण्डेन सहितं पुनः ।**
**ध्वजं वा चामरयुतं चक्रवर्ती स जायते ॥ १५८ ॥**

आतपत्रमिति । स्पष्टम् ॥ १५८ ॥

**ध्वजो हस्ततले यस्य स वृद्धत्वे सुखी भवेत् ।**
**करभो मांसलः श्रेष्ठोऽङ्गुलिपर्व नमांसलम् ॥ १५९ ॥**

ध्वजो यस्य हस्ते स वृद्धावस्थायां सुखी स्यात्, करभो धनायुर्लेखा-स्थानं स मांसपुष्टः प्रशस्तः अङ्गुलिपर्वविंशोपकः स न मांसयुक्तः । हस्त-विम्बसूत्रत्वात् दीर्घनिर्मांसपर्वणे, इत्यने न पुनरुक्तिः ॥ १५९ ॥

अङ्कुशरेखाया स्थलमप्याह—

**करभान्निर्गता रेखा धनरेखा यदा गता**
**अङ्कुशाकार भूयस्य स पुमान् गजवान्नृपः ॥ १६० ॥**

करभादिति । स पुमान् गजवान् तस्य द्वारे गजो बद्ध्यते इत्यर्थः ॥ १६० ॥

**हस्ती रेखा धरो राजा शूरः सिंहाकृतौ करे ।**
**वृषभे गोकुलपतिः कर्षको वहुरूपवान् ॥ १६१ ॥**

हस्तीति । हस्तासिंहौ वृषभश्च दक्षिणकरे पुरुषोपमानात्. तत एव सौधर्मेन्द्रो वृषभरुपैर्भगवदभिषक्तागमेऽपि, केचित्तुईशानेन्द्रस्य, वृषभवाहन-त्वात् वीजैतौ वामकरयोगाद् वृषभो वाम इत्याहुः— ॥ १६१ ॥

सूर्ये प्रतापवान् शूरः चन्द्रेप्रकृति कोमलः ।
सिंहासने पटधारी मोरे मातुलतः सुखी ॥ १६२ ॥

सूर्य इति । अङ्गुष्ठमध्यपर्वाणि सूर्याकारे प्रतापवान्. दक्षिणहस्ते इति गम्यं तत्र तस्याधिकारात्, चन्द्रेवामाङ्गुष्ठमूर्ध्वपर्वणि प्रकृत्या स्वभावे कोमलः सुकुमारः वामभागस्थ उत्तर दिग्रूपात् तेन ईशानेन्द्रशिरासि चन्द्र इति सिंहासनं दक्षिणाङ्गुष्ठमूले पटरेखा योगात्, मयूरो वामहस्ते करभादूर्ध्वं धनरेखातो नीचैस्तत्र संगीत्तविद्यारेखा सन्निधानात्, मोर शब्दः संस्कृतेऽपि श्राद्धविधिवृत्तौ तद्दर्शनात् ॥ १६२ ॥

अङ्कुशेति प्रतिष्टावान् प्रासादश्चेत् सुखी धनी ।
मत्स्से तु पश्चिमवयः सुखी सां यात्रिकः पुमान् ॥ १६३ ॥

अङ्कुश इति । पूर्वोक्तस्थानादन्यत्न, अंकुशाकारे इति विशेषः प्रासादे देवगृहे दक्षिणाङ्गुष्ठमूले प्रतिष्टावात् सुखी च, अश्वाकारे धनी । मत्स्ये तु पुनः करतलस्या सम्मुखे कूर्परसम्मुखे इति विशेषः पश्चिमेवयसीति वद्धत्वे सुखी यद्वा सांयात्रिको जलप्रहरणव्यापारी ॥ १६३ ॥

नन्दावर्ते नृपपदं सौभाग्यं कच्छपाकृतौ ।
पूर्णकुम्भधरःपाणौ नरः पूर्णमनोरथः १६४ ॥

नन्दावर्त इति । नन्देति नवसंख्याका, आवर्त्ता यस्मिन् स्वस्तिके सनन्दावर्तस्तदाकारे राज्यं कच्छपः कूर्मः ॥ १६४ ॥

रथाकारे रथीलोके सोद्यमः परि वारवान् ।
खड्गादि शस्त्राकारे स्यात्क्लेशकारीसु साहसः ॥ १६५ ॥

रथाकार इति ॥ १६५ ॥

धनुपावल्लोभो लोके मन्त्री चामरवान् करे ।
पुष्पमालाङ्कितो हस्ते यशस्वी धनवान्नरः ॥ १६६ ॥

धनुशेति ॥ १६६ ॥

मुकुटे राजमान्यःस्यात् कमले वहु भोगवान् ।
मुष्टौ तिले पुत्रपूर्णः सर्पे क्रोधी महाधनी ॥ १६७ ॥

मुकुट इति ॥ १६७ ॥

छत्रे हठी प्रतिष्ठावान् स्वास्तिके वार्धके सुखी ।
स्थलपद्मेति चतुरः क्षमावान् मर्दलाकृतौ ॥ १६८ ॥

छत्र इति । पूर्वसूत्रे दण्डसहितं छत्रं चामर युगलान्वितं चात्र पुनरेकमेव तदपि वामकार हस्ताङ्गत्वात् ॥ १६८ ॥

षट्कोणे धर्मवान् धीरा तेजस्वी मणिरेखया ।
सरोवरेऽतिवाताङ्गः कुलमुख्यो युगाकृतौ ॥ १६९ ॥

षट्कोण इति । षट्कोण यन्त्राकारे धर्मवान् रत्नाकरे तेजस्वी ॥१६९॥

कुन्ते केशी सिद्धकार्यो विद्यावान् स्याच्छराकृतौ ।
विमाने दुर्ग गेहादि निर्माता कान्तिभागाज्जनः ॥१७० ॥

कुन्त इति । सुखोन्नेयम् ॥ १७० ॥

एवं रेखा वलाद् ज्ञेयः स्वभावनिर्णयोङ्गिनाम् ।
तत्तद्रेखा कृति स्थान ज्ञेयं ग्रन्थान्तरादिह ॥ १७१ ॥

एवमिति खड्गो दाक्षिणे धेनुर्वामे हस्ते एवं स्वस्तिकविमान नन्दावर्ताद्यं वामे लक्षणं मुकुटप्रासादाद्यं दक्षिण इति बहुश्रुतेभ्भो वेद्यमित्यादि हस्त बिम्बसूत्रमेव विवृत्तं सम्यग् रीत्या रेखा ज्ञानाय चतुर्धा हस्त बिम्बमपि यन्त्र-स्थापना सम्भाव्यम् ॥ १७१ ॥

अथ चक्र शुक्तिकादि विमर्श प्रसङ्गादाह—

मायासु दशभिश्चक्रै राजा योगीश्वरोऽथवा ।
दशभिः शुक्तिभिः सर्वावस्थासु बहुदुःखितः ॥ १७२ ॥

मायास्विति । दशस्वप्यङ्गुलीषु दशस्वप्यूर्ध्वपर्वाणि चक्राणिस्युस्तदा राजमण्डलाधिपतिर्युगान्तरे चक्रवती वा स्यात् जात्यपेक्षया लक्षणफलवत् कालापेक्षयापि लक्षणफलात्, साम्प्रतीन समये योगीश्वरः प्रान्तेवा ग्रथिलो दरिद्रः स्यात्, दशभिः शुक्तिभिर्दशावस्थास्वपिदुःखितः तत्रापि संहारवृत्त्या

---

१ 'राज्यश्री भवतार्जिता' इत्यादिना धनुषस्तत् कथनम् ॥

वामाङ्गुलीषु शुक्तिरतीव निन्द्या दक्षिणाङ्गुलीषु, मध्यमफला इति भ्रमररेखावत् फलं भाव्यम् । यदाह प्रकरणकारः

आवत्ते त्ताहिं छिन्ने भिन्ने वेढेहिं नत्थि किंचि फलं
तेहीं चियरुक्खेहिं मंदघणो नात्थिसंहेहो ॥ १ ॥

अन्यत्रापि,

एक चक्रे भवेद्राज्यं विद्याचक्रे द्वये भवेत् ।
धनागमास्त्रिभिश्चक्रैर्बहु चक्रैर्दरिद्रता ॥ १७३ ॥

दक्षिणावर्त चक्र शुक्तिकासु, पुनर्विशेषप्रकरणे ततस्तमेवाह—

अंगुलियंगुठोवरि हवंति भमरा उदाहिणावत्ता ।
सोधणभोगी पुज्जो धम्ममई बुद्धिमंतोय ॥ १७४ ॥

अंगुलियात्ति । अङ्गुल्यङ्गुष्टोपरि भ्रमरीभ्रमराकाररेखावर्त्ताः स्युस्तदा सनरो धनभोक्ता, पूज्यो, धर्ममतिर्बुद्धिमांश्च, स्यात् , अत्राङ्गुल्याङ्गुष्टाग्रकथनात्तैत्रव शुक्ति चक्रादि सम्भव इति न ध्येयम् । करतलादिस्थलेऽपि तदुक्तेः सौवस्तिकशङ्खचक्राद्याकृतिरेखालङ्कृतपाणिपादतलाः स्त्रिय इति प्रज्ञापनावृत्तौ, अत्रशङ्ख शब्देन शुक्तिरिति ॥ १७४ ॥

अथ वन्ध्यत्व योगं शैवसामुद्रिकादाह—

वृक्षंवा तोरणं शक्तिर्मठदेव कुलानि वा ।
आशाखान्तं विजानीयाद्धन वन्त महाधियम् ॥ १७५ ॥

वृक्षो वेति । वृक्षः पादपः तोरणं प्रतीतं शरुषं, अशाखं पुत्रशाखावर्जितं वन्ध्यं जानीयात् धनवान् राज्याधिकारी स्यादेव, अत्र यद्यपि पादप तोरणयो महालक्षणत्वे नोक्तिस्तथापि पुत्रमुद्दिश्य दोषः, अत एव खर्जूरिकादिवृक्षाणाभङ्गणे प्रादुर्भावे सन्तानाभावो लोकेऽद्यापि प्रतीतः ॥१७५॥

पुनर्विवेकाविलास सम्मत्या फलमाह—

शफरो मकरः शङ्ख पद्मं पाणौ स्वसन्मुखः ।
फलदः सर्व दैवान्त्य काले पुनरसम्मुखः ॥ १७६ ॥

शफर इति । शफरो मत्स्यस्तथा मकरः शङ्ख, पद्म; कमलं स्वसम्मुखः

पाणितलाभिमुखः, सर्वदा फलदः मणिबन्धसम्मुखस्तु, अन्त्यकाले शुभ-फलदः । एकवचनादेकोऽपि विलोममुखतया स्थितं द्वयमपि श्रेष्ठम् ।

यतः—

एकोप्यभिमुखः स्वस्य मत्स्यः श्रीवृद्धिकारणम् ।
सम्पूर्णौ किं पुनस्तौ द्वौ पाणिमूलस्थितौ नृणाम् ॥ इति ॥

अङ्गुल्यग्रे शङ्खनिषेधादन्यत्र शुभ एव ॥ १७६ ॥

अथैषां यथोत्तरं फलवृद्धिमाह—

शतंसहस्रं लक्षं वा कोटीं दद्युर्यथाक्रमम् ।
मीनादयः करे स्पष्टा छिन्नभिन्नाद्योऽल्पदाः ॥ १७७ ॥

शतमिति । स्पष्टाः प्रकटाः छेदे भेदे वेधे वा अल्पं किञ्चिदेव फलं ददाति ॥ १७७ ॥

सिंहासने दिने शाम्या नन्दावर्तेन्दु तोरणैः ।
पाणिरेखास्थितैर्मत्स्यैः सार्वभौमा न संशयः ॥ १७८ ॥

सिंहासनेति । सिंहासनदिनेशौ दक्षिणहस्ते नन्दावर्त चन्द्रतोरणानि वामे सर्वमेतन्मिलितं सार्वभौमलक्षणम् ॥ १७८ ॥

श्रीवत्सेन सुखी चक्रे नोर्वेशि पविना धनी ।
भवदेव कुलाकारे रेखाभिर्धार्मिकः पुमान् ॥ १७९ ॥

श्रीवत्सेनेति । पविना वज्रेण धनी, श्रीवत्सेन सुखीत्यत्र श्रीवत्सोऽङ्गुष्ट मध्यपर्वणि सूर्यस्थानोवज्रं सावित्रीमूले देवकुलं, प्रासादाङ्गुष्टमूले, एतानि धर्मलक्षणानि स्युः ॥ १७९ ॥

याप्यानरक्षाश्वेभ वृषरेखान्विता कराः ।
येषां तेपरसैन्यानां हठग्रहण तत्पराः ॥ १८० ॥

याप्येति । याप्ययानं नरवाहनिकादिरथादयः प्रतीतास्तल्लक्षे न वैरि-सैन्यस्य बंदीकरणं तत्रोद्यताः ॥ १८० ॥

एकमप्यायुधं पाणौ पट्त्रिंशन्मध्यतो यदि ।
तदापरैरयोध्यः स्याद्वीरो भूमिपतिर्जयी ॥ १८१ ॥

एकमपीति । स्पष्टम् ॥८०॥

उडुपेमङ्गिनी पोतो यस्य पूर्णाः करान्तरे ।
सरूप्य स्वर्णरत्नानां पात्रं सांयात्रिकः पुमान् ॥ १८१ ॥

उडुपो लघुपानयात्रं मङ्गिनी पोताविशेषः सितपटरहिता पोतो महा-वहनमिति ॥ १८१ ॥

त्रिकोणरेखयासीरमुपलो दूषलादिना ।
वसुना हस्त जातेन पुरुषः स्यात् कृपविलः ॥१८२॥

त्रिकोणेति । शृङ्गाटका कारेण सीरंहलं मुशलः प्रसिद्धः उडूखलं खण्डन-स्थानं तदाकारस्तुतिविन्दुमात्रेण तदा कृषी वलः कर्षुकः ॥१८२॥

गोमन्तस्युर्नरा सौधैर्दामभिः पाणिसंस्थितैः ।
कमण्डलुध्वजौकुम्भ स्वास्तिकौ श्रीपदौ नृणाम् ॥१८३॥

गोमन्त इति । गवादि चतुष्पदपालकाः, सौधमैर्विमानै र्वामहस्तगतैर्गृह क्षेत्रवाटिकादिलभ्यस्य वामहस्ताद्विलोकनादिति । प्राक् कथनात् दामपुष्प स्त्रक्रज्जुर्वातैर्नराणां मकरस्थै स्त्रीणां दक्षिणकरस्थैर्नराः स्युः । सौधैरित्यत्र वहुत्व नरा इत्यत्रापि वहुत्वात् न चेत् यवैरित्यत्र बहुत्वदाम्नोऽपि बहुत्व प्रसङ्गः कमण्डलु ध्वजौ इत्यत्र द्वित्वं द्वयोः साहित्य ज्ञापकं, न चेत्, ध्वजो हस्ततले यस्ये त्यादिना पुनरुक्तिः । ग्रन्थान्तराद्वा न दोषः । कमण्डलु दक्षिणध्वजो वामे हस्ते ध्वजां कुर्यादिति हनुमत्कल्पे, एवं कुम्भस्वस्ति-कयोरपि ज्ञेयं, द्वयोरपि वामावामहस्तयोर्लक्षणात् स्वास्तिको वामे कुम्भो दक्षिणे इति स्वास्तिके वार्द्धके सुखी इति हस्तबिम्बसूत्रे प्रकरणे ' अहव वामेतो पच्छा इति भणनात् ' ॥ १८३ ॥

वाप्यां सर्व जनादेयः समुद्रे स्यान्महानृपः ।
दर्पणे ज्ञान सम्पूर्णो भिऽषेके चाभिषेकवान् ॥ १८५ ॥

वाप्यमिति । अभिषंके कमलाभिषेके राज्यवान् पट्टाभिषिक्तः ।

शस्त्रीकारे महावीरः पोते सांयात्रिकः पुमान् ।
पुस्तके शास्त्ररसिको धर्मादेवकुले भवेत् ॥ १८६ ॥

शास्त्रेति । देवकुलं प्रासादः एतस्य वन्ध्यायोर्लक्षणेऽपि धर्मित्वादेव असारत्वमिति ॥ १८५ ॥

स्वस्तिके जन सौभाग्यं वाणिज्यं स्यात्तुलाकृतौ
श्रीवत्से वाञ्छिता लक्ष्मी गवाद्यं दामकेन तु ॥१८७॥

स्वस्तिक इति । तुलाकृतिर्दक्षिणी वामे स्वस्तिके जनसौभाग्यं वाणिज्यं चेति द्वये सति फलद्वयं श्रीवत्से दाम्ना युक्ते वाञ्छिता, लक्ष्मीर्गवाद्यं चादि शब्दान्महिषाश्वादिभूयस्त्वं, गोर्ग्रहणं प्राधान्यात्, प्राधान्यमपि लोक व्यवहारात्, सिद्धान्तेऽपि वैमानिकान्तां वृषभकटकं भवनपतीनां महिषकटक मित्युक्त्या तदुक्तमेव व्रताधिकारे गवालीयं दीक्षाधिकारे वसह होइ व जाय धामे, इन्द्राधिकारे ईसाणी देविंदेव सहवाहणी, स्वप्नाधिकारे महारहे वच्छा जुत्ता तथा मुक्ता गोराज गजदेवान्, पुनर्गोरपि कर्णे प्रविश्य वदेत्, शकुनाधिकारे पूर्णकुम्भः सितोवृषः । तथा सिद्ध मन्त्र च गोमयं तथा सपत्साङ्गु सरज्जुवृषभद्वयं श्रेष्टं गोक्षतं मरणं दद्यात्, तथा गोध्वानिर्निशि उत्पात कृत् तथा धेनोर्मार्गं दत्वा गन्तव्यं, तथा सुह असहयसुदविहगगइ, तथा ब्रह्मस्त्रीभ्रुण गोवधात्पातकं महत् इत्यादिकियल्लेख्यम् ॥१८६॥

अथ लक्षणद्वदयोगे फलविशेषः शैवसामुद्रिके, तस्य आदि श्लोक पूर्वं तद्ज्ञानाय सूत्रमाह—

तुलाग्रमथवा वज्रं करमध्ये तु दृश्यते ।
वाणिज्यं सिद्ध्यते तस्य पुरुषस्य न संशयः ॥ १८७ ॥

तुलाग्रमिति । तुलाग्रवज्रयोर्योगे वाणिज्यं यत् प्रारभते सिद्ध्यते कर्तृकर्मणि—आत्मने पदं, शैवसामुद्रिकं, अष्टादशाध्यायात्मकं तत्र द्वादशाध्यायाः पुरुषलक्षणस्य षडध्यायाः, स्त्रीलक्षणस्येति ॥ १८७ ॥

यस्य मीनसमारेखा कर्मसिद्धिः प्रजायते ।
धनाढ्यः सतु विज्ञेयो वहुपुत्र प्रियायुतः ॥ १८८ ॥

यस्तेति । मीनोमत्स्य स्तदाकारात् कार्यसिद्धिः, धनपूर्णत्वं वहुपुत्रप्रिया युत इति परिवारसहित इति ॥१८८॥

पद्मं वा यदि वा शेषः कोष्ठागारं च दृश्यते ।
पुरुषस्य करे यस्य ईश्वरः स च कथ्यते ॥ १८९ ॥

पद्मेति । पद्मशब्दः पुंक्लीबलिङ्गः । स्पष्टम् ॥ १८९ ॥

लक्षणद्वय योगेऽपि त्रिकयोगमाह—

चक्राकारो ध्वजाकारः खड्गाकारश्च दृश्यते ।
सर्वविद्याप्रधानोऽयं बुद्धिमान्नृपपूजितः ॥ १९० ॥

चक्राकार इति । चक्रं ध्वजः खड्गश्चेति लक्षणत्रये विद्यासर्वशास्त्रमयी । बुद्धि साम्प्रतदर्शिनी तद्वान्, नृपमान्यश्च ॥ १९० ॥

अथ शूलफलमाह—

शूलं पाणौ यस्य पुंसः सतु धर्मरतो भवेत् ।
यज्ञधर्मदानरक्ता देवगुर्वोस्तु पूजकाः ॥ १९१ ॥

शूलमिति स्पष्टम् ॥ १९१ ॥

अङ्कुशं कुण्डलं छत्रं यस्य पाणितले भवेत् ।
तस्य राज्यं विनिर्दिष्टं समुद्रवचनं यथा ॥ १९२ ॥

अङ्कुशमिति । उक्तार्थम् ॥१९२॥

भङ्ग्यन्तरेण फलोक्तिः प्रकरणकारवाचाह—

वरपउमसंख सत्थियभद्दासण कुसुमच्छजलकुंभं ।
वसहगयच्छत्त चामरदामहय वज्जमयरं च ॥ १९३ ॥

वरेति । वरपद्मशंख स्वस्तिक भद्रासनकुसुम मत्स्यजलकुम्भाः । वृषभगज-छत्रचामरदामहयवज्रमकराश्च ॥ १९३ ॥

तोरणविमाणकेउ जस्से एहुंति करतले पयडा तस्स ।
पुणरज्ज लाहो होइ अचिरेण कालेणवा ॥ १९४ ॥

तोरणेति । तोरणविमानकेतवः यस्यैते, भवन्ति करतले भवन्ति प्रकटाः तस्य पुनाराज्यलाभो भविष्यति, अचिरेण कालेन ॥ १९४ ॥

पूर्वोक्तमेवविवृत्याह—

मच्छेण अन्नपाणं कुंभे तह पावईय सोहग्गं ।
दामेणय गोवंधं वसहे सेणाइव होइ ॥१९५ ॥

मच्छेणेति । मच्छशब्दः समसंस्कृतो धातुपारायणे मच्छेण अन्नपानं कुम्भे पूर्णकलशे सौभाग्यं पाठान्तरे सौभाग्यं भोगलाभश्च दाम्नो गोप्रभृत्ति चतुः पदलभ्यं पाठान्तरे धुतवलं तदपि स्त्रिया दक्षिणहस्ते हस्तविम्बे तथा दर्श-नात् , वृषभे सेनापतिरिति । अत्र गजादपि वृषभो पादानं प्राकूप्राधान्यात् प्रथमाजिन मात्रस्वप्ने, प्रथमदर्शनात्, अत एव कण्डूराज्यस्य गोरूपेण देव्या शिक्षादत्ता शत्रुञ्जय महात्म्ये श्राद्धविधिवृत्तौ राज्ञो न्याय परिक्षापिदेव्या गोरूपेण कृता भुवोऽधिष्टात्री देवीगोरुपेति ॥ १९५॥

होई पुण धण धन्नं आणाय सुहं च सत्थिए सुखं ।
कुंम्मेण पावइ तिहं सिरिवच्छे इच्छिया भोगा ॥ १९६ ॥

होईति । भविष्यति पुनर्धनधान्यं, आज्ञा च सुखं च स्वातिके सौख्यं, कुर्मेण प्राप्नोति स्थितिं श्रीवत्से ईप्सिता भोगाः ॥ १९६ ॥

रज्जाभिसेय पवरं पावइ भद्दासणं करे जस्स ।
पावइ अणतसुखं गजचामरछतवजेहिं ॥ १९७ ॥

रज्जेति । राजाभिषेकं प्रवरं प्राप्नोति भद्रासनं करेयस्य प्राप्नोति, अनन्त सौख्यम् । गजचामरछत्र त्रजैः ॥ १९७ ॥

मयरेण धणसहस पउमेणुक लक्ख धणवई होई ।
संखे दहकोडिवई चक्केण निही सरी होई ॥ १९८ ॥

मयरेणेति । मकरेण धनसहस्रं पद्मेपुनर्लक्षधनपतिर्भवति । शङ्खे दश-कोटिपतिश्चक्रेण निधीश्वरो भवति ॥ १९८ ॥

पावइ पच्छासुखं पच्छिममुह संविरा झुरा संखे ।
अभ्भितराणणोपुणा होइ य निरंतरं सुहं ॥ १९९ ॥

पावईति । प्राप्नोति पश्चात्सुखं, पश्चान्मुखं स्थिते ध्वजे शङ्खे, अभ्य-न्तराननें पुनर्भविप्याति च निरन्तरं सौख्यम् ॥ १९९ ॥

संपन्नसंखमच्छे पउमे भद्दासणे जवे कुंभे ।
पावइ विउला रिद्धि पुरिसो अचिरेण कालेण ॥ २०० ॥

संपुन्न इति सम्पूर्णे शंखे मत्स्ये पद्मे भद्रासने यवेकुम्भे प्राप्नोति विपुलां ऋद्धिं पुरुषः अचिरेण । अत्रचिरेणेति भणनादेव कालभावात्, कालेनेत्युक्त्या, अतिशीघ्रत्वव्यञ्जनम् । सम्पूर्ण इति वचनाल्लक्षणपूर्णत्वे फलेपि ताद्रूप्यम् ॥ २०० ॥

तदेव पाठेनाह—

अव्यक्तैश्चतयाछिन्नैः भिन्नैर्विद्धैश्चरुक्षकैः ।
लक्षणैः फलहीनत्वं धनहानिर्विनिर्दिशेत् ॥ २०१ ॥

अव्यक्तैश्चेति । अप्रकटैस्तथा छिन्नैर्भिन्नैर्विद्धैरुक्षैः कान्तिरहितैः फलहीनत्वं तथा धनहानिंच वदेत् ॥२०१॥

एकलक्षणेऽपि अनेकफलमाह—

एकमप्युत्तमं स्पष्टं लक्षणं वेधवर्जितम् ।
सर्वाङ्गीणां श्रियं दत्ते सन्ततिं बहुमङ्गलम् ॥ २०२ ॥

एकमिति । व्यक्तार्थम् ॥ २०२ ॥

॥ इतिलक्षणद्वात्रिंशिका विमर्शः ॥

अथ वंदिरेखा विमर्शः ।

अङ्गुष्ठ मध्ये केदारे सुखं राज्यं श्रियोऽथवा ।
केदार संगतारेखा स्तावत्वन्धनकारणम् ॥ २०३ ॥

अङ्गुष्ठेति । केदारः क्षेत्रं तद्रेखा सामोन्योक्तावपि गृहक्षेत्रं च वाटिकेति प्रागुक्तेर्वामहस्ते राज्ञो मध्यपर्वणि यदि स्यात्तदा राज्यं स्यात्क्षेत्रफलभोगात् तत्र पुनर्वेधकारिण्यो रेखायावत्यो मिलिताः स्युस्तावद्द्वारवन्धनम् । अत्र सुश्रुतशरीराध्याये यद्यप्यङ्गुष्ठे पर्वद्वयमेव शेषाङ्गुलीषु सन्धित्रयमुक्तं तथापि अंगुठसयमूले, तथा अंगुठस्सयमभे । तथा अङ्गुलि अंगुठोवरि इति प्रकरणे भागत्रय कथनान्न तथा वचः ॥ २०३ ॥

एनमेवार्थं सम्मत्याह—

अंगुठस्य वयमज्झेकेयारं जइह विज्ञपुरिसहस्स ।
सो होइ सुखभागी पावइ पुणखतिउरज्जं ॥ २०४ ॥

अंगुठेति । अङ्गूष्ठस्य च मध्ये केदारं यदि भवेत्, पुरुषस्य स भवति सुभागी । प्राप्नोति पुनः क्षत्रियो राज्यं, अत्र चकारात् मध्ये मूले चेत्यपि ग्राह्यम् । यवमालाया मूलेऽपि सम्भवात् क्षत्रियकथनात्, यत्र राज्यफल-कथनं तत्र क्षत्रियस्यैवानु वृत्तिर्बोध्या । कचिदन्येऽपि राजादृश्यते श्रूयते च तत्र क्षत्रियसंसर्गात् साहसेन क्षत्रियत्वाच्च न दोषः ॥२०४॥

केयार संगयाउ रेहाउ जतियाउ दीसंति तिजा ।
वंधणाइ पावइ अच्छरखयं पुरिसो ॥ २०५ ॥

केयार इति । केदारसंगतारेखा यावत्योदृश्यन्ते, तावाति वन्धनानि प्राप्नोति । अर्थक्षयं च पुरुषः ॥ २०५ ॥

अथ धनवृद्धिरेखाविमर्शमाह—

जीय रेहाउ कुलरेहा मागप्पा जस्स होइ ।
अखंडा रेहा अखुडिया से धणवुद्धिहोई पुरिस्स ॥ २०६ ॥

जिय इति । जीवरेखातः पल्लवरेखा यावदागता यस्यां भवति । अखण्डा—अविद्धा सेतस्य धनवृद्धिर्भवति पुरुषस्य ॥ २०६ ॥

मूलाधिकारलक्षणान्तरमाह—

अङ्गूष्ठमूले यः काकपदवान् मनुजोभवेत् ।
शूलरोगात्तस्य मृत्युरित्युचुः केऽपि पण्डिताः ॥ २०७ ॥

अङ्गूष्ठ मूल इति । स्पष्टम् ॥ २०७ ॥

तत्रापि सम्मतिमाह—

अंगुठस्सय हिय कागपयं जस्स होइ पुरिसस्स ।
सो पच्छिमाम्मिकाले सुलेणविवज्जरा पुरिसो ॥ २०८ ॥

अंगुठस्सेति । गतार्थम् ॥ २०८ ॥

पूर्वश्लोकेऽपि पण्डिता इति । अस्वरसबीजं तत्र कारणमाह—

कागपयसुलिहियंकरयलमज्झम्मि दीसए जस्स ।
खिप्पं सोधणमज्झइ तस्स खिप्पंच तद्दव्वं ॥ २०९ ॥

कागपयमिति । काकपदं सुलिखितं स्पष्टारेखाङ्कं करतलमध्येना-

ङ्गुष्ठमूल एवेऽस्य नियमात् । क्षिप्रं स धनमर्जयति नश्यति च शीघ्रं तद्द्रव्यम् ॥ २०९ ॥

पदरेखाविमर्शमाह—

अधोऽङ्गुष्ठागोत्ररेखो परिष्टाद्यास्तिरः स्थिता ।
तारेखापद्ददायिन्यो विद्यादायिन्य एव वा ॥ २१० ॥

अध इति । अङ्गुष्ठान्नीचैस्तथा गोत्ररेखाया उपरितिरश्चीना या रेखास्ताः पदं श्रेष्ठिनो राज्ञो मन्त्रिणो वा स्थानं यथा योगं ददाति । बहुवचनात्, एकारेखा लघुपददायिनी रेखाद्वयं मध्यम पददायकम् । तिसृभिर्लेखाभिर्महा साम्राज्यपदं दीर्घायुष्कतया दत्त इति भावः वा इति पक्षान्तरे विप्रादेर्वे द्यांददतीतिज्ञेयं, न च विप्राः पृथ्वीयोग्या इति सूक्तेः । ननु-अधोऽङ्गुष्ठादित्यादिकश्लोकोक्ता एका १ विद्याचाङ्गुष्ठम् लजैरिति वक्ष्यमाणाद्द्वितीया २ विद्याख्यातिर्विभूतिः स्याद् यवोह्यङ्गुष्ठमध्यगे इति तृतीया विद्यारेखातु करभान्निर्गता इति चतुर्थी । मणिवंधाउरेहा अंगुठ पएसिणी णमझगया इत्युक्त्या पंचमी । एवं वामा वामयोस्तथा रेखाभिर्दशधाविद्यारेखा एवं भाग्येऽपि विमर्शस्तथा च कथं निश्चयात्फलालाभ इति चेत् न विज्जाकुलधणरुवमित्यादिना प्रकरण कारेण मुख्य रेखा विषयी कृतायाः करभान्निर्गता कोश सम्मुखीति प्रतिपाद्या एव रेखा विद्या लक्षणात्, अन्यत्र तत्त्वलक्षण रेखाणां फलोत्कर्षसम्पादनमेव एवं भाग्ये यशः प्रभृतौ वा ज्ञेयं विद्या वैचित्र्याद्भाग्यादिवैचित्र्याद्वासमाधिः । अत्र सामदानदण्डभेदरूपोपायादिलक्षणा विद्याबोध्या ॥ २१० ॥

भाग्यरेखाविमर्शमाह—

कनिष्ठातस्तनुरेखा सम्मुखा मात्ररेखिका ।
साभाग्य रेखा कथिता निर्वेधासुखकारिणी ॥ २११ ॥

कनिष्ठात इति । कनिष्ठामूलपर्वणो निर्गता जीवरेखा सम्मुखा भाग्य रेखा प्रोक्ता गुह्यस्थानतया नन्दाभद्रयोर्मूलेन वा योनिदैवत नक्षत्र प्रत्या-

---

१ ऋषेश्च.

सत्या अत्रैवोचित्यात्, अतएव सूति कास्थानं तारामूलमिति, सम्मुखेत्यत्र स्वाङ्गाद्वैकल्पिकोङीप्रत्ययः ॥२११॥

अत्र मतान्तरमाह—

अङ्गुष्ठेतु यवे र्भाग्यं विद्यायाचाङ्गुष्ठमुलजे ।
ऊर्ध्वाकारापुनः पाणितलेरेखा महाश्रियै ॥ २१२ ॥

अङ्गुष्ठ इति । तुशद्वाद्विशेषोऽयं, अङ्गुष्ठे यवैर्बहुभिर्भाग्यं भाग्य-रेखा । विद्याङ्गुष्ठमूलजैर्यवैरिति राजाश्रयत्वाद्भाग्यं राजलभ्यं च समुच्चये विद्यापि योगवदाश्रयाजीवाजीव तत्त्वज्ञानयोगसाधनरूपा, अत्राङ्गुल्या । राजविधावातेन पूर्वोक्तेन विरोधोऽपिन । अन्यथा या ऊर्द्धरेखा सैवभाग्यरेखा पञ्चधापि शुभफलोदयात् ॥ २१२ ॥

अथ विद्यया लक्ष्म्या वा पूज्यत्वमिति पूज्य रेखा तद्भावेनैव भाविता प्रकरणमते तु पृथगपि ततस्तदुक्त्यातामप्याह—

कणयांगुलिमूलो वरि रेहाउ जस्स तिन्निचतारि ।
सो होइ पुत्तभोगी रायाईणम्पि न भणियं ॥ २१३ ॥

कणयांगुलीति । कनकाङ्गुलीमुलोपरि रेखातिस्रश्चतस्रवा सम्भवति पुत्रवान् भोगी वा राजादीनामपि नमनीयः । कनकेति काञ्चनीनाम्ना कनिष्ठाङ्गूलिस्तस्यामूले मूलपर्वणि, उपरितस्या एव उर्ध्वपर्वणि नखभागस्थाने रेखा इति बहुवचनं बहूनां पूज्यत्वसूचकम् ॥ २१३ ॥

जित्ता उदाहिणकरे मूले रेहा उ ताव जाणपुज्जो ।
अइवाभे तो पुच्छा सेवा वाणिज्ज धणुपुरउड ॥२१४॥

जिता उइति । यावत्यो दक्षिणकरे मूलरेखास्तावत्प्रमाण वयस्सु जनपूज्यः, एकरेखायां प्रथमवयसि रेखाद्वयेबाल्ये तारुण्ये च रेखात्रये बाल्यतारुण्य-वृद्धावस्थासु पूजालभते । अहवा मइति । अथ चेदक्षिणकरे रेखा नस्युर्वा-महस्ते मूले रेखास्युस्ततः पश्चाद्काले सेवाकस्यापि नृपादेः वाणिज्यं श्रेष्ठिना सह ताभ्यां धनलाभः पुरतो यथोत्तरमिति ॥ २१४ ॥

अथ धर्मरेखाविमर्शमाह—

शिवाधःस्या धर्म रेखा मध्यातो जीवीतोन्मुखी ।
कथयेदुदरे पीडामाद्यायाः स्यातुदीक्षणम् ॥ २१५ ॥

शिवाधःस्थेति । शिवा भगवती सावित्रीत्यर्थः । श्री क्रमसंहितायां शम्भुपत्नी श्रियरुद्धा इत्यनेन ह्रींकाँरः शम्भुपत्नी तन्न्यासः सावित्र्यां तेनेयमपि शम्भुपत्नी । तदधिष्ठाने तद्व्यहारात् यक्षाधिष्ठित जल्पने, यक्षोऽयं जल्पतीत्यादिवत् । तस्या नैचैरुर्द्धायुर्लेखा सम्मुखी धर्मरेखा तस्या एव जाप प्रारम्भात्, मध्याङ्गुलिनिर्गता जीवितरेखाभिमुखी किञ्चित्तिरश्चिना हस्तविम्बन्थास गम्या उदरे वायुपीडां कुर्यात् । लक्षयतीत्यर्थः । आद्याया-स्तर्जन्या अधःस्थिता रेखा दीक्षणं प्रव्रज्यां कुर्यात्, दीक्षारेखा हस्तबिम्बे करभसम्मुखा केचित्तु मणि सम्मुखी माहुर्निश्चयो वहुश्रुतगम्यः । तत्रापि वारचक्राद्धस्तवीक्षणे यो वारः प्राप्यस्त सम्बन्धिनी दीक्षेत्यर्थः । आदित्या धैर्वलिभिर्भवति च पुंसां तथा क्रमं दीक्षा । तापस १ कापिल २ सौगत ३ भागवत ४ यति ५ चरक ६ जैना ७ मिति ज्योतिः शास्त्रात् वारेशुक्रे प्राप्ते तिथिर्वात्मनो नक्षत्रे शन्यधिष्टानकनिष्ठाङ्गुल्यां प्राप्नोति चेत् सितपट दीक्षावारे शनौप्राप्ते तिथौ स्वनाम नक्षत्रे वा निष्ठाङ्गुलिं प्राप्ते दिक् पटे दीक्षेत्यादि सुधियोऽन्वेयम् ॥ ११५ ॥

धर्मरेखायां सम्मतिमाह—

अनामिकाद्य सर्वस्था प्रतिरेकाप्रभुत्यकृत ।
उर्ध्वापुनस्तले तस्यां धर्मरेखेयमुच्यते ॥ २१६ ॥

अनानिकेति । आद्यं मूले पर्वराशिनक्षत्रादे स्तत एव प्रारम्भात् प्रति-कुला—वक्रा रेखा प्रभुत्वमैश्वर्यं धनस्तजन वाहनाज्ञा प्रवृत्या करोति भगवती मूलात् शेषं स्पष्टम् । विवेकविलासे अनामिकान्त्य पर्वस्था इति तत्र नख-भागादेव व्यवस्था यदि धर्मरेखा शिवा मूलान्निर्गत्यत्रिवेण्यां प्रविशति तदाऽत्यन्तं धर्मवान् सुगतिश्चपरं अनामिकान्त्य रेखायाः कनिष्ठा स्याद्य-दाधिका इति तदुक्तिरेव दुर्बोधा ॥ २१६ ॥

रेखायामध्यमस्थाभ्यामाभ्यां प्रोक्तो विपर्ययः ।
तर्जनीगृहबन्धान्ता रेखास्यात्सुख मृत्युदा ॥ २१७ ॥

रेखाभ्यामिति । पूर्वोक्तं रेखाद्वयं चेत् मध्यमाङ्गुल्यां तदाविपर्ययः अनैश्वर्यं अधर्मश्चेति ज्ञेयः । हस्तविम्बे तु वामहस्ते अनैश्वर्यं दरिद्रत्वमिति । दक्षिणेतूदरव्यथेति विशेषः तर्जनी तथा ग्रहबन्धो रेखात्रय योग स्त्रीवेणी तयोरन्तर्मध्ये रेखा सुखेन समाधिना मृत्युं दत्ते । ग्रन्थान्तरानुरोधादिदं तेन वक्ष्यमाणेन न पुनरुक्तिः ॥ २१७ ॥

प्रकरणे धर्मरेखा बहवस्तत् स्थानभेदश्च तेन यदुक्तमाह—

जेठायनामियाणं मज्झाउ निग्गया उवयरेहा ।
तम्मूले जाणुपुणो तातुइय धर्मरेहा उ ॥ २१८ ॥

जेठाय इति । ज्येष्ठानामिकयोर्मध्य भागान्निर्गता जीवित रेखा सम्मुखी सात्रतरेखात्रतमल कुलधर्मस्तपोवा यमनियमरूपं वा तस्य लक्षणं तस्या व्रतरेखायास्तयोर्ज्येष्ठानामिकयोर्वा मूले या रेखास्तास्तिस्रश्चतस्रोवा धर्मरेखा इति ॥ २१८ ॥

तासुवरितिरिच्छिज्जा सापुण मगुतणी भवे रेहा ।
अखुड पल्लव दीहा राईहि सेविया पवरा ॥ २१९ ॥

तासुवरिति । तासामुपरि तिरश्चीना या रेखा सामार्गणत्वस्य रेखा भवेत् सा चेत्, अप्रकट पल्लवा पल्लवरहिता दीर्घा च स्यात्तदा राज्ञीभिः सेवित महालोकैः परिकलिता प्रवरा श्रेष्ठा सर्वत्र मान्याभिक्षा स्यात् ॥ २१९ ॥

इयमेव पदरेखापीत्याह—

सोहवइवायणारी कणिट्ठिया हिट्ठयागया जस्स ।
उज्झायणामियाणवयठहिठा यते सूरी ॥ २२० ॥

सोहवईति । स भवति वाचनाचार्यः कनिष्ठाया अधो यदाभिक्षा रेखास्यात् यस्य पुंसः । अनामिकाया अधोभिक्षारेखा प्राप्तौ उपाध्यायः पुनर्व्रतरेखाया अधोयावत्प्राप्ताभिक्षारेखा कनिष्ठा मूलादारभ्य मध्याङ्गुलिमूलं यावल्लम्बा यस्य स्यात् स सूरिराचार्यो गणनाथ इति ॥ २२० ॥

अथ गृहबन्धरेखायोगमाह—

गत्वा मिलितयोः प्रान्ते द्रव्यपित्रोश्चरेखयोः ।
गृहबन्धोविनिर्देश्यो गृहभङ्गोऽन्यथा पुनः ॥ २६१ ॥

गत्वेति । पितृरेखाधनरेखयो स्त्रिवेण्यांमिलने गृहबन्धस्तेन निर्वाहयः पितृ-मातृ स्वात्मरुपरेखाचययोगात्, अन्यरेखाणां तास्वेव मिलनात्, उपलक्षणात् राज्यसमुदाय पञ्चकुलन्यायव्यवस्थादिबन्धा, अपि ज्ञेया: । अन्यथा सर्व-व्यवस्था विनाशो वाच्यः । अन्यदपि मातापित्रो रन्योन्यं स्नेहस्तत्सम्बन्धि द्रव्यलाभः, धर्मानुरागः पितृभक्ति रित्यादिलक्षणीयं पुनः शब्द-कथनात् ॥ २२१ ॥

अथ मृत्युरेखामाह—

मृत्युरेखां विजानीयात् समुद्रात्करभोन्मुखी ।
तदधोऽपि द्वितीयाया ग्रथिलं कुरुते जनम् ॥ २२२ ॥

मृत्युरेखामिति । समुद्रात् पूर्वसमुद्रात् करभसम्मुखां जानीयात् बुधः, तस्या अधस्त्रिवेण्यान्तराले द्वितीया यारेखा स्यात्, सा ग्रन्थिलं भूताविष्टं सान्निपतिकं वा कुरुते लक्षयतीत्यर्थः । सूतिकास्थानेऽधोमुखरेखया हर्षरेखा भेदे भगन्दरोरेखाभावे क्लीबत्वमवीर्यत्वं वा गुह्यस्थानात् सूक्ष्मरेखायां प्रमेही रेखा-छेदे सौविदल्ल इतिलक्षणीयमित्यपि शब्दाद् ग्राह्यम् ॥ २२२ ॥

एतदेव सम्मत्या द्रढयति —

कुलरेहाए उवरिं मूलं मियरासिणी जजारेहा ।
परदेसे मरणं तण्डया इसदेश मरणं च ॥ २२३ ॥

कुलेति । गोत्ररेखाया उपरि मूले प्रदेशिन्याया रेखा, तया रेखया सेइति मागधसाषया तस्य परदेशे मरणं, तया तन्व्या स्वदेशमरणं तत्रापि वार चक्राद् यो वार हस्तेक्षणे प्राप्तस्तद्धातु प्रकोपात्, वातादिस्वरूपं तु तत्तद्रेखाभिः ॥ २२३ ॥

अत्रार्थे भोजवाक्यमप्याह—

**मृत्युरेखाद्यत्रिवेण्या अन्तरे ग्रथिलं नरम् ।**
**करोति निर्गताम्भोधेः सम्मुखी करभस्य सा ॥ २२४ ॥**

मृत्युरेखेति । त्रिवेण्यारेखात्रययोगस्य मध्ये यत्तु सूत्रे द्रव्यपितृरेखयोरेव योगस्तदभाविकाले आयुर्हानिसम्भवे तद्रेखाया, असम्बन्धात्, गंगायापि प्रवाहरोधात्, यदुक्तं—भविष्योत्तरपुराणे—

कलौदशसहस्रान्ते विष्णुस्त्यक्षति मेदिनीम् ।
तदर्द्धं जाह्नवी देवी तदर्द्ध सर्वदेवता ॥ १ ॥

जैननयेऽपि जम्बूद्वीप प्रज्ञप्ति सूत्रे गङ्गाप्रहवाहस्य रथचक्रवाल प्रमाण-विस्तारोक्तिः, षष्ठारके तत एव हंसामयं गतीराए । इत्युत्तराध्ययनसूत्रे मृतगङ्गेति पाठः ॥ २२३ ॥

अथ मृत्युरेखा प्रसंगादेव सूतिकास्थानरेखामप्याह—

**करभाच्चकनिष्ठाधः स्त्रीरेखाम्भोधिसम्मुखी ।**
**मित्ररेखापि सैवोक्ता स्फुटिता किञ्चिदानने ॥ २२४ ॥**

करभादिति । करभान्निर्गता पूर्वसमुद्राभिमुखी कनिष्ठाया अधोभागे स्त्रीरेखा प्रसूतिसमये प्रत्यासन्ना यावत्यः स्त्रियस्ता सां प्रमाणलक्षणं दक्षिण-हस्ते कायतीर्थेऽन्यस्त्रीरेखाऽयोगात् । सैवरेखा किञ्चिन्मुखे भेदं भजते तदा-मित्राणि मातृपक्षमित्राणि पितृपक्षमित्राणि पितुर्मित्राणि वा पुत्रजन्मसमय मेलनात्तेषां रेखा उक्ता । तावन्तः पुरुषा जन्मसमये प्रत्यासन्नास्युरित्यर्थः । स्वमित्राणां दक्षिणहस्ताङ्गुलीपर्वसुस्थानादेवंव्याख्या ॥ २२४ ॥

पदरेखामाह—

**शिवाधस्तनु रेखान्तास्तिर्यक् सापददायिनी ।**
**अङ्गुष्ट पितृरेखान्तस्तिर्यग् रेखेति केचन ॥ २२५ ॥**

शिवाध इति । भिक्षारेखैव कनिष्ठा मूलादारभ्य मध्यामूलं यावत् यथोत्तरं लम्बत्वे वर्द्धमाना पददायिनी, तथैव सविस्तरं प्राग् व्याख्यातत्त्वात् । अङ्गुष्ठमूले पितृरेखायान्तर्विचालेतिरश्चिना पदरेखेति केचनाचार्याः प्राहुः— पदरेखया एवपदस्यापि लक्षणात् केचनेत्यस्वरसख्यापनं राज्ञो-

मूले राज्यपटरेखयास्तथा धर्मरेखा प्रत्यासत्त्या, आचार्यादि पदरेखायाश्च पृथग्भावे नैवयुक्तत्वात् ॥ २२५ ॥

अथ वाहनरेखामाह—

समुद्रान्निर्गता गोत्ररेखान्तर्नृपमूलगा ।
वक्राश्वरेखा निर्दिष्टा समापर्यङ्क्किकांदिशेत् ॥ २२६ ॥

समुद्रादिति । पूर्वसमुद्रान्निर्गता गोत्ररेखायामध्ये नृपस्याङ्गुष्ठस्य मूलगता हस्तबिम्ब एव सुखोन्नेया वक्रा, अश्ववाहनं दत्ते सा समास्यात्तदा पर्यङ्क्किकां वाहानिकां दत्ते दरिद्रारेखादि तद्बाधक लक्षणा भावेसाति ॥ २२६ ॥

केषाञ्चिन्मते स्त्रीरेखा अङ्गूष्ठमूल इति तन्मत परमार्थमाह—

अङ्गूष्ठमूलेया ऊर्ध्वरेखा स्त्रीसंगमप्रदा ।
तिरश्चीना पदरेखा मतमेतत् क्विचिन्मतम् ॥ २२७ ॥

अङ्गूष्ठेति । अङ्गूष्ठमूले या ऊर्ध्वरेखा स्तावत् स्त्रीप्रसङ्गंददति । स्त्रीय-परकीयोदुढामदूढसर्व स्त्रीसाधारण सूत्रमिदम् । स्त्रीअङ्गूष्ठमूल एव पदरेखा सिंहासनादेस्तत्र लक्षणात्, एतमतं क्वचिन्मतं इष्टं हस्तबिम्बतु तीरश्चीना पदरेखा पृथगेव, यदुक्तं चेदं स्वमतेऽपि अङ्गूष्ठपितृरेखान्तरे तिर्यग् रेखायाः प्रागेव भणनात्, अङ्गूष्ठमूले मूल पर्वाणि तिरश्चीना पदरेखा इत्येवं मतान्तरम् ॥ २२७ ॥

भाण्डागारभोगयोः स्थानमाह—

गोत्ररेखा धनरेखान्तराले कोश इरितः ।
आयुर्धनान्तरे भोगोयशोऽङ्गूष्ठपर्वगम् ॥ २२८ ॥

गोत्रेति । गोलधनरेखयोर्मध्ये भाण्डागारस्थलं, आयुर्द्रव्यलेखयोर्मध्यभागे धनभोक्तृत्वरेखा तदभावे कृपण भावः अङ्गूष्ठमूलपर्वणि, आयता रेखा यशो रेखा, सर्वत्रकार्ये तस्य यशः प्राप्तेः कनिष्ठामूले भाग्यरेखैव यशोरेखेति केचित् ॥ २२८ ॥

रेखाप्रसङ्गात्तिलक्षणमाह—

तिलो हस्ततले राज्ञां निन्द्यः सवणिजां शुभः ।
ध्वजो वणिजां श्रेष्ठो देशभ्रमणकारणात् ॥ २२९ ॥

तिल इति । राज्ञां क्षत्रियाणां हस्ततले तिलः अप्रशस्तः तिलस्याल्प-बीजत्वात् राज्ञां सर्वोत्तमसाहसबीजत्वात्, रक्ततिलस्तेषामपि श्रेष्ठ एवेति केचित्, क्षत्रियाणां रक्तवर्णत्वात्, वणिजां व्यापारकारिणां शुभस्नेहस्थान-त्वात्, ध्वजः क्षत्रियाणां श्रेष्ठः ध्वजवज्राङ्कुशछत्रशङ्खपद्मादयस्तले पाणिपादे प्रदृश्यन्ते, यस्यासौ श्रीपतिः पुमान् ॥ १ ॥

शक्तितोमरदण्डासिधनुश्चक्रगदोपमा, यस्य हस्ते भवेयुस्तम् राजानं च विनिर्दिशेदिति । प्राचां वचनेन राजचिह्नत्वात्, वणिजां न ध्वजः श्रेयान् देशभ्रमणलक्षणत्वात्, एवं शुभलक्षणमपि जातिभेदादशुभं तथा देशभेदा-त्कालभेदावपि शुभमशुभं वा यथायोगं बोधव्यम् तत एव ध्वजावृद्धत्वे सुखीति पूर्वमुक्तम् ॥ २२९ ॥

यात्राविद्ययोरखेप्राह--

यात्रारेखाङ्गूष्ठ मूलान्निर्गता पितृसङ्गता ।
विद्यारेखातु करभान्निर्गता कोशसम्मुखी ॥ २३० ॥

यात्रेति । तीर्थयात्रामङ्गुष्ठमूलान्निर्गता पितृलेखाया मिलिता लेखा लक्ष-यति । विद्याशास्त्रपठनपाठनरूपा तस्यालेखा करभादेव निर्गता कोशसम्मुखी प्रागुक्तहस्तरूपजन्मपत्रे बुद्धिस्थानात्, गणितसङ्गितनाट्यादिविज्ञानविद्या चातुर्थं वा वामहस्ते विद्यालेखया लक्षणीयम् । लेखक कर्मविद्या पुंसोऽनामि-कायां मध्यपर्वणि आयतरेखया लक्षणीया ॥ २३० ॥

वाणादिप्रहार–रेखामाह—

विद्यामण्यो रन्तराले या रेखावक्ररूपिणी ।
वाणप्रहारं कुरुते समोदर गलव्यथाम् ॥ २३१ ॥

विद्यारेखामणिबन्धस्तयोर्मध्ये वक्रारेखावाणप्रहारं दत्ते आयुधं गृहस्य नैरित्तिस्थानात् तत्रैव समारेखा उदरे प्रहारङ्गुले पृष्ठभागेवा प्रहार-लक्षणम् ॥ २३१ ॥

